परन्तु वह नन्दिनी गाय विश्वामित्र के साथ जाना नहीं चाहती थी। इसलिए उस नन्दिनी ने बार-बार (जगह-जगह) भूमि को खोद दिया ॥२॥

तब वसिष्ठ ने अपने कुलमित्र वरुण से सहायता की इच्छा की। वसिष्ठ के साथ हुई वरुण की इस मित्रता को वेदों में कहा गया है ॥३॥

यह वरुण देवयुग में बाह्लीक देश का राजा हुआ है। यह पारस्थान का स्वामी था, सातों समुद्रों का और असुरों का स्वामी था ॥४॥

वरुण की आज्ञा प्राप्त करके पारस्थाननिवासी पाँच गण पह्लव, पारद, यवन, शक और काम्बोज तथा अन्य दरद आदि ने नन्दिनी के खुरों को धारण करके श्रद्धापूर्वक प्रणाम किया और विश्वामित्र की सम्पूर्ण सेना को सफलतापूर्वक नष्ट कर दिया ॥५—६॥

उस समय से ही वे लोग खुरध (खुर को धारण करने वाले), खुरद और कुर्द कहलाये तथा उनका राष्ट्रसंघ खुर्दस्थान अथवा खुरासान कहलाया ॥७॥

मुगलसम्राट् बाबर ने अपनी जीवनी में खुरासान का उल्लेख किया है। अफगानिस्तान और बलूचिस्तान के कुछ लोग आज भी ऐसा कहते हैं ॥८॥

भारतवर्ष के लोगों ने भी उस प्रदेश का इसी शब्द से उल्लेख किया है, जैसा कि "शक्तिसंगमतंत्र" में लिखा है ॥९॥

हे देवेश्वरि! हिंगुपीठ से मक्केश (मक्का) पर्यन्त खुरासान नाम का प्रदेश है, जो आज म्लेच्छमार्ग से युक्त है अर्थात् म्लेच्छों के मत को मानने में परायण है ॥१०॥

## पश्चिमभारते ईरानशब्दोऽप्यार्य्यनिवासमूलकः ।

२— एवं पुनरिदमखिलं जनपदवृन्दं च सिन्धुतः पश्चात्।
भूमध्यसागरात् प्रागासीदीराननाम्नैकम् ॥११॥
ईरानव्यपदेशे त्वार्य्यायणतेरणत्वमरणत्वम्।
मूलमथर्वणि तदरणमुक्तं त्वार्य्यद्विषां वासात् ॥१२॥
आर्य्यद्वेषिजनानामरणानां बाह्लिका देशाः।
अपि मूजवन्त एवं महावृषा वा विशिष्यासन् ॥१३॥
अथवा कम्पनशीले प्रयुज्यते शब्द ईराणः।
भीतानां चानियताभिजनानां देश ईराणः ॥१४॥
द्वादशकाण्डे प्रथमे सूक्तेऽष्टाविंशके मंत्रे। (अथ०१२।१। २८)
आथर्वणे स शब्दः प्रयुक्त आन्दोलितेऽर्थेऽस्ति ॥१५॥

उदीराणा उतासीनास्तिष्ठन्तः प्रक्रामन्तः ।
पद्भ्यां दक्षिणसव्याभ्यां मा व्यथिष्म हि भूम्याम् ॥१६॥
(अथ०१२।१/२८)

## पश्चिम भारत में ईरान शब्द भी आर्यों का निवासमूलक शब्द—

२—इस प्रकार सिन्धु नदी से आगे तथा भूमध्यसागर से पूर्व का सम्पूर्ण राष्ट्रसंघ ईरान नाम से कहा जाता है ॥११॥

"ईरान" शब्द में आर्यायणता, ईरणता और अरणता शब्द हैं, अथर्ववेद में इनका मूल आर्यों के शत्रुओं का निवासस्थान होने के कारण "अरण" (शत्रु). शब्द को बताया गया है ॥१२॥

आर्यों से द्वेष करने वाले अरणों के देश बाह्लीक में रहने वाले लोग मूजवान् और महावृष कहलाते थे ॥१३॥

अथवा कम्पनशील के लिये "ईराण" शब्द का प्रयोग किया जाता है। इसीलिए डरे हुए और अनियमित निवासभूमि वाले, जिनकी सेनाएँ डरकर भाग रही हैं, लोगों का देश "ईराण" है ॥१४॥

अथर्ववेद के १२ वें काण्ड के प्रथम सूक्त के २८वें मंत्र में "ईराण" शब्द आन्दोलित (कम्पनशील) के अर्थ में प्रयुक्त हुआ है ॥१५॥

"आन्दोलित होते हुए, बैठे हुए, खड़े हुए, दाहिने और बाँये पांव से टहलते हुए भूमि पर हम किसी को दुःख न दें। हम किसी के दुःख का कारण न बनें ॥१६॥ (अथर्व. १२/१/२८)

## पश्चिमभारते ओरियंसपारस्थानखुरासानादिशब्दानां शासनभेदेन भिन्न-काले प्रयोगाः।

३—इत्थं पश्चिमभारतमुक्तं क्वचिदोरियंसनाम्ना प्राक्।
पारस्थानं क्वचन क्वचन खुरासानमीरानम् ॥१७॥

## ईरानखुरासानपर्सियादिशब्दानां महादेशवाचिनामपि कालभेदेन तत्प्रान्तमात्राभिधायित्वम्।

४— अद्य तु नैवं ब्रुवते नायं देशः समग्र एकोऽस्ति।
प्रान्तः पारस्थानं प्रान्त इरानं खुरासानम् ॥१८॥
राज्ञां शासनभेदाद् व्यवहर्तॄणांच भेदतोऽज्ञानात्।
प्रान्तं हिरातसंज्ञं केवलमाहुः खुरासानम् ॥१९॥

शासनभेदात् पश्चादफगानस्तानतः खुरासानम्।
तत ईरानमिराको रोमकसामोऽथ पश्चिमाम्भोधिः ॥२०॥
अपि सीरियेति रोमकसामप्रान्तं विदुस्तथेराकम्।
कैलडिया चासुर्य्या मेसोपोटेमिया चेति ॥२१।
मिडिया नाम्नाऽप्यासीदा च खुरासानमन्वितः प्रान्तः।
अद्यत्वे पर्य्यायादीरानं पर्सियेत्याहुः ॥२२॥
अपि वास्ति काश्यपीयनसिन्धोराग्नेयतः खुरासानम्।
तद्दक्षिणत इराकं तद्दक्षिणतस्तु पारस्यम्॥२३॥

५— क्रान्तिप्रधान एषोऽस्त्यापृथिवीजन्मतो देशः।
इह परचक्रक्रांतिर्यथाऽभवन्न हि तथाऽन्यत्र॥२४॥
तस्मादनेकसीमा नामविभागाश्च दृश्यन्ते।
क्षुद्रैशियाप्रदेशादासिन्धोरस्य देशस्य ॥२५॥

## शासनभेद से समय-समय पर पश्चिमी भारत में ओरियन्स, पारस्थान और खुरासानादि शब्दों का प्रयोग—

३—इस प्रकार प्राचीन समय में पश्चिमी भारत को कहीं "ओरियन्स", कहीं पारस्थान, कहीं खुरासान और कहीं ईश्वर शब्द से कहा गया है॥१७॥

**ईरान, खुरासान, पर्सिया इत्यादि शब्दों का विशाल देशवाचक होते हुए भी समय बदलने पर मात्र प्रान्तवाची हो जाना—**

४—आज तो ये देश न तो समग्र रूप से एक देश के रूप में हैं और न ही एक देश के वाचक कहे जाते हैं, अपितु पारस्थान प्रान्त, ईरान-प्रान्त और खुरासान-प्रान्त के रूप में सीमित रह गये हैं॥१८॥

महादेशवाची खुरासान शब्द से आज शासकों के परिवर्तित होने के कारण, व्यवहार करने वालों के भेद से अथवा अज्ञानतावश मात्र "हिरात" नामक प्रान्त को ही कहा जाता है॥१९॥

परवर्ती काल में शासनभेद से अफगानिस्तान से खुरासान और इसी प्रकार फिर ईराक, ईरान, रोम, साम इत्यादि पश्चिम समुद्र की संज्ञाएं हुईं॥२०॥

तथा असुर जाति के लोग रोमक और साम प्रदेश को सीरिया तथा ईराक को कैलड़िया और मेसोपोटेमिया नाम से कहते हैं ॥२१॥

खुरासान से मिले हुए प्रान्त को "मीडिया" के नाम से भी कहा जाता था, जो आज पर्याय रूप में ईरान और पर्सिया कहा जाता है॥२२॥

अथवा काश्यपीयन समुद्र (Caspian sea) के अग्निकोण में खुरासान प्रान्त है, इसके दक्षिण में ईराक और उसके भी दक्षिण में पारस (पर्सिया) नामक प्रान्त है॥२३॥

५— यह देश (सम्पूर्ण भाग) पृथ्वी के जन्म से ही क्रान्ति (विद्रोह) प्रधान रहा है। यहाँ परचक्र-क्रान्ति अर्थात् दूसरे देशों के आक्रमण जिस तरह के हुए हैं, वैसे अन्यत्र कहीं नहीं हुए॥२४॥

क्षुद्रैशिया (एशिया माइनर) से समुद्र तक इस देश के युद्ध-प्रधान होने के कारण ही यहाँ अनेक सीमाएँ, नाम और विभाग बदलते देखे गये हैं ॥२५॥

## नियतसंज्ञाव्यवस्थापकभारतीयानां भुवनकोशशास्त्रे शासनमूलकसंज्ञाप्रभेदानामनादरः।

**६—अस्तु तु यद्वा तद्वा शासनभेदात्तु देशभेदोऽयम्।**
**न च तच्छास्त्रं वक्तुं शक्यं तस्याव्यवस्थानात्॥२६॥**
**तस्मादिह भूगोलग्रन्थो वैदेशिको नितराम्।**
**शास्त्रं तथा यथेदं व्यवस्थितं भारतं शास्त्रम्॥२७॥**
**शासनदेशविभागो नियतो न भवति हि तेन तमुपेक्ष्य।**
**आर्य्या व्यवस्थितं प्राग् देशविभागं निसर्गजं ददृशुः ॥२८॥**
**देशप्रकृतिः शास्ता न तु शास्तृप्रकृतिको देशः।**
**अस्तु च शास्ताऽन्योऽन्यो मुञ्चति देशो न चात्मनः प्रकृतिम्॥२९॥**
**तस्मात् सिन्धोः पश्चिमदेशोऽद्य तु शास्तृभेदेन।**
**यद्यपि पृथगिव दृष्टो वस्तुत इदमस्ति भारतं वर्षम्॥३०॥**

**इत्यवरयुगीयाः संज्ञाविशेषा द्वितीयं प्रमाणम् ॥२॥**

## निश्चित नाम की व्यवस्था करने वाले भारतीयों के भुवनकोश-शास्त्र में शासन के आधार पर नामपरिवर्तन को महत्त्व नहीं दिया जाना—

६—शासनभेद से जो भी देशभेद होते रहे हैं, शास्त्र में उस शासनभेद से हुए परिवर्तित नाम का वर्णन नहीं किया जा सकता है, क्योंकि ऐसा करने पर अव्यवस्था हो जाती है॥२६॥

इसीलिए विदेशियों का भूगोलशास्त्र पूरी तरह से उतना व्यवस्थित नहीं है, जितना भारतीय भूगोलशास्त्र व्यवस्थित है ॥२७ ॥

शासनभेद से देश का विभाजन करना कभी निश्चित नहीं होता है। इसलिए आर्यों ने इसकी उपेक्षा करके पहले से ही प्रकृति के आधार पर देश का विभाजन करना उचित समझा ॥२८ ॥

शासन देश की प्रकृति (भौगोलिक स्थिति) के अनुसार होने चाहियें, न कि शासकों की प्रकृति (स्वभाव) के अनुसार देश। क्योंकि भले ही शासक अलग अलग बदलते रहें, परन्तु देश अपनी प्रकृति उसके अनुसार नहीं बदलता है ॥२९ ॥

इसलिए सिन्धु नदी का पश्चिमी भाग यद्यपि शासकों के भेद से पृथक् दिखाई देता है, वस्तुतः यह भारतवर्ष ही है ॥३० ॥

**इस प्रकार परवर्ती युग के संज्ञाविशेष**
**से सम्बद्ध द्वितीय प्रमाण समाप्त हुआ ॥२ ॥**

## इन्द्रवरुणनिमित्ते ब्राह्मणानां वैज्ञानिकं वाग्युद्धं तृतीयं प्रमाणम् ॥३ ॥

**भारतवर्षविभागद्वयहेतुर्ब्राह्मणानां प्राक् ।**
**वैज्ञानिकवाक्समरस्तृतीयमस्ति प्रमाणमिह ॥३१ ॥**
**आसुरधर्मे प्रविशतो जरथुस्त्रस्य देवेन्द्रनिन्दकत्वं विरोधहेतुः ॥**
**बाह्लीके यो जज्ञे जरथुस्त्रस्तस्य समये प्राक् ॥**
**सौत्रामण्यामिष्टौ ब्राह्मणवृन्दे विरोधोऽभूत् ॥३२ ॥**
**आर्ज्राश्वो जरदष्टिर्ब्राह्मण आसीत् तथाप्ययं धृष्टः ।**
**विद्विष्य देवमिन्द्रं वरुणस्तुद् धर्ममासुरं दध्रे (१)**
**येऽसून् प्राणान् दधते तेऽमी असुरा महाप्राणाः ।**
**असुरत्वं तु न येषां तेऽमी देवाः "सुराः स्म" इत्यूचुः (२)**

## इन्द्र और वरुण को निमित्त मान कर ब्राह्मणों में वैज्ञानिक वाग्-युद्ध रूप तृतीय प्रमाण—

प्राचीन काल में भारतवर्ष के दो भागों में विभक्त होने के कारण ब्राह्मणों में वैज्ञानिक वाग्युद्ध होना, यह तीसरा प्रमाण है ॥३१ ॥

आसुर धर्म में प्रवेश करने के पश्चात् 'जरथुस्त्र' का देवराज इन्द्र का निन्दक हो जाना विरोध का कारण हुआ। प्राचीनकाल में बाह्लीक देश में पैदा हुए जरथुस्त्र द्वारा किये गये सौत्रामणी यज्ञ में ब्राह्मणसमूह में परस्पर विरोध हो गया ॥३२ ॥

ऋज्राश्व का वंशज जरदष्टि यद्यपि ब्राह्मण था, तथापि वह अविनीत था। वह देवराज इन्द्र से द्वेष करके वरुण का प्रशंसक बना और उसके आसुर धर्म को धारण कर लिया ॥१ ॥

जरदष्टि का मानना था कि जो असु (प्राणों) का धारण करते हैं, वे असुर हैं तथा महाप्राण अथवा महान् शक्तिशाली हैं और जिनमें यह असुरत्व (प्राणशक्ति) नहीं हैं वे ही ये देवगण स्वयं को "सुराः स्मः" अर्थात् हम सुर हैं, ऐसा कहते हैं। तात्पर्य है कि देवता शक्तिहीन हैं और असुर शक्तिमान् हैं ॥२ ॥

## इन्द्रप्रियसोमप्रतिद्वंद्वितया वरुणेन सुरानिर्म्माणम्।

असुरा विनाश्य सोमं जनयामासुस्तु वारुणीं मदिराम्।
तां च सुरामिति जगदुः पीतामनु तां सुरान् पिबाम इति (३)
असुरवदेव त्वार्य्या अपि तां पातुं क्रमात् क्रमन्ते स्म।
अपि देवेन्द्रः सौत्रामण्यामिष्टौ सुरामपिबत् (४)
गुरुरसुराणामार्य्याऽनार्य्याणां यो न्युवास बाह्लीके।
आर्य्यैः सुरा न पेया बुद्धिहरीत्युपदिदेश तान् स भृगुः (५)
"सुरा वै मलमन्नानां पाप्मा च मलमुच्यते।
तस्माद् ब्राह्मणराजन्यौ वश्यश्च न सुरां पिबेत्" (६) (मनुस्मृतौ भृगुः)

## इन्द्र के प्रिय सोमरस की प्रतिस्पर्धा से वरुण द्वारा सुरा का निर्माण—

असुरों ने सोम का विनाश करके वारुणी नाम की मदिरा विशेष का निर्माण किया और उसको सुरा ((मदिरा) कहा। उस सुरा को पीते हुए"सुरान् पिबामः" अर्थात् "हम सुरा का पान करते हैं, " इस प्रकार कहते थे। (इसको इस प्रकार कहने से दोनों ही बातें स्पष्ट हो जाती हैं। यथा "सुरान्" का नकार पहले अनुस्वार होकर परसवर्ण से सुराम् अर्थात् मदिरा का पान करते हैं तथा सुरान् अर्थात् देवताओं को पीते हैं यह अर्थ भी द्योतित होता है) ॥३ ॥

असुरों के समान देवताओं ने भी उस सुरा को पीना प्रारम्भ कर दिया और इसी क्रम में देवराज इन्द्र ने भी सौत्रामणी यज्ञ में सुरा का पान किया। (सौत्रामण्यां सुरां पिबेत्) व्यवस्था के अनुसार इन्द्र ने सुरा का पान किया ॥४ ॥

बाह्लीक (बलख) देश में निवास करने वाले अनार्यों के गुरु आर्य भृगु (शुक्राचार्य) ने आर्यों को उपदेश दिया कि आर्यों को मदिरा का पान नहीं करना चाहिये। यह बुद्धि का नाश करती है ॥५ ॥

मनुस्मृति में लिखा है— " सुरा अन्न का मल है अर्थात् विकृत अन्न से सुरा का निर्माण होता है। मल को पाप तथा घृणास्पद बताया गया है, अतः ब्राह्मण क्षत्रिय तथा वैश्यों को सुरापान नहीं करना चाहिये ॥६ ॥ (मनु/भृगु)

## आर्ज्राश्वैरिन्द्राधिक्षेपः ।

इन्द्रस्याधिक्षेपं कर्तुमिवैतेऽसुराः सुरायज्ञम्।
सैत्रामणीं विधातुं वृषाकपिं प्रेरयामासुः ॥३३॥
एष वृषाकपिरासीदसुरेन्द्रः प्राक् प्रियः सखेन्द्रस्य।
पुत्रत्वेन तमिन्द्रः प्रेम्णा ह स्मानुगृह्णांति ॥३४॥
वैकुण्ठस्य विकुण्ठागर्भोत्पन्नस्य दैवतेन्द्रस्य।
नाम वृषाकपिरासीत् नामैक्यात् सख्यमेतयोरभवत् ॥३५॥
देवेन्द्रः स वृषाकपिरसुरवृषाकपिकृते यज्ञे।
सोमं पातुमिहागादिन्द्राण्या सह तु सञ्जयाभिधया ॥३६॥
एष वृषाकपिरसुरस्तेने सौत्रामणीयज्ञम्।
तत्र सुरामपि सोमं देवेन्द्राय न्यवेदयत् पातुम् ॥३७॥
इन्द्रः पिबति सुरामिति पारस्थानाः प्रचक्रिरे निन्दाम्।
सौत्रामण्यामिष्टौ घोरविरोधं प्रचक्रिरेऽनिन्द्राः ॥३८॥
मन्त्रेष्वनिन्द्रशब्दः षट्स्वाम्नातः पुरा वरुणम्।
आराधयन्त एते नेन्द्रं देवं त्वमंसत हि ॥३९॥
इन्द्रः पिबति सुरामिति हन्त पिबामो वयं सोमम्।
इत्युक्त्वा तेऽनिन्द्रा असुराः सोमं बलादहरन् ॥४०॥
इन्द्रनिवेदितसोमं यज्ञादपहृत्य तं पातुम्।
तत्र वृषाकपिमसुरं न्ययुञ्जतासौ पपौ सोमम् ॥४१॥
सोमं तत्र पिबन्तं दृष्ट्वेन्द्राणी वृषाकपिं पुत्रम्।
क्रोधादपगतचेताः स्वामिनमेवोपधर्षयामास ॥४२॥

## ऋज्राश्व के अनुयायियों द्वारा इन्द्र का अपमान

इन्द्र का अपमान करने के लिए ही इन असुरों ने सौत्रामणी नामक सुरायज्ञ करने के लिए वृषाकपि नाम के असुर को प्रेरित किया॥३३॥

यह असुरराज वृषाकपि पहले देवराज इन्द्र का प्रिय मित्र था। इसलिए इन्द्र इस असुर वृषाकपि पर पुत्र के समान स्नेहपूर्वक कृपा रखते थे ॥३४॥

विकुण्ठा के गर्भ से उत्पन्न वैकुण्ठ देवराज इन्द्र का नाम भी वृषाकपि था। ("वर्षति आकम्पते च" अर्थात् जो वर्षा करता है, कम्पित करता है। यहाँ वर्षा करने के कारण देवराज इन्द्र भी वृषाकपि कहलाये)। अतः नाम की एकता होने के कारण दोनों में परस्पर मित्रता थी॥३५॥

वह देवेन्द्र वृषाकपि असुर वृषाकपि द्वारा किये गये यज्ञ में "संजया" नामक इन्द्राणी के साथ सोमपान करने के लिए आये ॥३६॥

इस असुर वृषाकपि ने देवराज वृषाकपि को उस सौत्रामणी यज्ञ में पीने के लिए सोम के साथ सुरा भी प्रस्तुत की ॥३७॥

"इन्द्र सुरा पी रहा है।" इस प्रकार कहते हुए पारस्थान के निवासियों ने इन्द्र की घोर निन्दा की। इस तरह उस सौत्रामणी यज्ञ में अनिन्द्रों (इन्द्र के विरोधियों) ने घोर विरोध उत्पन्न कर दिया ॥३८॥

प्राचीन काल में वरुण की आराधना करते हुए इन अनुयायियों ने इन्द्र को देवता नहीं माना अर्थात् इन्द्र को महत्त्व नहीं दिया। इसी प्रकार छः मंत्रों में "अनिन्द्र" शब्द का प्रयोग भी किया गया है ॥३९॥

"इन्द्र सुरा पी रहा है और हम सोम का पान कर रहे है।" इस प्रकार कहते हुए देवेन्द्र-निन्दक असुरों ने सोम का बलपूर्वक हरण कर लिया ॥४०॥

उस सौत्रामणी यज्ञ में इन्द्र को निवेदित सोम का बलपूर्वक हरण करके असुर वृषाकपि को बलपूर्वक सोम पीने के लिए नियुक्त किया गया और उस असुर वृषाकपि ने सोम का पान किया ॥४१॥

पुत्रवत् वृषाकपि असुर को सोमरस पीते हुए देखकर इन्द्राणी क्रोध से विचलित हो गयी और अपने पति को ही प्रताड़ित करने लगी ॥४२॥

## इन्द्राणीकृतः क्रोधः।

**हन्त न किन्तेऽन्यत्रोपलभ्यते पीतये सोमः।**
**यदतिव्यथितो धावसि वृषाकपेरत्र यज्ञमिमम् ॥४३॥**
**किमनेनोपकृतं ते पुष्टमृगेणेति यस्मै त्वम्।**
**वितरसि सोमसदृक्षं बहुमूल्यं धनमनुग्रहात् क्षमसे ॥४४॥**
**यत्त्वं प्रियमिव रक्षसि तं शूकरभक्षकः इवाऽद्य।**
**कर्णेपिगृह्य भक्षतु मा जीवतु दुष्टजीवोऽयम् ॥४५॥**
**अहमस्मि वीरपत्नी वीरवती तामवीरावत्।**
**अवमनुतेऽयं धृष्टस्तदिदं क्षमसे कथं दृष्ट्वा ॥४६॥**
**इत्थं वृषाकपेः खल्वपराधान् क्षाम्यते तदेन्द्राय।**
**क्रोधादधिक्षिपन्तीमिन्द्राणीं तामुवाचेन्द्रः ॥४७॥**

## इन्द्राणी द्वारा किया गया क्रोध—

बड़े दुःख की बात है। क्या तुम्हें अन्यत्र कहीं सोम पीने के लिए नहीं मिलता है? जो इतनी व्यग्रता से वृषाकपि के इस यज्ञ में दौड़ते हो अर्थात् व्यग्रतापूर्वक सोमपान के लिए आ गये ॥४३॥

इन्द्राणी कहती है कि इस हृष्टपुष्ट पशु ने तुम्हारा क्या उपकार किया है? जो तुम इसके लिए सोम जैसा बहुमूल्य धन देकर भी अनुग्रहपूर्वक क्षमा कर रहे हो ॥४४॥

इन्द्राणी कहती है कि तुम प्रिय की तरह जिसकी रक्षा करते हो, उसके कानों को भी पकड़ कर यह सूअर को खाने वाला कुत्ता खा जावे, यह दुष्ट जीव जीवित न रहे ॥४५॥

मैं वीर पति की पत्नी हूँ तथा वीर पुत्रों की माता हूँ। ऐसी वीर पति और पुत्रों से युक्त मुझे "अवीरा" के समान यह दुर्विनीत अपमानित कर रहा है, यह सब देखकर भी तुम इसे क्षमा कर रहे हो ॥४६॥

इस प्रकार वृषाकपि के प्रति किये गये अपराधों को क्षमा करने वाले इन्द्र के प्रति क्रोध करती हुई उस इन्द्राणी को इन्द्र कहने लगे ॥४७॥

## इन्द्राणीं प्रति इन्द्रकृता परिसान्त्वना।

**एष वृषाकपिरीजे सोमं सोतुं मयाज्ञप्तः।**
**अन्ये त्वसुरा नेदं मन्वत इति तद्भयात्स सोममपात् ॥४८॥**
**अयि भद्रकेशपाशे न त्वपराध्यति वृषाकपिस्तत्र।**
**किमभिक्रुध्यसि सहसा वृषाकपिं वीरपत्नी त्वम् ॥४९॥**
**न वृषाकपिं सखायं विना रमे देवि यद्द्वारा।**
**इदमासुरकुलतोऽप्यां प्रियं हविर्याति देवेषु ॥५०॥**
**सोमं पातुमिहाहं नायातः किन्तु तन्मिषतः।**
**एमि समीक्षितुमेव त्वार्यं दासं विचेतुमिव ॥५१॥**

इन्द्र बोले — यह वृषाकपि मेरी आज्ञा से ही सोम का सवन करने के लिए तैयार हुआ है। अन्य सूअर इसको महत्त्व नहीं देते हैं। इसलिए इसने उनके भय से सोम का पान किया है ॥४८॥

हे सुन्दर केशराशि से युक्त इन्द्राणि! इस वृषाकपि ने यहाँ कोई अपराध नहीं किया है। हे वीर पत्नि। तुम व्यर्थ ही क्यों सहसा इस वृषाकपि पर क्रोध कर रही हो ॥४९॥

हे देवि! यह वृषाकपि मेरा मित्र है, इसके बिना मैं प्रसन्न नहीं रह सकता हूँ। क्योंकि इसी वृषाकपि के द्वारा असुरकुल से भी देवताओं की प्रिय हवि देवों तक पहुँचती है ॥५०॥

हे इन्द्राणि! यहाँ मैं सोम पीने के लिए नहीं आया हूँ अपितु मैं यहाँ आर्य और दास विषयक विचार करने की तरह समीक्षा करने आया हूँ ॥५१॥

## इन्द्राणीं प्रति वृषाकपिकृता परिसान्त्वना।

अथ च वृषाकपिरपि तामिन्द्राणीं प्रत्युवाच विनयेन।
इन्द्राणि नित्यसुभगे जरया म्रियते न जातु ते दयितः ॥५२॥
पञ्चत्रिंशन्मम मयानुक्ष्णः संप्रति पचन्ति भुक्तिकृते।
यानहमद्मि स्थूलो याभ्यां कुक्षी उभौ पृणन्ति मम ॥५३॥
ऐन्द्रं सोमं पिबतो मम पुनरेतान् पशून् भक्ष्यान्।
काचित्करं हविः प्रियमेष नवेन्द्रः स्वतंत्रमश्नातु ॥५४॥
इन्द्रोऽयमसुरकन्यागर्भज एतस्य पत्नी च।
अस्ति पुलोमासुरजा तत इन्द्रोऽश्नातु गोमांसम् ॥५५॥
अयमिन्द्रो विश्वस्मादुत्तर इति हि प्रतिज्ञातम्।
इन्द्राण्यपीन्द्रेणापि वृषाकपिनाऽसुरेन्द्रेण ॥५६॥

## इन्द्राणी के प्रति वृषाकपि द्वारा दी गई सान्त्वना

तदनन्तर वृषाकपि ने भी विनयपूर्वक उस इन्द्राणी को प्रतिवचन कहे। वह बोला—हे इन्द्राणि! नित्य सौभाग्यवति! तुम्हारा पति न वृद्धावस्था को प्राप्त होता है और न ही मृत्यु को प्राप्त होता है अर्थात् अजर और अमर है ॥५२॥

सोमपान के प्रायश्चित्त स्वरूप वृषाकपि कहते हैं — मेरे भोजन के लिए जिन पैंतीस बैलों को अभी पकाते हैं अर्थात् इस समय पकाया जा रहा है, जिनको मैं खाता हूँ और जिनको खाने से मैं स्थूल हो रहा हूँ और जिनसे मेरी दोनों कुक्षियाँ पुष्ट हो रही हैं, अतः इन्द्र का सोम पीते हुए मेरे इन भक्ष्य पशुओं को, जो कभी-कभी होने वाला हवि है, इस हवि का इन्द्र स्वतंत्र रूप से भक्षण करे अथवा न करे ॥५३-५४॥

वृषाकपि बोले — यह इन्द्र असुरकन्या के गर्भ से उत्पन्न हुआ है और इसकी पत्नी भी पुलोम नाम के असुर की पुत्री है। इसलिए इन्द्र गोमांस का भक्षण करे ॥५५॥

वृषाकपि के द्वारा इन्द्राणी तथा इन्द्र के साथ प्रतिज्ञा की गई कि यह इन्द्र समस्त विश्व में श्रेष्ठ है ॥५६॥

## एतदाख्यानस्य ऋग्वेदसंहितायामुल्लेखः।

ऋग्वेदसंहितायां दशमे तन्मण्डले तदा सूक्ते (१०।८६)
आख्यानमेतदुक्तं तन्मन्त्रा अत्र दर्श्यन्ते ॥५७॥

## इन्द्राणीक्रोधविषया वेदमन्त्रा यथा।

(१) पराहीन्द्र धावसि वृषाकपेरति व्यथिः ।
नो अह प्रविन्दस्यन्यत्र सोमपीतये ॥
विश्वस्मादिन्द्र उत्तरः ॥ (१० ।८६ ।२) ॥१ ॥
(२) किमयं त्वां वृषाकपिश्चकार हरितो मृगः ।
यस्मा इरस्यसी दुन्वर्यो वा पुष्टिमद्वसु ॥
विश्वस्मादिन्द्र उत्तरः ॥ (१० ।८६ ।३) ॥२ ॥
(३) यमिमं त्वं वृषाकपिं प्रियमिन्द्राभिरक्षसि ।
श्वान्वस्य जम्भिषदपि कर्णे वराहयुः ॥
विश्वस्मादिन्द्र उत्तरः (१० ।८६ ।४) ॥३ ॥
(४) अवीरामिव मामयं शरारुरभि मन्यते ।
उताहमस्मि वीरिणीन्द्रपत्नी मरुत्सखा ॥
विश्वस्मादिन्द्र उत्तरः ॥ (१० ।८६ ।९) ॥४ ॥

## इस आख्यान का ऋग्वेद संहिता में उल्लेख

ऋग्वेदसंहिता के १०वें मण्डल के ४६वें सूक्त में यह आख्यान वर्णित है, जिसके मंत्र यहाँ प्रदर्शित है ॥५७ ॥

## इन्द्राणी के क्रोध से संबंधित मंत्र

हे इन्द्र, तू अत्यन्त व्यथित होकर वृषाकपि के पीछे दौड़ रहा है। तू अन्यत्र सोम पीने के लिए क्यों नहीं जाता है? क्योंकि निश्चित ही इन्द्र सबसे श्रेष्ठ है ॥१ ॥ (१०/८६/२)

तुम्हारे इस हृष्टपुष्ट हरितवर्ण वृषाकपि ने, जो मृग के समान है, क्या किया है? जिसके लिए तू इसे उदारतापूर्वक पुष्टिकारक धन देता है। वह इन्द्र निश्चित ही सर्वश्रेष्ठ है ॥२ ॥ (१०/८६/३)

हे इन्द्र, तुम जिस वृषाकपि की रक्षा करते हो, इसके कानों को वराह को खाने की इच्छा करने वाला कुत्ता शीघ्र खा जावे। निश्चय ही इन्द्र सर्वश्रेष्ठ है ॥३ ॥ (१०/८६/४)

यह घातक अथवा धृष्ट वृषाकपि मुझे वीर पति. तथा पुत्र से रहित मानता है और मैं मरुत्सखा इन्द्र की पत्नी हूँ तथा वीरपुत्रों से युक्त हूँ। निश्चित ही इन्द्र सर्वश्रेष्ठ है ॥४ ॥ (१०/८६/९)

## देवेन्द्रवृषाकपिकृतपरिसान्त्वनामंत्रा यथा

(१) वि हि सोतोरसृक्षत नेन्द्रं देवममंसत।
यत्रामदद् वृषाकपिरर्यः पुष्टेषु मत्सखा विश्वस्मादिन्द्र उत्तरः ॥
(१० ।८६ ।१) ॥५ ॥

(२) किं सुबाहो स्वङ्गुरे पृथुष्टो पृथुजाङ्घने।
किं शूरपत्नि नस्त्वमभ्यमीषि वृषाकपिं॥
विश्वास्मादिन्द्र उत्तरः ॥१० ।८६ ।८) ॥६ ॥

(३) नाहमिन्द्राणि रारण सख्युर्वृषाकपेर्ऋते।
यस्येदमप्यं हविः प्रियं देवेषु गच्छति॥
विश्वास्मादिन्द्र उत्तरः ॥ (१० ।८६ ।१२) ॥७ ॥

(४) अयमेमि विचाकशद्विचिन्वन् दासमार्य्यम्।
पिबामि पाकसुत्वनोऽभि धीरमचाकशं।
विश्वस्मादिन्द्र उत्तरः । (१० ।८६ ।१९) ॥८ ॥

## देवेन्द्र वृषाकपि द्वारा दी गई सान्त्वना के वेदमंत्र

मैंने (इन्द्र ने) ही सोमयाग करने के लिए स्तोताओं को कहा था, परन्तु उन्होंने मेरी स्तुति नहीं की, बल्कि वृषाकपि असुर की स्तुति की, जहाँ सोमयाग में मेरे मित्रश्रेष्ठ वृषाकपि ने सोमपान किया और प्रसन्न हुआ। फिर भी मैं (इन्द्र) विश्व में सर्वश्रेष्ठ हूँ ॥५ ॥ (१०/८६/१)

इन्द्र वृषाकपि कहते हैं-- हे सुन्दर बाहु वाली! हे सुन्दर अंगुलियों वाली! हे सुकेशि! हे विशाल जंघा वाली! हे शूरपत्नि इन्द्राणि! तुम हमारे वृषाकपि पर क्यों क्रुद्ध हो रही हो? क्योंकि इन्द्र विश्व में सर्वश्रेष्ठ है ॥६ ॥ (१०/८६/८)

मैं यजमानों को देखता हुआ, शत्रुओं को दूर करता हुआ और आर्यों का अन्वेषण करता हुआ यज्ञ में आता हूँ। पक्व, दृढ मन से सोम को निचोड़ने वालों का सोमपान करता हूँ और बुद्धिमान् यजमानों की रक्षा करता हूँ। इन्द्र सबसे श्रेष्ठ है ॥८ ॥ (१०/८६/१९)

## असुरेन्द्रवृषाकपिकृतपरिसान्त्वनामंत्रा यथा।

१— इन्द्राणीमासु नारिषु सुभगामहमश्रवम्।
न ह्यस्या अपरं च न जरसा मरते पतिः॥
विश्वस्मादिन्द्र उत्तरः ॥ (१० ।८६ ।११) ॥९ ॥

२— उक्ष्णो हि मे पञ्चदश साकं पचन्ति विंशतिम्।

उताहमद्मि पीव इदुभा कुक्षी पृणन्ति मे ॥
विश्वस्मादिन्द्र उत्तरः ॥ (१० ।८६ ।१४) ॥१० ॥

## असुरराज वृषाकपि द्वारा दिये गये सान्त्वना के मंत्र

मैं समस्त स्त्रियों में इन्द्राणी को सौभाग्यशाली सुनता आया हूँ। अन्य स्त्रियों के पुरुषों के समान इन्द्राणी का पति अजर और अमर है। इन्द्र विश्व में सर्वश्रेष्ठ है ॥९ ॥ (१०/८६/११)

मेरे लिए याज्ञिक लोग पंद्रह बीस बैल पकाते हैं, जिन्हें खाकर मैं स्थूल और पुष्ट होता हूँ। याज्ञिक मेरी दोनों कुक्षियों को सोम से भरते हैं। इन्द्र विश्व में सर्वश्रेष्ठ है ॥१० ॥ (१०/८६/१४)

## देवेन्द्रासुरेन्द्रयोर्वृषाकप्योः सन्धिशान्तिः ।

अपिबत् सुरां सुरेन्द्रः स चासुरेन्द्रोऽपिबत् सोमम् ।
तत्रेन्द्रयोर्विवादोऽशाम्यत्कथमपि तयोर्नीत्या ॥५८ ॥

## देवेन्द्र और असुरेन्द्र वृषाकपि में परस्पर सन्धि और शान्ति ।

देवेन्द्र वृषाकपि ने सुरा का पान किया और असुरेन्द्र वृषाकपि ने सोम को पीया। वहाँ उस यज्ञ में दोनों वृषाकपि में जो विवाद उत्पन्न हुआ था, वह इन दोनों की नीति से किसी प्रकार शान्त हो गया ॥५८ ॥

## क्रमशस्तत्रैव ब्राह्मणानां वैज्ञानिकविप्रतिपत्तिप्रारम्भः ॥

वरुणस्य राजधानीनगरेऽस्मिन् किन्तु वाह्लीके ।
यज्ञे समवेतानां विप्राणां विग्रहोऽत्यभवत् ॥५९ ॥
अग्निर्वसुभिः क्रमते सोमो रुद्रैर्मरुद्भिरिन्द्रोऽयम् ।
आदित्यैरथ वरुणो विश्वैदेवैर्बृहस्पतिः क्रान्तः ॥६० ॥
अग्निर्वसुभिः क्रमते, रुद्रैरिन्द्रोऽथ वरुण आदित्यैः ।
सोमः पितृभिः क्रमते विश्वैर्देवैर्बृहस्पतिः क्रान्तः ॥६१ ॥
अग्निर्वसुभिः क्रमते वायू रुद्रैरथेन्द्र आदित्यैः ।
सोमः पितृभिर्वरुणस्त्वद्भिर्विश्वैर्बृहस्पतिर्देवैः ॥६२ ॥
इत्थं त्रयः प्रवादा अभवन् वैज्ञानिके समरे ।

असुराः प्रथमं पक्षं जगृहुस्तत्रोत्तमं त्वैन्द्राः ॥६३॥
*परमर्षयस्त्वपश्यन् न विसंवादावकाशमिह।
शवसोनपात एते युञ्जन्त्यधिदैवतैस्तैस्तैः ॥६४॥
अग्निर्वायुश्चेन्द्रो रोदस्यां क्रन्दसी देवाः।
सन्ति बृहस्पतिसोमौ वरुणः स्वस्तेऽधिदैवतैः सयुजः ॥६५॥
पूर्वेषामयमुत्तम एष बृहस्पतिरथेन्द्रस्तु।
प्रथमोऽयमुत्तरेषामित्यृषिभिर्हि स्थितिर्दृष्टा ॥६६॥
इत्याह संयतीतोऽर्वाक् क्रमतो रोदसीदृष्ट्या।
पृथ्वीक्रमतस्त्वग्निः प्रथमस्तुर्यो बृहस्पतिः सोस्ति ॥६७॥
अग्निश्च वायुसोमौ सहेन्द्रवरुणौ बृहस्पतिश्चान्ते।
लोकचतुष्टयदेवा इत्थं क्रमसंनिविष्टास्ते ॥६८॥
अग्निर्वसुभिः प्रथमो विश्वदेवैर्बृहस्पतिः क्रमते।
वायू रुद्रैः सोमो रुद्रैः पितृभिश्च संयुङ्क्ते ॥६९॥
आदित्यैरपि रुद्रैर्मरुद्भिरिन्द्रः सजूर्भवति।
वरुणोऽद्भिश्चादित्यैर्युनक्ति नान्यैरिति ज्ञेयम् ॥७०॥
इत्थं कृतसिद्धान्ते विज्ञाने निर्विवादेऽपि।
अधिकृत्येन्द्रं वरुणं विप्रा विप्रोदिरे तत्र ॥७१॥
असुरो वरुणो मान्यो न त्विन्द्रो देव इत्यन्ये।
इन्द्रो देवो मान्यो नत्वसुरो वरुण इत्यन्ये ॥७२॥
जरदष्ट्यादयः केचिन्नेन्द्रं देवममंसत।
बृहद्दिवादयस्त्विन्द्रमागध्यं निग्धारयन् ॥७३॥

## वहीं से ब्राह्मणों में क्रमशः वैज्ञानिक मतभेद का प्रारम्भ

परन्तु वरुण की राजधानी बाह्लीक (बलख) में यज्ञ के समय एकत्रित ब्राह्मणों में परस्पर विद्रोह उत्पन्न हो गया ॥५९॥

*

| | | | | | | |
|---|---|---|---|---|---|---|
| | १ | २ | ३ | ४ | ५ | ६ |
| | अग्निः | वायुः | सोमः | वरुणः | इन्द्रः | बृहस्पतिः |
| | वसुभिः | रुद्रैः | रुद्रैः पितृभिः | आदित्यैः अद्भिः | आदित्यैः रुद्रैः मरुद्भिः | विश्वैर्देवैः |
| | पृथ्वी | अन्तरिक्षम् | अन्तरिक्षम् | द्यौः | द्यौः | दिवःपृष्ठम् |
| | १ | २ | २ | ३ | ३ | ४ |

इस वैज्ञानिक युद्ध में तीन विवाद उत्पन्न हुए, जिनमें प्रथम मतानुसार अग्नि आठ वसुओं से व्याप्त है, सोम रुद्रों से, इन्द्र मरुद्‌गणों से चलता है, वरुण आदित्यों से व्याप्त है तथा बृहस्पति की विश्वेदेवों से व्याप्ति होती है ॥६० ॥

इनमें द्वितीय मत था — अग्नि (आठ) वसुओं से चलता है, इन्द्र ग्यारह रुद्रों से चलता है तथा पितृगणों से सोम चलता है। बारह आदित्यों से वरुण तथा विश्वेदेवों से बृहस्पति की व्याप्ति होती है ॥६१ ॥

तृतीय मत के अनुसार — अग्नि वसुओं से चलता है, वायु मरूद्‌गणों से तथा इन्द्र की आदित्यों से व्याप्ति होती है। सोम पितृगण से, वरुण जल से और बृहस्पति विश्वे देवों से व्याप्त है ॥६२ ॥

इस प्रकार उस वैज्ञानिक युद्ध में तीन विवाद उत्पन्न हो गये, जिनमें असुरों ने प्रथम पक्ष का समर्थन किया तथा इन्द्र के अनुयायियों (देवों) ने उत्तम अर्थात् तृतीय मत का समर्थन किया ॥६३ ॥

*परन्तु परम ऋषियों ने तो इस विवाद के लिए किसी प्रकार का स्थान ही नहीं पाया। क्योंकि उनके मतानुसार यह वस्तुतः विवाद न होकर बल के द्वारा नियंत्रित तत्तद् अधिदैवतों के आध्यक्ष से युक्त है ॥६४ ॥

अग्नि, वायु और इन्द्र रोदसी के देव हैं। बृहस्पति, सोम और वरुण क्रन्दसी के देव हैं। ये सभी स्वर्ग में अपने-अपने अधिदैवतों से युक्त हैं ॥६५ ॥

पूर्व के अर्थात् ऊपर के लोकों में बृहस्पति प्रथम है तथा बाद वाले अर्थात् नीचे के लोकों में इन्द्र प्रथम है। इस प्रकार ऋषियों के द्वारा स्थिति देखी गई ॥६६ ॥

इस प्रकार संयती के नीचे के क्रम से रोदसी की दृष्टि से कहा गया और पृथ्वी के क्रम से अग्नि प्रथम है तथा बृहस्पति चौथा देव है ॥६७ ॥

अग्नि, वायु, सोम, इन्द्र और वरुण तथा बृहस्पति सबसे अन्त में हैं। इस प्रकार चारों (पृथ्वी, अन्तरिक्ष, द्यु और दिवः पृष्ठ) लोकों के अधिष्ठातृदेव क्रम से स्थित हैं ॥६८ ॥

*

| | १ | २ | ३ | ४ | ५ | ६ |
|---|---|---|---|---|---|---|
| | अग्नि | वायु | सोम | वरुण | इन्द्र | बृहस्पति |
| | वसुओं के द्वारा | रुद्रों के द्वारा | रुद्र पितृगणों के द्वारा | आदित्यों जलों के द्वारा | .आदित्य रुद्र मरुतों के द्वारा | विश्वेदेवों के द्वारा |
| | पृथ्वी | अन्तरिक्ष | अन्तरिक्ष | द्यु | द्यु | दिवःपृष्ठ |
| | १ | २ | २ | ३ | ३ | ४ |

अग्नि वसुओं से व्याप्त है और प्रथम है, बृहस्पति विश्वेदेवों से व्याप्त है, वायु रुद्रों से चलता है और सोम रुद्रों और पितृगण से संयुक्त रूप से व्याप्त है। आदित्य, रुद्र और मरुद्गणों से संयुक्त रूप से इन्द्र अतिक्रान्त हैं तथा वरुण जलों और आदित्यों से संयुक्त रूप से व्याप्त है, इसके अतिरिक्त और कुछ भी नहीं है, ऐसा जानना चाहिये ॥६९-७० ॥

इस प्रकार इस निर्विवाद वैज्ञानिक सिद्धान्त में भी इन्द्र और वरुण को आधार बनाकर ब्राह्मणों में विवाद उत्पन्न हो गया ॥७१ ॥

कुछ ब्राह्मणों ने कहा कि असुर वरुण को ही देव मानना चाहिये न कि इन्द्र को, तथा अन्य ब्राह्मणों ने कहा कि इन्द्र को ही देव मानना चाहिये न कि वरुण को ॥७२ ॥

जरदष्टि इत्यादि ब्राह्मणों ने इन्द्र को देव नहीं माना तथा बृहद्देवता इत्यादि ब्राह्मणों ने इन्द्र को आराध्य देव निर्धारित किया ॥७३ ॥

## तत्र तावत्संक्षेपतो वरुणपरमासुरविज्ञानम्।

**वरुणेऽध्याहितमिन्द्रं पश्यन्तश्चक्षते त्वमी असुराः।**
**वरुणो भवतु स्वाडिन्द्रः सम्राट् तथा हि विज्ञानम् ॥७४ ॥**
**भूयस्य आप एताः कनीय एवात्र चेतना ज्योतिः।**
**अप्स्वेव तु चैतन्यं बुध्यति वरुणः परस्ततो हीन्द्रात् ॥७५ ॥**
**भूतानि दैवतानि च जातान्यद्भ्योऽत एव ता आपः।**
**प्राणः प्रज्ञा चेन्द्रो भूतान्यालम्बते तानि ॥७६ ॥**
**देहेऽप्यधिका आपो लवणं चाधिकमिदं द्वयं वरुणः।**
**प्राणप्रज्ञाचेष्टावहः स इन्द्रोऽप्सु संश्रितो भाति ॥७७ ॥**
**अन्नमभुक्त्वा जीवति नापीत्वापस्तदाप एवात्मा।**
**अन्नैरपीह भुक्तैस्तद्रस एवात्मनि ध्रियते ॥७८ ॥**
**परमेष्ठ्यपां समुद्रः प्रतिपत् तत्रानुचरवद् द्यौः।**
**योऽसाविन्द्रो द्युस्थः स वारुणीस्वप्सु संश्रितस्तपति ॥७९ ॥**

## संक्षेप में वरुणविषयक आसुर विज्ञान

वरुण में ही इन्द्र आधारित है, ऐसा मानते हुए असुरों ने उद्घोषणा की कि विज्ञान के अनुसार इन्द्र तो सम्राट् है और वरुण स्वाराट् है, ऐसा मानना चाहिये ॥७४ ॥

असुरों का कहना था कि इस भू-मण्डल पर जल का आधिक्य है और इन्द्र तत्त्व (चैतन्य ज्योति) की मात्रा जल तत्त्व से कम है क्योंकि आपः (जल) में ही चैतन्य तत्त्व का उद्बोध (जागृति) होती है। अतः वरुण इन्द्र से श्रेष्ठ है ॥७५ ॥

समस्त भूत और दैवत अप्तत्व से ही उत्पन्न होते हैं। प्रत्येक वस्तु में स्थित प्राण, बुद्धि और इन्द्र (चैतन्य) तत्त्व तथा समस्त भूत तत्त्व जलों पर ही आश्रित हैं। ("आपो वे प्राणाः" व्यवस्था के अनुसार जल ही सर्वोपरि तत्त्व है।) ॥७६ ॥

देह में भी अप्तत्व तथा लवण का आधिक्य है और ये दोनों ही पदार्थ वरुण हैं। (प्राण, प्रज्ञा और चेष्टा को धारण करने वाला इन्द्र (चैतन्य ज्योति) जल (वरुण) पर ही आश्रित है ॥७७ ॥

अन्न ग्रहण किये बिना प्राणी जीवित रह सकता है परन्तु जल पीये बिना प्राणी जीवित धारण नहीं कर सकता है। अतः आपः (जल) ही आत्मा हैं। अन्न खाने पर भी उस अन्न का रस भाग ही देह में धारण किया जाता है, जबकि स्थूल भाग निष्कासित कर दिया जाता है। ॥७८ ॥

यह परमेष्ठी मण्डल जल का समुद्र है, वहाँ पहुंचने के लिए प्रत्येक पद पर यह द्युलोक सेवक के समान स्थित है तथा इन्द्र जो द्युलोक में स्थित है, वह भी इस अप्तत्त्व में आश्रित रहकर देदीप्यामान हो रहा है ॥७९ ॥

## अथ प्रतिपादे संक्षेपत इन्द्रपरं दैवविज्ञानम्।

**१— इन्द्राध्याहितवरुणं पश्यन्तश्चक्षतेऽथ देवास्तु।**
**इन्द्रः स्वाराड् वरुणः सम्राडेवं हि विज्ञानम् ॥८० ॥**
**भूयस्यो विश एता एकः स्वाराट् प्रशास्त्यधिष्ठाय।**
**स्वाराड् विक्ष्वनुबुद्धो विभवति तास्वेक उद्रिक्तः ॥८१ ॥**

| | | अग्निः | वायुः | इन्द्रः | | बृहस्पतिः | सोमः | वरुणः | शवसोनपातः |
|---|---|---|---|---|---|---|---|---|---|
| प्रथममते | १ | वसुभिः ८ | ० | मरुद्भिः ७ | | विश्वैर्देवैः | पितृभिः ८ | आदित्यैः १२ | आसुरमतेऽ- |
| मध्यममते | २ | वसुभिः ८ | ० | रुद्रैः ११ | | विश्वैर्देवैः | पितृभिः ८ | आदित्यैः १२ | धिदेवाः |
| उत्तममते | ३ | वसुभिः ८ | रुद्रैः ११ | आदित्यैः १२ | | विश्वैर्देवैः | पितृभिः ८ | अद्भिः४ | ऐन्द्रमतेऽधि-देवाः |
| | | १ | १ | ३ | | १ | २ | २ | |
| | ३ | रोदसीदेवाः | | | ३ | क्रन्दसीदेवाः | | | द्यावापृथिव्यौ |

**आत्मानः**

**३. द्यौः संयत्यां**

**द्यौः—अन्तर्य्यामी—अभ्वम् =३ कर्म्मरूपनामानि।**
**अं०—सूत्रात्मा—सूत्रम् =२ ऋतं सत्यम्।**
**पृ०—वाचस्पतिः—वेदाः =३ ऋक्, साम, यजूंषि।**

| | |
|---|---|
| २ अं० क्रन्द्रस्यां | द्यौः—वरुणः—आपः =४ अम्भः मरीचिः मरः श्रद्धा।<br>अं०—सोमः पितरः =३ भृगवः अङ्गिरसः अथर्वाणः।<br>पृ०—बृहस्पतिः विश्वेदेवाः =२ |
| १. पृ० रोदस्याम् | द्यौः—इन्द्रः—आदित्याः =१२<br>अं०—वायुः रुद्राः =११<br>पृ०—अग्निः—वसवः =८ |

हिरण्यगर्भमते

| | | | |
|---|---|---|---|
| | | बृहस्पतिः | विश्वेदेवाः। |
| | द्यौः | इन्द्रः | आदित्याः रुद्राः—मरुतः। |
| रोदस्याम् | | वरुणः | आदित्याः —आपः। |
| | | सोमः | रुद्राः—पितरः। |
| | अं. | वायुः | रुद्राः। |
| | पृ० | अग्निः | वसवः। |

## तदनन्तर इन्द्रपरक दैवविज्ञान का संक्षेप में प्रतिपादन

१—तब देवों ने वरुण को इन्द्र पर आश्रित मानते हुए कहा कि इन्द्र स्वाराट् है तथा वरुण सम्राट् ही है ॥८० ॥

प्रजायें बहुत सी हैं तथा उन पर प्रतिष्ठित रहता हुआ यह स्वाराट् अकेला ही शासन करता है। यह प्रजाओं में जागृत होकर तथा बुद्धि को प्राप्त करता हुआ वैभव से युक्त होता है ॥८१ ॥

| | अग्नि | वायु | इन्द्र | बृहस्पति | सोम | वरुण | शवसोनपात |
|---|---|---|---|---|---|---|---|
| प्रथम मत १ | वसुओं से ८ | ० | मरुतों से ७ | विश्वेदेवों से | रुद्रों से ११ | आदित्यों से ८ | असुरमत के अधिदेव |
| द्वितीय मत २ | " | ० | रुद्रों से ११ | " | पितृगण से ८ | " | ---------- |
| तृतीय मत ३ | " | रुद्रों से | आदित्यों से १२ | " | " | जलों से ४ | ऐन्द्रमत के अधिदेव |
| | १ | १ | ३ | १ | २ | २ | |
| ३ | रोदसी के देव | | ३ | क्रन्दसी के देव | | | द्यावापृथिवी |

आत्मा

द्युलोक—अन्तर्यामी—अभ्व तीन प्रकार के हैं—कर्म, रूप और नाम।

द्युलोक संयती में — अं०—सूत्रात्मा—सूत्र दो हैं —ऋत और सत्य।
पृ.— वाचस्पति—वेद तीन हैं —ऋक्, यजुः, साम।

अं०/क्रन्दसी में — द्युलोक—वरुण—अप्तत्त्व चार हैं—अम्भ, मरीचि, मरः और श्रद्धा।
अं.—सोम—पितृगण तीन हैं —भृगु, अंगिरा, अथर्वा।
पृं.—बृहस्पति—विश्वेदवा दो हैं।

पृथ्वी/रोदसी में — द्युलोक—इन्द्र—आदित्य १२
अं.—वायु—रुद १२।
पृ.—अग्नि—वसु ८।

हिरण्यगर्भ के मतानुसार।

| | | | |
|---|---|---|---|
| | द्युलोक | बृहस्पति | विश्वेदेव। |
| रोदसी में | | इन्द्र | आदित्य—रुद्र—मरुत्। |
| शवसोनपात | | वरुण | आदित्य—अप्तत्त्व। |
| (अध्यक्ष) | अ. | सोम | रुद्र—पितृगण। |
| | | वायु | रुद्र। |
| | पृ. | अग्नि | वसु। |

२— आत्मेन्द्रो ह्यधितिष्ठति रक्षति वा दैवतानि।
नश्यन्ति तानि सद्यो यदात्मना तानि हीयन्ते ॥८२॥
आपः शरीरमेतद्भोगाधिष्ठानमात्मनस्तदिन्द्रस्य।
आलोम चानखाग्रं विभवत्यात्मा स देहेऽस्मिन्॥८३॥
आत्मा शरीरयष्टिं धत्ते तेनोत्थितेऽत्र चेष्टास्ति।
अथात्मना विहीनं निपतति सद्योऽथ पूयते श्वयति॥८४॥
आपः सोमः सोमं भुनक्ति हीन्द्रः पिबन्ति तेनापः।
रोगा जलोदराद्या दृष्टा नात्मास्ति तेनापः ॥८५॥

३— अपि च भवन्ति द्यावाभूम्यस्तिस्तो मिथोऽनुगताः।
अर्वागहीयस्यः परावरीयस्य आम्नाताः॥८६॥
प्रथमा तु रोदसीयं तद्गर्भा क्रन्दसी मध्या।
तदुभयगर्भा सान्या या संयत्युत्तमा महती ॥८७॥
प्रतिपद् द्यौरथ भूम्योऽनुचरन्त्यस्ताश्च बह्व्यः स्युः।
एकैकस्यां द्यावाभूम्यां द्यौरेकधैव स्यात्॥८८॥
एकैकस्यां द्यावाभूम्यां ब्रह्मेन्द्रविष्णवो हृदये।
सयुजोऽध्यक्षाः कुर्वत एते विश्वानि कर्माणि॥८९॥
रोदस्यामिह सूर्य्यो हिरण्यगर्भोऽस्ति स ब्रह्मा॥
क्रन्दस्यां तु परमेष्ठी संयत्यां तु स्वयंभूः सः ॥९०॥

त्रिविधं च वैश्वरुप्यं संयत्यां व्योममण्डलं पमम्।
क्रन्दस्यां तु समुद्रो ब्रह्माण्डं रोदसीविषयम्॥९१॥
इन्द्रोऽस्ति विश्वकर्मा व्योम्नि स वाचस्पतिस्तु वेदमयः।
वरुणस्तु विश्वकर्मा स समुद्रेऽपांपतिर्मध्यः॥९२॥
ब्रह्माण्डविश्वकर्मा त्विन्द्रः सोऽग्निक्लृप्तः।
वेदा आपोऽग्नय इति तेषामिह कर्मयोनयस्त्रिविधाः॥९३॥

४— पृष्ठे दिवस्तु वरुणः समुद्रनाथोस्ति पारमेष्ठ्यो यः।
ऊर्ध्वं ततोऽन्य इन्द्रस्तपति तपोलोकनायकश्चेता ॥९४॥
दिव्यादित्यास्त्विन्द्रो दिव्यादित्यं प्रशास्ति यं वरुणम्।
वरुणस्ततः स भिन्नः स्वायंभुव इन्द्र एष यं शास्ति॥९५॥
दिव्यादित्यं त्विन्द्रं शास्ति स वरुणः स्वमण्डलान्तस्थम्।
परमे व्योम्नि स्वाराडिन्द्रः शास्ति स समुद्रमात्मगतम्॥९६॥

५— वाग् वै स इन्द्रोऽस्ति स सत्यलोके वाग्लोकतोऽपोऽसृजदत्र पश्चात्।
अपा समुद्रो जनदस्ति लोकः स सत्यलोकादवरः प्रतीतः ॥९७॥

६— परमं तु वैश्वरूप्यं स्वायंभुवमस्ति पारमेष्ठ्यं तु॥
तदवरमथ पुनरवरं सौरं भौमं ततोऽप्यवरम्॥९८॥
प्रति वैश्वरूप्यमिन्द्रो ब्रह्मा विष्णुर्नियम्यन्ते।
वरुणस्तु पारमेष्ठ्ये सौरे वा वैश्वरूप्येऽस्ति ॥९९॥
इत्थं परावतीन्द्रो वरुणादर्वावतीन्द्र आभाति।
अन्तर्बहिरुभयेन तु वरुणोऽनुगृहीत इन्द्रेण ॥१००॥

७— तस्मादिन्द्रः स्वाराड् वरुणः सम्राडिदं हि विज्ञानम्।
विज्ञानादनपेतो योऽर्थः स ब्राह्मणैर्ग्राह्यः ॥१०१॥

२— यह इन्द्र ही आत्मा है, यही अधिष्ठित होता हुआ विद्यमान है, रक्षा करता है तथा जब आत्मा रूप इन्द्र के द्वारा त्याग दिया जाता है तो वे दैवत शीघ्र ही नष्ट हो जाते हैं॥८२॥

यह आपः या शरीर उस आत्मा रूप इन्द्र का भोगाधिष्ठान है (भोगस्थली है)। इस शरीर में लोम और नाखून के अग्र भाग पर्यन्त अर्थात् सर्वत्र इस आत्मा का ही प्रमुख स्थान है॥८३॥

यह आत्मा ही इस शरीरयष्टि को धारण करता है, इस आत्मा के शरीर में रहने पर ही क्रियशीलता रहती है। जैसे ही यह शरीर आत्मा से विहीन हो जाता है तो शीघ्र ही शरीर से दुर्गन्ध आने लगती है तथा वह नष्ट हो जाता है॥८४॥

यह अप्तत्त्व ही सोम है तथा इन्द्र इस सोम का भोग करता है तथा जल रूप में परिणत होने पर इस जल को संसार पीता है तो उसी से जलोदरादि रोग भी उत्पन्न हो जाते हैं, क्योंकि उस जल की आत्मा (केन्द्र) नहीं होती है ॥८५ ॥

३.— तीन प्रकार की द्यावापृथ्वी है — रोदसी, क्रन्दसी, और संयती। ये तीनों परस्पर अनुगत हैं अर्थात् मिली हुई है। बाद वाली अहीयसी कहलाती है तथा पर (ऊपर वाली) वरीयसी कहलाती है ॥८६ ॥

यह रोदसी प्रथम द्यावा-पृथिवी है तथा इस रोदसी को धारण करने वाली क्रन्दसी नामक द्यावा-पृथ्वी है जो मध्य में स्थित है। इन दोनों (रोदसी और क्रन्दसी) को धारण करने वाली तीसरी द्यावा-पृथ्वी है और वह है संयती। यह सर्वोपरि है, यही महान् है ॥८७ ॥

प्रतिक्षण भूतियाँ द्यौ का अनुसरण करती हैं, ये भूमियाँ अनेक हैं, परन्तु एक-एक द्यावापृथ्वी में द्युलोक एक ही हैं ॥८८ ॥

प्रत्येक द्यावापृथ्वी के हृदय में ब्रह्मा, विष्णु तथा इन्द्र निवास करते हैं। ये सभी मिलकर इनके अध्यक्ष हैं और समस्त कार्यों का विधान करते हैं ॥८९ ॥

रोदसी में सूर्य ही हिरण्यगर्भ है, वही प्रधान है। क्रन्दसी में परमेष्ठी प्रधान है तथा संयती में स्वयम्भू प्रधान है ॥९० ॥

इस प्रकार तीन प्रकार का विश्व रूप भाव है तथा इनमें से संयती में व्योममण्डल सर्वोत्तम है, परम है। क्रन्दसी में समुद्र प्रधान है और रोदसी में ब्रह्माण्ड ही प्रधान विषय है ॥९१ ॥

इन्द्र उस परम व्योममण्डल का विश्वकर्मा है, वही वाचस्पति है, वही वेदमय है। जलों का स्वामी वरुण तो समुद्र का विश्वकर्मा है और वह मध्य में स्थित है ॥९२ ।।

ब्रह्माण्ड में विश्वकर्मा इन्द्र है। वह तीनों अग्नियों (सूर्य, वायु, इन्द्र) से कल्पित है। वेद, आप: और अग्नि ये तीन प्रकार की इनकी कर्मयोनियाँ हैं ॥९३ ॥

४— द्युलोक के पृष्ठ में वरुण है, जो समुद्र नाथ है और परमेष्ठी का स्वामी है। उसके ऊपर दूसरा इन्द्र है, वह तपोलोक का स्वामी है, चेतना देने वाला है तथा देदीप्यमान है ॥९४ ॥

द्युलोक का सूर्य इन्द्र है, इस दिव्यादित्य पर शासन करने वाला वरुण है, परन्तु वह वरुण इस वरुण से भिन्न है, जिस पर वह स्वयम्भूमण्डल का स्वामी इन्द्र शासन करता है ॥९५ ॥

अपने मण्डल में स्थित दिव्यादित्य इन्द्र पर वरुण शासन करता है। परन्तु परम व्योममण्डल में तो वह इन्द्र ही अपने गर्भ में स्थित वरुण पर शासन करता है ॥९६ ॥

५— वह इन्द्र ही वाक् (वेद का स्वामी) है, उसी ने सत्यलोक में वाग्लोक से जल का सृजन किया है। इस वाग्लोक से आगे जलों का समुद्र रूप जनत् लोक है, वह सत्यलोक से नीचे दिखाई देता है ॥९७ ॥

६— सर्वोपरि विश्व रूप भाव तो स्वम्भूमण्डल का है, परमैष्ठी लोक तो उससे नीचे है, उससे भी छोटा सूर्यलोक है और उससे भी छोटा (नीचे) भौमलोक है ॥९८ ॥

प्रत्येक विश्वरूप को ब्रह्मा, विष्णु और इन्द्र नियंत्रित करते हैं, परन्तु वरुण तो परमेष्ठी अथवा और विश्वरूप में स्थित है। इस प्रकार स्वयम्भू की दृष्टि से उच्चतम इन्द्र नीचा भी प्रतीत होता है। इस प्रकार अन्दर और बाहर दोनों ओर से वरुण ही इन्द्र के द्वारा अनुगृहीत है ॥९९-१०० ॥

७— इसलिए इन्द्र स्वाराट् है तथा वरुण सम्राट् है, यही विज्ञान है, वास्तविकता है तथा विज्ञान से सिद्ध है (अविरहित है) यही अर्थ ब्राह्मणों के द्वारा स्वीकार, किया जाता है ॥१०१ ॥

## अथेन्द्रपक्ष्यैर्ब्राह्मणैरुद्घोषितं देवेन्द्रमहत्त्वम्।

(ब्राह्मणैरर्पितमिन्द्रमहत्त्वे स्वसंमतिरूपं स्वीकारपत्रम्)

**(१) तत्र प्रक्रान्ते ब्राह्मणानां विचारयुद्धे प्रथमं तावत् काण्वो देवेन्द्रपक्षपाती स्ववर्ग्यानार्य्यानभ्यादिदेश।**

**मा चिदन्यद् वि शंसत सखायो मा रिषण्यत।**
**इन्द्रमित्स्तोता वृषणं सचा सुते मुहुरुक्था च शंसत॥८।१।१॥**

**(२) नृमेधा आह–**

**इन्द्राय साम गायत विप्राय बृहते बृहत्।**
**धर्म्मकृते विपश्चिते पनस्यवे॥(८।९८।१)**

**(३) हिरण्यस्तूप आह–**

**सूर्य्यस्येव रश्मयो द्रावयित्नवो मत्सरासः प्रसुपः साकमीरते।**
**तन्तुं ततं परि सर्गास आशवो नेन्द्रादृते पवते धाम किञ्चन॥(९/६९/६)**

---

(१) विशंसत =वृथोच्चारयत। रिषण्यत =वृथोपक्षीणा भवत॥ वृषणं =कामदम्। इत् =एव। सचा =सह। उक्था =स्तोत्रैः।

(२) धर्मकृते =संस्कारकर्त्रे। विपश्चिते =विवेचकबुद्धये। पनस्यवे = स्तुतिकामाय॥

(३) द्रावयित्नवोः =द्रवणशीलाः। मत्सरासः =मदकराः। प्रसुपः =स्वापयितारः। आशवः =आश्नुवानाः। सर्गासः = सृज्यमानाः सोमाः रश्मयो वा। ततं विस्तृतं तन्तुं सूत्रं परितः सहैव प्रेरयन्ति।

(४) वामदेव आह-

नकिरिन्द्र त्वदुत्तरो न ज्यायां अस्ति वृत्रहन्।
नकिरेवा यथा त्वम्।। (४।३०।१) ।
त्वोतासो मघवन्निन्द्र विप्रा वयं ते स्याम सूरयो गृणन्तः।
भेजानासो बृहद्दिवस्य राय आकाय्यस्य दावने पुरुक्षोः ।।(४।२९।५) ।

(५) रेणुर्वैश्वामित्र आह-

इन्द्रो दिव इन्द्र ईशे पृथिव्या इन्द्रो अपामिन्द्र हत् पर्वतानाम्।
इन्द्रो वृधामिन्द्र इन्मेधिराणामिन्द्रः क्षेमे योगे हव्य इन्द्र।।(१०/८९/१०)

(६) पूरणो वैश्वामित्र इन्द्रं संबोध्याह-

तुभ्यं सुतास्तुभ्यमु सोत्त्वासस्त्वां गिरः श्वात्र्या आ ह्वयन्ति।
इन्द्रेदमद्य सवनं जुषाणो विश्वस्य विद्वाँ इह पाहि सोमम्।।(१०।१६०।२)
अथ स स्ववर्ग्येभ्य इन्द्रं प्रशंसति-
अनुस्पष्टो भवत्येषो अस्य यो अस्मै रेवान्न सुनोति सोमम्।
निररत्नौ मघवा तं दधाति ब्रह्मद्विषो हन्त्यनानुदिष्टः ।। (१०/१६०/४)

७. अथ गर्ग आह-

तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम।
स सुत्रामा स्ववाँ इन्द्रों अस्मे आराच्चिाद्द्वेषः सनुतर्युयोतु ।।(६।४७।१३)

इन्द्रः सुत्रामा स्ववाँ अवोभिः सुमृळीको भवतु विश्ववेदाः।
बाधतां द्वेषो अभयं कृणोतु सुवीर्य्यस्य पतयः स्याम।।(६।४७।१२)

---

(४) नकिः = नत्वेव। त्वोतासः = त्वया रक्षिताः। गृणन्तः = स्तुवन्तः। वृहद्दिवस्य = महाप्रकाशस्य। आकाय्यस्य = समन्तात् स्तुत्यस्य। रायो = धनस्य। दावने = दाननिमित्ते। भेजानासः = भजमानाः स्याम। पुरुक्षोः = ब्रह्वन्नस्य ॥

(५) अपां = तरलानां। पर्वतानां = कठिनानां। वृधाम् = वृद्धानां । मेधिराणां = प्राज्ञानाम् । क्षेमे = प्राप्तस्य रक्षणे। योगे = अप्राप्तलाभाय प्रयोगे ॥

(६) सुताः = अभिषुताः सौमाः। सोत्वासः = अभिषोतव्या । श्वात्र्यः = क्षिप्रं प्रवर्त्तमानाः ।आह्वयन्ति = आक्रोशन्ति। जुषाणः = सेवमानः। पाहि=पिब। अनुस्पष्टः = प्रत्यक्षः । रेवान् = धनवान्। अरत्नो = निर्दधाति हन्ति = गृह्णाति। अनानुदिष्टं = अप्रार्थितः। ब्रह्मद्विषः = ब्राह्मणस्य शत्रून्।

(७) स्ववान् = धनवान्, आत्मीयतावान् वा। अस्मे = अस्माकम्। द्वेषः = शत्रून्। सनुतः = अन्तर्हितान्, न्तर्हितो वा। आराच्चित् = दूरत एव। युयोतु = पृथक् करोतु। अवोभिः = रक्षाभिः। सुमृडीकः = खप्रदः। विश्ववेदाः = सर्वधनः।

## १५. इन्द्रपक्ष के ब्राह्मणों के द्वारा देवेन्द्र के महत्त्व को उद्घोषित किया जाना

(ब्राह्मणों द्वारा इन्द्र के महत्त्व के बारे में अर्पित स्वसंमतिस्वरूप स्वीकृतिपत्र)

**(१) ब्राह्मणों के इस मतभेद रूप विचारयुद्ध के उत्पन्न हो जाने पर देवराज इन्द्र के पक्ष-पाती कण्व मुनि ने सर्वप्रथम अपने वर्ग के आर्यों को आदेश दिया॥**

हे मित्रो! तुम किसी अन्य देव की स्तुति मत करो। अन्य देव की स्तुति करके दुःखी मत होओ। सोमरस के निचोड़े जाने वाले यज्ञ में बलशाली इन्द्र की ही एकमात्र स्तुति करो। इन्द्र के स्तोत्रों को ही बार-बार बोलो॥ (८/१/१)

**(२) नृमेधा ऋषि ने कहा–**

हे मनुष्यों! ज्ञानी, महान् धर्म के काम करने वाले, विद्वान् तथा प्रशंसनीय इन्द्र के लिए बृहत् साम का गान करो ॥(८/९८/१/)

**(३) हिरण्यस्तूप ने कहा–**

सूर्य की किरणों के समान, गमनशील तथा आनन्द देने वाले, शत्रुओं का विनाश करने वाले, त्वराशील, सोमरस तने हुए धागों में से छाने जाते हैं। ऐसे सोमरस इन्द्र के अतिरिक्त अन्य किसी भी स्थान पर नहीं जाते हैं॥ (९/६९/६)

**(४) वामदेव ने कहा–**

हे वृत्र को नाश करने वाले इन्द्र! तुम से श्रेष्ठ अन्य कोई भी नहीं हैं। तुम से बड़ा भी कोई नहीं है। जैसे तुम हो वैसा अन्य कोई नहीं है॥ (४/३०/१)

हे ऐश्वर्यवान् इन्द्र! तेरे द्वारा संरक्षित ज्ञानी, स्तुति करने वाले तथा बुद्धिमान् हम अत्यन्त तेजस्वी, चारों ओर प्रशंसित होने वाले तथा बहुत अन्न से युक्त तेरे धन के दान में भाग लेने वाले हों॥४/२९/५)

---

(१) विशंसत = व्यर्थ। रिषण्यत = व्यर्थ हानि उठाना। वृषणम् = कामना-पूर्ति करने वाला। इत् = ही। स चा = साथ। उक्था = स्तोत्रों से।

(२) धर्मकृते = संस्कार करने वाले के लिए। विपश्चिते = विद्वान् के लिए। पनस्यवे = प्रशंसनीय के लिए।

(३) द्रावयित्नवो = द्रवणशील। मत्सरासः = आनन्ददायी। प्रसुपः = शत्रुओं का नाश करने वाला। आशवः = त्वराशील। सर्गासः = सृज्यमान सोम अथवा रश्मियाँ।

(४) न कि = नहीं है। त्वोतासः = तुम्हारे द्वारा रक्षित। गृणन्त = स्तुति करते हुए। बृहद्दिवस्य = तेजस्वी का। आकाय्यस्य = चारों ओर से स्तुत्य। रायो = धन का। दानवे = दाननिमित्त। भेजानासः = भाग लेने वाले बने। पुरुक्षोः = बहुअन्नयुक्त।

**(५) रेणु वैश्वामित्र ने कहा-**

इन्द्र द्युलोक का स्वामी है। इन्द्र पृथ्वी, जल और पर्वतों का भी स्वामी है। इन्द्र बुद्धि और बुद्धिमानों का स्वामी है। योग (अप्राप्त की प्राप्ति) और क्षेम (प्राप्त की रक्षा) के लिए इन्द्र की स्तुति करनी चाहिये॥ (१०/८९/१०)

**(६) विश्वामित्र के मित्र पूरण ने इन्द्र को संबोधित करते हुए कहा-**

हे इन्द्र! तेरे लिए ही यह सोमरस निचोड़ा हुआ है। इससे आगे भी तेरे लिए ही निचोड़ा जायेगा। सर्वदा सुखदायक, पवित्र स्तुति-रूप स्तोत्रवाणियाँ तुझे ही बुला रही हैं। आज इस प्रातःसवन को स्वीकार करके हे सर्वज्ञ! तू हमारे इस यज्ञ में सोमपान कर॥ (१०/१६०/२)

**तत्पश्चात् वह अपने वर्ग को इन्द्र की प्रशंसा करते हुए कहते हैं-**

जो धनवान् के समान इसके लिए ही सोमरस प्रदान करता है, वह इन्द्र उसको दृष्टिगोचर होता है। धनवान् इन्द्र बाहु से पकड़कर उसे भयमुक्त करता है। बिना याचना किये ही वह विद्वानों के द्वेषी शत्रुओं को नष्ट करता है॥ (१०/१६०/४)

**(७) तदनन्तर गर्ग बोले**

पूज्य पुरुष की उत्तम बुद्धि में हम रहें, हम कल्याणकारी और अच्छे मन से युक्त हों। उत्तम पालना करने वाला, धनवान् वह इन्द्र हम से दूर देश में भी छिपे हुए हमारे शत्रुओं को सदा के लिए हम से दूर कर दे॥ (६/४७/१३)

अच्छे प्रकार से रक्षा करने वाला, आत्मशक्ति से युक्त वह इन्द्र रक्षाकार्य से सुख देने वाला हो। निर्भयता प्रदान करें। हम उत्तम बल के स्वामी बनें ॥(६/४७/१२)

## अभ्यर्थनाभिरुत्तेजितेन स्वयं देवेन्द्रेणासुरनिहननम्।

**तत्र विवादावसरे गर्गाहूतः क्षणादुपस्थाय।**
**इन्द्रोऽनिन्द्रानेतान् क्षिपन्नुवाच स्वयं घृष्णवन्॥**

---

(५) अपां = जलों का । पर्वतानां = कठिन पदार्थों का । वृधाम् = वृद्धों को। मेधिराणां = बुद्धिमानों का। क्षेमे = प्राप्त की रक्षा में। योगे = अप्राप्त की प्राप्ति में।

(६) सुताः = सोमरस निचोड़ा हुआ। सोत्वासः = स्तुति रूप स्तोत्र। श्वात्राः = शीघ्र होने वाली। आह्वयन्ति = बुला रही है। जुषाणः = स्वीकार करते हुए। पाहि= पीओ। अनुस्पष्ट = प्रत्यक्ष। रेवान् = धनवान्। अरत्नौ = मुक्त करता है। हन्ति = पकड़ता है। अनानुदिष्टः = अप्रार्थित। ब्रह्मद्विषः = ब्राह्मणों का शत्रु।

(७) स्ववान् = धनवान्, आत्मीयतावान्। अस्मे = हमारे। द्वैषः = शत्रुओं को। सनुतः = अन्तर्हितों को। आराच्चित् = दूर से। युयोतु = पृथक् करो। अवोभि: = रक्षा से। सुमृडीकः = सुखप्रद। विश्ववेदाः = सर्वधन।

(८) अभीदमेकमेको अस्मि निष्षाळभी द्वा किमु त्रयः करन्ति।
खले न पर्षान् प्रति हन्मि भूरि किं मा निन्दन्ति शत्रवोऽनिन्द्राः ॥
(ऋ.सं.१० ।४८ ।७)

*

एवं क्रुध्यन्निन्द्रोऽभिव्लङ्गायाभिचक्रमे सद्यः ।
युद्धाभिशङ्कया प्राक् संनद्धामासुरीं सेनाम् ॥१ ॥
क्षुद्रे युद्धे तस्मिन्निन्द्रभटा एकविंशतिर्निहताः ।
निहतास्तु यातुमत्यां तिस्रः पञ्चाशतोऽरिसेनायाम् ॥२ ॥ (१५०)
येऽत्रानिन्द्रा आर्य्यास्तेषां दाहः प्रमीतानाम् ।
असुराणां मृतदेहा नादह्यन्त क्षितौ त्वधीयन्त ॥३ ॥
मृतदेहा असुराणां यत्र गृहे शेरते निहिताः ।
तद्गृहमर्मकमुक्तं वैलस्थानेऽर्मकाणि कल्प्यन्ते ॥४ ॥
आर्मीनियेति नाम्ना प्रथितं प्रान्तं तदर्मकं मन्ये ।
देवासुरसंग्रामे हतासुराणां श्मशानं तत् ॥५ ॥
असुरश्मशानभूमिं वैलस्थानाख्यया स्म ते ब्रुवते ।
राज्ञां महाश्मशानं तथैव कथितं महावैलम् ॥६ ॥
बहवोऽनिन्द्रा युद्धे निहता निहिताश्च ते महावैले ॥
एतच्च परुच्छेपो युद्धान्ते वर्णयामास ॥७ ॥

## १६. प्रार्थना से उत्तेजित होकर स्वयं देवराज इन्द्र द्वारा असुरों का संहार

इस प्रकार विवाद के समय गर्ग के द्वारा बुलाये गये इन्द्र ने तत्काल उपस्थित होकर इन इन्द्रविरोधियों पर आक्षेप करते हुए तिरस्कार किया और स्वयं इन इन्द्रविरोधियों से कहने लगे ॥१ ॥

(८) अभी मैं अकेला ही एक शत्रु को पराजित कर सकता हूँ, शत्रुरहित मैं दो असह्य शत्रुओं को पराजित कर सकता हूँ। तीन को भी मैं पराजित कर सकता हूँ, वे मेरा कुछ नहीं बिगाड़ सकते हैं। जैसे किसान धान के लिए सूखे पौधों को मसलता है वैसे ही मैं निन्दा करने वाले अनिन्द्रों को मसल डालता हूँ॥ (१०/४८/७)

---

(८) अभि अस्मि = अभिभवामि। निःषाट् = निःशेषं धर्षयिता। खले यथा निष्पावजीर्णब्रीह्यादिस्तम्बाननायासेन कर्षकः प्रतिहन्ति तद्वत् पर्षान् = परुषान् निष्ठुरान् बहूनपि शत्रून् प्रतिहन्मि।

* अभिब्लङ्ग = अभियानम् = अभ्याक्रमणम् = चढ़ाई, हमला॥

(८) अभि अस्मि = पराजित कर सकता हूँ। निःषाट् = नष्ट करने वाला। जैसे किसान सूखे गेहूँ को मसल देता है, वैसे ही निष्ठुर शत्रुओं को मैं मार डालता हूँ।

इस प्रकार नाराज होते हुए इन्द्र ने युद्ध की आशंका से पहले से ही तैयार आसुरी सेना पर शीघ्र ही आक्रमण के लिए उपक्रम किया ॥१ ॥ इस छोटे से युद्ध में इन्द्र के इक्कीस योद्धा मारे गये तथा युद्ध-तत्पर आसुरी सेना के तीन पचास अर्थात् (५०x३ = १५०) डेढ़ सौ योद्धा मारे गये ॥२ ॥

इस इन्द्र की सेना में इन्द्र की निन्दा करने वाले भी जो आर्य थे, उनको मरने के पश्चात् जलाया गया, परन्तु आसुरों के मृत शरीरों का दाहसंस्कार नहीं किया गया अपितु उनको भूमि में रख दिया गया ॥३ ॥

असुरों के मृत शरीर भूमि में जिस घर में रखे जाते है, उन्हें "अर्मक" कहा जाता है तथा जिस स्थान पर ये "अर्मक" बनाये जाते हैं, उस स्थान को "वैलस्थान" कहा जाता है ॥४ ॥

मैं मानता हूँ कि आर्मीनिया नाम का जो प्रान्त हैं, वह सम्भवतः अर्मक ही रहा होगा, जो देवासुर-संग्राम में मरे हुए असुरों का श्मशान था ॥५ ॥

असुरों की श्मशान-भूमि वैलस्थान के नाम से कही जाती थी तथा राजाओं के महाश्मशान को "महावैल" कहा गया ॥६ ॥

बहुत से असुर, जो युद्ध में मारे गये थे और उनको महावैल में स्थापित किया गया, ऐसी घटना का परुच्छेप ने युद्ध के अन्त में वर्णन किया है ॥७ ॥

## असुरपराभवान्ते परुच्छेप इन्द्रं महयति ।

(९) उभे पुनामि रोदसी ऋतेन द्रुहो दहामि सं महीरनिन्द्राः ॥
*
अभिव्लग्य यत्र हता अमित्रा वैलस्थानं परि तृळहा अशेरन् ॥
(१ ।१३३ ।१)

(१०) अभिव्लग्या चिदद्रिवः शीर्षा यातुमतीनाम् ॥
छिन्धि वटूरिणा पदा महावटूरिणा पदा ॥ (१ ।१३३ ।२)

(११) अवासां मघवञ्जहि शर्धो यातुमतीनाम् ॥
वैलस्थानके अर्मके महावैलस्थे अर्मके ॥(१ ।१३३ ।३)

---

(९) ऋतेन = बलेन शत्रूणामपगमनेन। पुनामि = पावयामि लोकद्वयं शत्रुशून्यं भावयामि। अनिद्रा महीः संदहामि। परितृढा = हिंसिताः। अभिव्लग्य = युद्ध

(१०) अद्रिवः = वैरिभक्षकः। यद्वा अद्रेर्मेघस्य विदारक हे इन्द्र। यातुमतीनां = सेनानां शीर्षाणि अभिब्लङ्ग्याचित् = अभ्याक्रम्यैव छिन्धि चूर्णय। वटूरिणा वेष्टनशीलेन हस्तिसंबंधिना पादेन वटवेष्टने। ऊरच। (खर्जिपिज्यादिभ्य उरोलचौ) लंगर का हाथी वटूरे।महावटूरि = ऐरावत हाथी।

(११) यातुमतीनां = यातनासाधनशस्त्रवतीनाम् आसुरसेनानां बलं शर्धः अपजहि। वैलस्थानके = श्मशानदेशे। अर्मके = शवगृहे प्रक्षेपय।

÷
(१२) यासां तिस्रः पञ्चाशतोऽभिव्लङ्गैरपावपः ॥

x
तत् सु ते मनायति तकत्सु ते मनायति ॥(१मं०१३३सू०४)
() + *

(१३) इन्द्राय हि द्यौरसुरो अनम्नतेन्द्राय मही पृथिवी वरीमभिर्द्युम्नसाता वरीमभिः ।
इन्द्रं विश्वे सजोषसो देवासो दधिरे पुरः ॥
इन्द्राय विश्वा सवनानि मानुषा रातानि सन्त मानुषा ॥५ ॥
(१मं०१३१ सू०१)

## १७. असुरों को परास्त करने के पश्चात् परुच्छेप द्वारा इन्द्र की महिमा का वर्णन

(९) मैं यज्ञ के बल से दोनों लोकों को पवित्र करता हूँ। इन्द्र के विरोधी समस्त बड़े बड़े शत्रुओं को जलाता हूँ। जहाँ शत्रु लड़ते हुए मारे गये तथा मरे हुए सब श्मशानस्थान पर सो गये ॥१/१३३/१)

(१०) हे वज्रधारी इन्द्र ! तू हिंसा करने वाले अपने शत्रुओं के सिर पर पहुँच कर अपने अत्यधिक विशाल पाँव से उन्हें नष्ट कर दे ॥ (१/१३३/२) ॥

(११) हे धनवान् इन्द्र ! तू कुत्सित मरे हुए लोगों के स्थान पर घृणित बड़े श्मशानों में इन हिंसा करने वाली सेनाओं का बल नष्ट कर दे ॥१/१३३/३)

---

÷ कुचल दिये गये। x शबासी, खूब, इतनी सी में क्या।

(१२) अभिब्लङ्गैः = रमलाकरकैः। अपावपः = व्यनाशयः। तत् ते कर्म सुमनायति सुष्ठु संभाव्यते अथवा तकत् अत्यल्पं ते कर्म भाव्यते।

(१३) द्यौरसुरः = दिविष्ठो सुरवर्गः। अनस्तत = स्वयमेव प्रह्वीभवति। वरीमभिः = वरणीयैः स्तोत्रैः हविभिर्वा। द्युम्नसातो = अन्नस्य यशसो वा लाभनिमित्ते प्रह्वा भवन्ति। सजोषसः = ऐकमत्यं गताः सर्वे देवाः इन्द्रमेव प्रमुखं चक्रुः। सर्वाणि च मनुष्यैर्देयानि पुरोडाशादीनि इन्द्रायैव कल्पयामासुः।
() शिर झुकाते रहते हैं। + नजराना। * इज्जत बखशिश के मौके पर।

(९) ऋतेन = यज्ञ के बल से। पुनासि = पवित्र करता हूँ।अनिन्द्रा महीः संदाहामि = अनिन्द्रों को मारता हूँ। परितृढाः = मरे हुए। अभिव्लंग्य = लड़ते हुए।

(१०) अद्रिवः = वज्रवाले इन्द्र। यातुमतीनाम् = हिंसावाले शत्रुओं को। वदूरिणा = विशाल महावदूरिणा = अत्यधिक विशाल।

(११) वैलस्थानके = श्मशान में। अर्मके = घृणित, कब्र में।

(१२) हे इन्द्र! जिन तीन पचास अर्थात् एक सौ पचास शुत्रओं की अपनी घेरने वाली नीति से तूने मार दिया, भक्तवर्ग तेरे उस कर्म की बड़ी प्रशंसा करते हैं॥ (१/१३३/४)

(१३) शक्तिशाली असुरसेना द्यौ इन्द्र के सामने नष्ट हो गई। बड़ी पृथ्वी अपनी श्रेष्ठ वस्तुओं के साथ इन्द्र के समक्ष नष्ट हो गई। अन्न की प्राप्ति के युद्ध में उत्तम साधनों से युक्त शत्रु भी नष्ट हो गये। समस्त समान उत्साह वाले देवों ने इन्द्र को सबसे आगे स्थापित किया। समस्त मनुष्यों से सम्बद्ध सवन और मनुष्यों द्वारा दिये हुए दान इन्द्र के लिए हैं। (१/१३१/१)

## अथ पुरुहन्मा आह।

**अत्यन्तं क्रुध्यन्तं तमिन्द्रमुपशान्तयंश्च पुरुहन्मा।**
**अस्येन्द्रस्यात्मानं महयत्यधिदैवतं चेन्द्रम्॥१॥**

**(१४) यद् द्याव इन्द्र ते शतं शतं भूमीरुत स्युः।**
**न त्वा वज्रिन्सहस्नं सूर्य्या अनु न जातमष्ट रोदसी॥(८।७०।५)**

## १८. तदनन्तर पुरुहन्मा का कथन

अत्यन्त क्रोधित होते हुए उस इन्द्र को शान्त करते हुए इस इन्द्र की आत्मा की तथा इन्द्र के अधिदैवत की पुरुहन्मा ने प्रशंसा की॥१॥

हे इन्द्र! यदि यह द्युलोक सौ हो जावे अथवा सूर्य भी हजारों हो जावे, तब भी वे सब मिलकर भी तेरे बराबर नहीं हो सकते हैं। प्रकट हुई यह रोदसी भी तेरी बराबरी नहीं कर सकती है॥ (८/७०/५)

## अथ श्रुतकक्ष आह-

**श्रुतकक्षोपि ब्रूते न त्वामतिरिच्यते कश्चित्।**
**अर्हसि सोमं पातुं त्वमेव नैषोऽसुरोन्यो वा॥२॥**

**(१५) त्वे सुपुत्र शवसोऽवृत्रन् कामकातयः।**
**न त्वामिन्द्राति रिच्यते॥(८।९२।१४)**

---

(१२) अभिब्लंगै = घेरने वाली चालों से। अपावपः = मार दिया। तत् ते कर्म सुमनायति = तेरे उस कर्म की प्रशंसा करते हैं।

(१३) द्यौरसुरः = द्यौ के शक्तिशाली असुर। अनम्नत = नम्र हो गई। वरीमभिः = उत्तम साधनों से युक्त।द्युम्नसाता = अन्न की प्राप्ति के युद्ध में। सजोषसः = समान उत्साह वाले।

द्युम्नसाता = अन्न की प्राप्ति के युद्ध में। सजोषसः = समान उत्साह वाले।

(१५) हे बलवत्पुत्र = वलजाता कामाभ्यर्थकाः कै शब्देक्तिन्.। त्वे = त्वयि। सु अवृवत्रन् = अवृण्वत।

(१६) आ त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः।
न त्वामिन्द्राति रिच्यते ॥(८ ।९२ ।२२)

(१७) पराकात्ताच्चिदद्रिवस्त्वां नक्षन्त नो गिरः।
अरं गमाम ते वयम्॥ (८ ।९२ ।२७)
एवा ह्यसि वीरयुरेवा शूर उत स्थिरः।
एवा ते राध्यं मनः ॥(८/९२/२८)
१ ३ २
त्वयेदिन्द्र युजा वयं प्रति ब्रुवीमहि स्पृधः।
त्वमस्माकं तव स्मसि ॥८ ।९२ ।३२)

## १९. श्रुतकक्ष का कथन

श्रुतकक्ष भी बोले कि कोई भी तुमसे अधिक शक्तिशाली नहीं है। तुम ही एक मात्र सोम का पान करने के योग्य हो। यह असुर अथवा अन्य कोई असुर सोमपान नहीं कर सकता है ॥२ ॥

(१५) हे बल के पुत्र इन्द्र ! कामना करने वाले तेरे साथ उत्तमता का व्यवहार करते हैं। हे इन्द्र ! तुझ से बढ़कर और कोई नहीं है।८/९२/१४)

(१६) हे इन्द्र ! जिस प्रकार नदियाँ समुद्र में प्रवेश करती हैं उसी प्रकार सोमरस तुझ में प्रविष्टि हो। तुझसे बढ़कर और कोई पूज्य नहीं है ॥(८/९२/२२/)

(१७) हे वज्रधारी इन्द्र ! हमारी स्तुतियाँ दूर से भी तुझे प्राप्त हो जाती हैं। हे इन्द्र ! हम तेरे धन को अधिक मात्रा में प्राप्त करें ॥(८/९२/२७)

हे इन्द्र ! तू वीरों की कामना करने वाला है। तू शूरवीर है। हे इन्द्र ! तू युद्ध में स्थिर रहने वाला है। तेरा मन आराधना करने योग्य है॥ (८/९२/२८)

हे इन्द्र ! हम तेरी सहायता से ही शत्रुओं का सामना करते हैं। तू हमारा है और हम तेरे हैं॥ (८/९२/३२)

---

(१६) नद्यः समुद्रमिव सोमाः त्वाम् आविशन्तु। त्वत्तोऽधिकः सामर्थ्यवान्नास्ति।
(१७) हे अद्रिवः वज्रवन्। पराकात्ताव चित् अतिदूरतोऽपि नक्षन्त = व्याप्नुवन्तु। अरं पर्याप्तम्।
१–सहायकेन २–स्पर्धमानान्। ३–निराकुर्वीमहि।
(१५) हे बलवत्पुत्र = बल के पुत्र। त्वे = तेरे साथ। सुऽवृत्रन् = उत्तम व्यवहार करें।
(१६) नदियाँ जैसे समुद्र में प्रवेश करती हैं वैसे ही सोमरस तुझ में प्रवेश करें। तुझसे अधिक सामर्थ्यवान् कोई नहीं है।
(१७) हे अद्रिवः = हे वज्रधारी इन्द्र। पराकात्ताचित् = दूर से भी प्राप्त हो जाती है।
(२) १- सहायता से। २- स्पर्धा करने वालों का। ३- मुकाबला करें।

## अथ हैमवर्चिः प्राह –

४
एतावद्रूपं यज्ञस्य यद्देवैर्ब्रह्मणा कृतम् ।
तदेतत् सर्वमाप्नोति यज्ञे सौत्रामणीसुते ।। (१९।३१ यजुःसं०)

७ ६ ५ ८
*सुरावन्तं वर्हिषदं सुवीरं यज्ञं हिन्वन्ति महिषा नमोभिः ।
दधानाः सोमं दिवि देवतासु मदेमेन्द्रं यजमानाः स्वर्काः ।।
(१९।३२।यजु. सं०)

## २०. हैमवर्चि का कथन

देवताओं और ब्रह्मा द्वारा यज्ञ के उत्तम स्वरूप का वर्णन किया गया है। सौत्रामणी यज्ञ में सोमरस निकालने पर वह (यजमान) यज्ञ के स्वरूप को पूर्णतया प्राप्त करता है ।।

अन्नों के साथ स्वर्ग में रहने वाले देवताओं के लिए सोम को धारण करने वाले महान् ऋत्विज् कुशासन पर स्थित देवताओं से युक्त उत्तम सोमरस को तैयार करने वाले उत्तम ऋत्विज् को बढ़ाते हैं ।। हम भी इस यज्ञ में उत्तम अन्न वाले इन्द्र का यज्ञ करते हुए हर्ष को प्राप्त करें ।। (यजु. १९/३१-३२)

## वरुणनप्तुर्बृहद्दिवस्य कालेन ब्रह्मनप्तृत्वम् ।

वरुणतनूजोऽथर्वा बृहद्दिवोऽथर्वणः पुत्रः ।
सोऽथर्वा, स बृहद्दिव, एतौ पक्षं विनिन्यतुर्दैवम् ।।१ ।।
ब्रह्मण एषोऽथर्वा बभूव कालेन मानसः पुत्रः ।
पुत्रत्वेन स मनसाऽनुभावितः कृत्रिमः पुत्रः ।।२ ।।
अत एवैषोऽथर्वा तस्य च पुत्रो बृहद्दिवो नाम ।
बाल्हीके प्रागास्तां पश्चात् तौ पुष्करेऽस्थाताम् ।।३ ।।
ब्रह्मपुरं यत्पुष्करमद्य बुखारेति गद्यते यच्च ।
तत्रत्य इन्द्रमूचे बृहद्दिवोऽथर्वणः पुत्रः ।।

---

४- ब्रह्मा के द्वारा ५- महान् ऋषि लोग। ६- प्राप्त करते हैं। ७- सुन्दर ऋत्विज। ८- अन्न से। ९- अन्न, देव, मंत्र, भूत, वृक्ष। सुरायुक्त तथा सुन्दर परिणामों से युक्त यह सौत्रामणी यज्ञ है।

* सुरावान् वा एष वर्हिषद् यज्ञो यत् सौत्रामणी। इति श्रुतिः १२।८।१।२। बर्हिषि सीदन्ति देवा यत्र तम्।

## २१. वरुण के पौत्र बृहद्दिव का समय आने पर ब्रह्म का पौत्र बन जाना

वरुण का पुत्र अथर्वा था, अथर्वा का पुत्र बृहद्दिव हुआ। ये दोनों ही (बृहद्दिव और अथर्वा) दैव-पक्ष के समर्थक बने ॥१ ॥

इस अथर्वा को ब्रह्मा ने समय आने पर अपना मानस पुत्र बना लिया। वे उस कृत्रिम पुत्र को अपने पुत्र के समान मानते हुए मन से स्नेह करने लगे ॥२ ॥

इसलिए यह अथर्वा तथा इसका पुत्र बृहद्दिव दोनों ही पहले बाल्हीक में रहते थे तथा बाद में पुष्कर आकर रहने लगे ॥३ ॥

इस ब्रह्मपुर पुष्कर को आजकल बुखारा कहा जाता है। वहाँ रहने वाले बृहद्दिव ने इन्द्र की स्तुति की ॥४ ॥

### बृहद्दिव आथर्वण आह।

१ २
तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्णः।
३ ४ ६ ५
सद्यो जज्ञानो नि रिणाति शत्रूननु यं विश्वे मदन्त्यूमाः ॥
(१० ।१२० ।१)

७ ८ ९ १० ११
वावृधानः शवसा भूर्योजाः शत्रुर्दासाय भियसं दधाति।
१२ १३ १४ १५ १६ १७
अव्यनच्च व्यनच्च सस्नि सं ते नवन्त प्रभृता मदेषु ॥(१० ।१२० ।२)
१८ १९ २०
इति चिद्धि त्वा धना जयन्तं मदेमदे अनुमदन्ति विप्राः।
२१ २२ २३ २४ २५ २६
ओजीयो धृष्णो स्थिरमा तनुष्व मा त्वा दभन्यातुधाना दुरेवाः ॥
(१० ।१२० ।४)

---

१—उद्गूर्णः। २—प्रदीप्तबलः। सूर्यात्मक इन्द्रः। ३—जायमानः। ४—मन्देहादीन् निहिनस्ति ।री गतिरेषणयोः। ष्वादीनां ह्रस्वः। ५—भूतानि वै विश्व ऊमाः। त एनमनुमदन्ति। ६—हृष्यन्ति। ७—वर्धमानः। ८—बलेन। ९—बहुप्रबलः।१०—अपक्षयकारिणे शत्रुःशातयिता।११—भयम्।१२—जडाःअचराः।१३—चेतनाःचराः।१४—इन्द्रेण स्नातं शोधितम्। १५—संगच्छन्ते समूहीभवन्ति। १६—प्रकर्षेण धृतानि पोषितानि सर्वाणि भूतजातानि। १७—हर्षेषु। १८—एवमेव खलु। १९—शत्रुधनानि जयन्तं जयेन प्राप्नुवन्तं त्वामनु। २०—हृष्यन्ति। २१—बलवत्तरम्। शत्रूणां धर्षयिता इन्द्रः।२३—धनमस्मदर्थे विस्तारय १४—मा हिंसन्तु। २५—राक्षसाः २६—दुर्गतयः।

२७ २८
त्वया वयं शाशद्महे रणेषु प्रपश्यन्तो युधेन्यानि भूरि।
२९ ३० ३२ ३१
चोदयामि त आयुधा वचोभिः सं ते शिशामि ब्रह्मणा वयांसि ॥
(१० ।१२० ।५)

३३ ३४ ३५ ३६
इमा ब्रह्म बृहद्दिवो विवक्तीन्द्राय शूषमग्रियः स्वर्षाः ।
३७ ३८ ३९ ४० ४१ ४२
महो गोत्रस्य क्षयति स्वराजो दुरश्च विश्वा अवृणोदप स्वाः ॥
(१० ।१२० ।८)

४३ ४३
एवा महान्बृहद्दिवो अथर्वावोचत्स्वां तन्वमिन्द्रमेव।
४४ ४५ ४६ ४७ ४८
स्वसारो मातरिभ्वरीररिप्रा हिन्वन्ति च शवसा वर्धयन्ति च ॥
(१० ।१२० ।९)

## २२ अथर्वा के पुत्र बृहद्दिव का कथन

समस्त लोकों में वह परब्रह्म ही सर्वश्रेष्ठ आदिभूत है, जिससे प्रचण्ड, उग्र और अत्यन्त तेजस्वी सूर्य उत्पन्न हुआ है। वह उत्पन्न होते ही शीघ्र ही शत्रुओं को नष्ट करता है। सब प्राणी जिसे देखकर आनन्दित होते हैं ॥(१०/१२०/१)[१]

बल से उत्साहित, महान् तेजस्वी और शत्रुओं का नाश करने वाला इन्द्र दासों के मन में भय उत्पन्न करता है। सभी व्यक्त, अव्यक्त, स्थावर तथा जंगम जिसकी कृपा से सुखी हैं। ऐसे हे इन्द्र! उस सुखस्वरूप परमेश्वर की हम सब असीम कृपा के लिए उपासना करें ॥ (१०/१२०/२)[२]

---

२७ शत्रून् शातयामः। २८—योधनार्हाणि९—शत्रून् प्रति प्रेरयामि। ३०—सम्यक् निश्यामि संस्करोमि। ३१—अन्नानि ३२—मन्त्रेण स्तुतिवाक्येन।३३—स्तुतिवाक्यानि। ३४—सुखं यथा स्यात्तथा। ३५—प्रमुखे स्थितः। ३६—स्वर्गसंभक्तः यद्वा इन्द्रसंभक्तः सेवकः ३७—महतः।३८—पर्वतस्य पाषाणस्य वावलासुरेण गोपिधानार्थे निहितस्य। ४०—स्वयं राजमानस्य। ३९—अपगमयति। ४१—विलद्वाराणि। ४२—स्वाश्च सर्वा गाः अपावृणोत्। अपगतावरणा अकरोत्। उद्घाटितवान्। ४३—वृहद्दिवोऽथर्वा अथर्वपुत्रः स्वां तन्वं विस्तृतां स्तुतिम्। इन्द्रं प्रत्येव अवोचत्। ४४—स्वयं सरन्त्वो नद्यः। ४५—भूमो भवन्त्यः। भवतेर्वनिप्। यनोरच्।४६—अपापाः। ४७—इन्द्रमुपगच्छन्ति ४८—बलेन च वर्धयन्ति।

१- (१) उग्र। (२) तेजस्वी। सूर्यात्मक इन्द्र। (३) उत्पन्न होता हुआ। (४) बढ़ते हुए। (५) भूत समस्त ऊम हैं। (६) आनन्दित होते है। २- (७) बढ़ता हुआ। (८) बल से। (९) अत्यधिक। (१०) हानिकारक शत्रुओं को मारने वाला। (११) भय। (१२) जड़, अचर। (१३) चेतन चर। (१४) जिसकी कृपा से व्याप्त हैं। (१५) एकत्रित होते हैं।(१६) परिपालित समस्त भूत तत्त्व। (१७) सुखस्वरूप।

इसी प्रकार सोम पान करने से हर्षित होकर हे इन्द्र! जब तू धन को जीतता है, तब मेधावी स्तोता तेरी ही स्तुति करते हैं। शत्रुओं को पराजित करने वाले हे इन्द्र! तू अत्यन्त बलवान् है। तू हमें स्थिर धन प्रदान कर। दुष्ट राक्षस तेरा नाश न करें।।(१०/१२०/४)[१]

हे इन्द्र! तेरी कृपा से हम युद्ध में शत्रुओं का नाश करते हैं। युद्ध करने योग्य उनके साधनों को हम पहचानें। तेरे अस्त्रों को, वज्रायुध को मैं स्तुति करके उत्साहित करूँ[२]। तेरे लिए स्तुतियुक्त मंत्रों से हवि इत्यादि अन्न को शुद्ध करता हूँ।।(१०/१२०/५)[२]

समस्त ऋषियों में श्रेष्ठ और स्वर्ग की इच्छा करने वाले बृहद्दिव ऋषि इन वेदमंत्रों को इन्द्र की प्रसन्नता के लिए बोलते हैं। वह तेजस्वी, सुन्दर और महान् गायों[३] का अधिपति बने। वह अपने आने के समस्त द्वारों को खोलता है।। (१०/१२०/८)[३]

इस प्रकार महान् अथर्वा-पुत्र बृहद्दिव ने इन्द्र के लिए ही अपनी स्तुति का पाठ किया। माता के समान भूमि पर उत्पन्न, पवित्र नदियाँ भगिनी के तुल्य होकर इन्द्र को प्रसन्न[४] करती हैं। पूर्ण जल से युक्त करती हैं, उसे बल से वर्धित करती हैं।। (१०/१२०/९)[४]

## दीर्घतमा औतथ्य:, कुत्स आङ्गिरसश्च वरुणस्याग्नित्वमाहतु:।

***मैत्रमहस्तु निशीथान्मध्यदिनान्तं, ततो निशीथान्ता।**
**रात्रिर्हि वारुणी सा मित्रावरुणौ तदादित्यौ।।१।।**
**ऐन्द्रमहश्चाग्नेयी रात्रि: प्रतिपद्यते तस्मात्।**
**इन्द्रो मित्रादित्यो वरुणस्त्वग्नि: स्थितोऽप्सु यो निहित:।।२।।**
**वरुणस्याग्नित्वाख्या तैत्तिरकब्राह्मणस्य के सेके।। (१।७।१)**
**अपि शतपथस्य मेखेलेख्ये (५।२।३।१२) दृष्टा च राजसूयविधौ।।३।।**
**इह राजसूययज्ञे इन्द्रतुरीय: प्रचर्यते याग:।**
**तत्राग्निवरुणारुद्रा इन्द्रात्पूर्व्यास्त्रयोऽग्निभागा: स्यु:।।४।।**
**पिण्डेऽग्निरग्निरुक्तो वरुणो नामाग्निरुच्यतेऽप्स्वन्त:।**
**अग्निर्वायौ रुद्रो भूमिरसत्वात्त्रयोऽग्नयस्तेऽमी।।५।।**

---

१- (१८) इसी प्रकार। (१९) शत्रु-धन को जीतते हुए। (२०) आनन्दित होते हैं। (२१) बलवान्। (२२) शत्रुओं को मारने वाला। (२३) हमें धन प्रदान कर। (२४) नाश न करें। (२५) राक्षस (२६) दुर्गति।

२- (२७) शत्रुओं का नाश करते हैं। (२८) युद्ध करने योग्य। (२९) शत्रु के प्रति उत्साहित करता हूँ। (३०) पवित्र करता हूँ। (३१) अन्नो को। (३२) स्तुतिवाक्यों से।

३- (३३) स्तुतिवाक्य। (३४) सुख के लिए। (३५) अग्रिम। (३६) स्वर्गाभिलाषी। (३७) महान्। (३८) पर्वत का। (३९) दूर करता हूँ। (४०) स्वयं प्रकाशवान् (४१) आने के द्वार। (४२) अपने समस्त अंगों को अपावृत कर लिया।

४- (४३) बृहद्दिव (अथर्वा पुत्र) ने अपनी स्तुति का पाठ इन्द्र के लिए किया। (४४) नदियाँ। (४५) भूमि पर उत्पन्न।(४६) पवित्र। (४७) इन्द्र को प्राप्त होती है।(४८) बल से वर्धित करती है।

*अधिदैवं—दैवमह:- आसुरी रात्रि:। अध्यात्मं-ऐन्द्रमह: आग्नेयी रात्रि:। अधिभूतं-मैत्रमह: वारुणी रात्रि:।

निविडे तरले विरले ध्रुवे च धर्त्रे च धरुणे च।
अग्निर्वरुणो रुद्रः प्रथते त्रेधाऽयमग्निरेकोऽपि ॥६ ॥
सोग्निर्भूमेश्चापामथान्तरिक्षस्य चाधिपतिः ।
इन्द्रस्त्वेष दिवस्पतिरिन्द्राग्नी रोदसीनाथौ ॥७ ॥
तौ सत्तमौ वरिष्ठौ ओजिष्ठौ पारयिष्णुतमौ।
सममेनयोर्महत्त्वं न तयोरवरः परो वा स्यात् ॥८ ॥
अग्निः स्थानविभेदाद्धत्ते नामानि भिन्नानि।
सोऽस्ति सुपर्णः स यमः स मातरिश्वा स वरुणोऽयम् ॥९ ॥
इत्थं दीर्घतमा अपि कुत्सोऽप्याङ्गिरस ऊचतुस्तत्र।
इन्द्रावरुणौ मित्रावरुणौ तौ रोदसीविषयौ ॥१० ॥
"इन्द्रं मित्रं, वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्।
एकं सद्विप्रा बहुधा वदन्ति अग्नि यमं मातरिश्वानमाहुः" ॥
(१ ।१६४ ।४६)

"इन्द्रं मित्रं, वरुणमग्निमूतये मारुतं शर्द्धो अदितिं हवामहे।
रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन" ॥
(१ ।१०६ ।१)

## २३ उतथ्य के पुत्र दीर्घतमा और अंगिरस के पुत्र कुत्स द्वारा वरुण का अग्नित्व-कथन

मध्य रात्रि से मध्य दिन तक का काल दिन ही माना जाता है और वह मित्र का दिन है। मध्य दिन से मध्य रात्रि तक का काल रात्रि है और वह वरुण का काल माना जाता है। अतः ये मित्र और वरुण दोनों आदित्य ही हैं ॥१ ॥*

दिन ऐन्द्र है, इन्द्र का काल है तथा रात्रि आग्नेयी मानी गई है। इसलिए मित्र और आदित्य ही इन्द्र हैं। वरुण ही अग्नि है जो अप्तत्त्व में व्याप्त होकर स्थित है ॥२ ॥

तैतरीय ब्राह्मण के प्रथम भाग के सातवें अध्याय में प्रथम मंत्र में वरुण का अग्नित्व रूप ही वर्णन किया गया है तथा शतपथ के भी (५/२/३/१२) में राजसूययज्ञविधि में ऐसा ही वर्णन मिलता है ॥३ ॥

इस राजसूय यज्ञ में इन्द्र का चौथा भाग माना जाता है। वहाँ अग्नि, वरुण तथा रुद्र, इन तीनों का अग्निभाग इन्द्र से पहले स्थापित किया गया है ॥४ ॥

प्रत्येक पिण्ड में स्थित अग्नि (ऊष्मा) तत्त्व को ही अग्नि कहा गया है। जल में जो अग्नि तत्त्व (ऊर्जा) है, उसे वरुण नाम से कहा जाता है। वायु में जो अग्नि तत्त्व है, उसे

* रात्रि के तीन भेद बताये गये है – (१) अधिदैवत-दैवमहः-आसुरी रात्रि। (२) अध्यात्म-ऐन्द्र दिन– आग्नेयी रात्रि। (३) अधिभूत-मित्र का दिन-वारुणी रात्रि। अपराह्ण से मध्यरात्रि तक का समय वरुण का काल माना जाता है। यह समय पितृकार्य तथा आसुर कार्यों के लिए श्रेष्ठ होता है। मध्यरात्रि पश्चात् मध्यदिन तक का समय ब्रह्म अथवा दैवकाल होता है जो बौद्धिक और दैव कार्यों के लिए श्रेष्ठ होता है।

रुद्र के नाम से कहा जाता है। इसलिए अग्नि, वायु और रुद्र ये तीनों ही भूमि के रस होने के कारण अग्नि ही हैं ॥५ ॥

समस्त निबिड़ तत्त्व (सघन), तरल (जल), तथा विरल तत्त्व (वायु), ध्रुव, धर्त्र और धरुण में भी यह एक अग्नि ही क्रमशः अग्नि, वरुण और रुद्र नामों से तीन प्रकार से कही गई है ॥६ ॥

यह अग्नि ही भूमि, अप्तत्व (जल) और अंतरिक्ष का अधिपति है तथा यह इन्द्र द्युलोक का अधिपति है। इस प्रकार इन्द्र और अग्नि ही इस रोदसी के स्वामी हैं ॥७ ॥

ये दोनों श्रेष्ठ हैं, वरिष्ठ हैं, ओजस्वी है तथा कार्य-सम्पादन की क्षमता रखने वाले (पार लगाने वाले) हैं। इन दोनों का महत्त्व समान है। इन दोनों में कोई छोटा अथवा बड़ा नहीं है ॥८ ॥

यह अग्नि ही स्थानभेद से अनेक नामों को धारण करता है। यह अग्नि ही सुपर्ण (सूर्य) है, यही यम है, यही मातरिश्वा है (वायु) है और यही वरुण है ॥९ ॥

इस प्रकार वहां विवाद के अवसर पर दीर्घतमा औतथ्य ने, कुत्स आंगिरस ने भी यही कहा कि इन्द्र और वरुण तथा मित्र और वरुण दोनों ही इस रोदसी के विषय हैं ॥१० ॥

ऋग्वेद में कहा है— एक ही सत् वस्तु को विद्वान् ज्ञानी लोक अनेक प्रकार से कहते हैं। उसी सत् को इन्द्र, मित्र, वरुण और अग्नि कहते हैं। वह दिव्य है, सुपर्ण है और गरुत्मान् है ॥ (१/१६४/४६)

हम सब अपनी सुरक्षा के लिए इन्द्र, मित्र, वरुण, अग्नि, मरुतों के संघ तथा अदिति को प्रार्थना करते हैं : — हे उत्तम दान दाता वसु गण! हमें सभी संकटों से उसी तरह पार कराओ जिस प्रकार कठिन मार्ग से रथ को संभालकर चलाते हो ॥(१/१०६/१)

## अथ वरुणपक्ष्यैर्ब्राह्मणैरुद्घोषितं वरुणमहत्त्वम्। तत्र ब्राह्मणा ऋग्भिर्वरुणमहिमानं श्रावयन्ति स्म।

इत्थं बहुभिरपीन्द्रः परमाराध्यस्तदा विनिर्णीतः।
किन्तु तदानीमपरे व्याचख्युर्वरुणमाराध्यम् ॥११ ॥
यावादित्यौ मित्रावरुणौ तत एष भिद्यते वरुणः।
एष समुद्रस्येशो यद्गर्भेऽयं दिवस्पतिस्त्विन्द्रः ॥१२ ॥
अत्रिस्तावद् वरुणं व्याचष्टे ब्राह्मणो देवम्।
पञ्चममण्डलसूक्ते पञ्चाशीते त्वृचस्ताहि ॥१३ ॥ (५।८५)

प्र सम्राजे[१] बृहदर्चा[२] गभीरं ब्रह्म प्रियं वरुणाय श्रुताय।
वि यो जघान शमितेव[३] चर्मोपस्तिरे पृथिवीं[४] सूर्य्याय[५] ॥ (५।८५।१)

---

१–प्रयुंक्ष्व। २–प्रतिपादनं निरूपणम्। ३–पशुविशसनकर्त्ता। ४–त्रिलोकीम्। ५–प्रवर्ग्याय।

६ ७ ८ ९ १० ११
वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु, पय उस्त्रियासु।
१२ १३ १४
हृत्सु क्रतुं वरुणो अप्स्वग्निं दिवि सूर्यमदधात्सोममद्रौ। (५।८५।२)
१५ १६
नवीनवारं वरुणः कबन्धं प्र ससर्ज रोदसी अन्तरिक्षम्।
१८ १७
तेन विश्वस्य भुवनस्य राजा यवं न दृष्टिर्व्युनत्ति भूम॥(५।८५।३)
१९ २० २१ २२
उनत्ति भूमिं पृथिवीमुत द्यां यदा दुग्धं वरुणो वष्ट्यादित्।
२३ २४ २५ २६
समभ्रेण वसत पर्वतासस्तविषीयन्तः श्रथयन्त वीराः॥ (५।८५।४)
२७ २८ २९
इमामू ष्वासुरस्य श्रुतस्य महीं मायां वरुणस्य प्र वोचम्।
३० ३१ ३२
मानेनेव तस्थिवाँ अन्तरिक्षे वि यो ममे पृथिवीं सूर्येण॥
(५।८५।५)

३३ ३४ ३५ ३६
इमामू नु कवितमस्य मायां महीं देवस्य न किरा दधर्ष।
३७ ३८ २९ ४० ४१
एकं यदुद्ना न पृणन्त्येनीरासिञ्चन्तीरवनयः समुद्रम्॥ (५।८५।६)
४२ ४३ ४४
अर्यम्यं वरुण मित्र्यं वा सखायं वा सदमिद् भ्रातरं वा।

४५ ४६ ४७ ४८ ४९ ५०
वेशं वा नित्यं वरुणारणं वा यत्सीमागश्चकृमा शिश्रथस्तत्॥
(५।८५।७)

६–काष्ठेषु इष्टकासु अपूवेषुः रञ्जनीयपटेषु। ७–अवकाशम्। ८–उत्साहबलम्। ९–अश्वेषु। १०–क्षीरम्। ११–गोषु। १२–कर्मसंकल्पम्। १३–वैद्युतम्। १४–पाषाणे धनद्रव्ये।१५–अधोमुखम्। १६–मेघमुदकं च। १७–प्रभूतम्। १८–सिञ्चति वपति वाकर्षकः।१९–अन्तरिक्षम्। २०–सहस्रमितासु गोषु रसं धुरादिकम्। २१–इच्छति। २२–अनन्तरमेव। २३–आच्छादिता भवन्ति। २४–बलमिच्छन्ति बलं लभन्ते। २५–श्लथान् कुर्वन्ति। २६–मरुतः शूरा वा! २७–असुरपतेर्देवस्य। २८–महतीम्। २९–प्रभावम्। ३०–मानदण्डेन। ३१–तिष्ठन्। ३२–द्यावापृथिव्यन्तरम्। ३३–प्रकृष्टप्रज्ञस्य। ३४–प्रज्ञाम्। ३५–नैव। ३६–हिनस्ति। ३७–केवलम्। ३८–उदकेन। ३९–पूरयन्ति। ४०–पूरयन्त्यः वहन्त्यः शुक्लाः। ४१–नद्यः। ४२–प्रदातारं गुरुं वा। ४३–अनुरक्तम्। ४४–सर्वदैव। ४५–निकटनिकेतनम्। ४६–अनात्मीयम्। ४७–यदेतत्। ४८–अपराधम्। ४९–अकुर्म.। ५०–श्लथीकुरु।

५१ ५२ ५३ ५४ ५५
कितवासो यद्रिरिपुर्न दीवि यद्वा घा सत्यमुतयन्न विद्म।
५६ ५७ ५८
सर्वा ता विष्य शिथिरेव देवाधा ते स्याम वरुण प्रियासः ॥(५।८५।८)

## २४. वरुणपक्ष के ब्राह्मणों द्वारा वरुण का महत्त्व उद्घोषित किया जाना व ब्राह्मणों द्वारा ऋग्मंत्रों से वरुण की महिमा का श्रावण

इस प्रकार बहुत से ब्राह्मणों द्वारा इन्द्र को श्रेष्ठ आराध्य माना गया, किन्तु अन्य ब्राह्मणों ने वरुण को परमाराध्य माना॥११॥

जो ये आदित्य, मित्रावरुण हैं उनसे वह वरुण भिन्न है। यह समुद्र का स्वामी है, जिसके गर्भ में द्युलोक-पति इन्द्र स्थित है॥१२॥

अत्रि नाम के ब्राह्मण ने वरुण को ही देव (स्तुति-योग्य) कहा। वे ऋचाएँ ऋग्वेद के पंचम मण्डल के पिच्वासीवें सूक्त में कही गई हैं॥१३॥

जैसे कोई व्याध चर्म के लिए पशुओं को मारता है, उसी प्रकार जिसने सूर्य के विचरण करने के लिए विस्तृत द्युलोक को और अधिक विस्तृत किया है, उसी तरह अत्यन्त तेजस्वी प्रसिद्ध वरुण के लिए विस्तृत, गम्भीर और प्रिय लगने वाली स्तुति कर॥ (५/८५/१)[१]

वरुण ने वनों में काष्ठादि अथवा वृक्षादि में अन्तरिक्ष का समुद्र भरा है। (यहाँ वनों से तात्पर्य मेघ भी लिया गया है, जिसके अनुसार वरुण ने मेघों में अन्तरिक्ष का समुद्र भरा है।) घोड़ों में बल की स्थापना की है, गायों में दूध भरा है, हृदय को कर्म करने की शक्ति प्रदान की है, जलों में अग्नि की स्थापना की है, द्युलोक में सूर्य की स्थापना की है तथा पर्वत पर सोम को उगाया है॥ (५/८५/२)

वरुण ने द्यावापृथिवी और अन्तरिक्ष के हित के लिए मेघों का मुख नीचा करके उन्हें मुक्त कर दिया है। उस वृष्टि से सभी भुवनों का स्वामी वरुण भूमि को उसी तरह उपजाऊ बनाता है जिस तरह वर्षा से धान्य पुष्ट होता है॥ (५/८५/३)[२]

---

५१–द्यूतकृतः। ५२–पापमारोपयन्ति। ५३–द्यूते। ५४–सत्यं वा मिथ्या वा। ५५–अज्ञातं वा। ५६–शिथिलानीव।५७–विमोचय। ५८–अथ।

(१) (५/८५/१-२) – १. विस्तृत स्तुति कर। २. गंभीर और प्रिय। ३. व्याध। ४. त्रिलोकी को। ५. सूर्य के लिए। ६. वन में अथवा मेघ में। ७. आकाश। ८. शक्तिसम्पन्न। ९. घोड़ों में। १०. दूध। ११. गायों में। १२. कार्य करने की शक्ति। १३. विद्युज्जन्य को। १४. घन द्रव्य पत्थर में।

(२) (५/८५/३) –१५. नीचा मुख। १६. मेघों को। १७. भूमि को उपजाऊ बनाता है। १८. कृषक सींचता है अथवा बोता है।

जब वरुण जल बरसाना चाहता है, उसके बाद ही वह भूमि, अन्तरिक्ष और द्युलोक को जल से सींचता है। तभी पर्वत मेघ से आच्छादित हो जाते हैं और तब बलवान्, वीर मरुद्गण मेघों को शिथिल कर देते हैं॥ (५/८५/४)[१]

जिस वरुण ने अन्तरिक्ष में रहकर ही दण्ड के समान सूर्य के द्वारा पृथ्वी को मापा, उस प्राणदाता वरुण की महान् बुद्धि की मैं प्रशंसा करता हूँ॥ (५/८५/५)[२]

अत्यन्त ज्ञानी वरुण देव की इस बड़ी माया को आज तक कोई नष्ट नहीं कर सकता है, जिसके कारण प्रवाह वाली, पृथ्वी को सींचने वाली नदियां अपने जल से एक समुद्र को भी नहीं भर पाती॥(५/८५/६)[३]

हे वरणीय वरुण देव! श्रेष्ठ सज्जन पुरुष के प्रति, मित्र के प्रति अथवा अपने सहायक के प्रति सदा भाई के समान व्यवहार करने वाले, सदा समीप में रहने वाले अथवा अपने नेता के प्रति यदि हमने कोई अपराध किया हो तो उस अपराध से हमें मुक्त कर दो॥५/८५/७)[४]

जिस तरह जुआरी जुए में एक दूसरे के प्रति दोषारोपण करते हैं, उसी प्रकार हम पर भी लोगों ने जो मिथ्या आरोप लगाये हैं। अथवा हमने जो सचमुच अपराध किया हो, जिसको हम नहीं जानते हैं, उन सारे अपराधों से हमें मुक्त कर दो। हे वरुण देव! हमारे बंधन शिथिल कर दो, हमें मुक्त कर दो, जिससे हम तुम्हारे प्रिय बने रहें॥ (५/८५/८)[५]

## अपरे ब्राह्मणा उभयोर्महिमानमभ्युपगच्छन्ति स्म।

**अत्र विवादे पश्चान्मध्यस्थाः केचिदासाद्य।**
**उभयोरेव महत्त्वं समानमास्थापयामासुः॥१॥**
**तपसो लोकाज्जाते ऋतसत्ये द्वे इमे नेत्रे।**
**सा क्रन्दसी ऋतेन तु सत्येन तु रोदसी विधृता॥२॥**
**ऋतमित्यपां त्रयं स्यादापो वायुश्च सोमश्च।**
**अग्नित्रयं तु सत्यं स्यादग्निर्वायुरादित्यः॥३॥**

---

(१) (५/८५/४) –१९. अन्तरिक्ष। २०. जल की वृष्टि। २१. चाहता है। २२. उसके बाद ही। २३. आच्छादित होते हैं। २४. बल प्राप्त करते हैं। २५. शिथिल करते हैं। २६. वीर मरुद्गण।

(२) (५/८५/५) –२७. असुरपति वरुण। २८. विशाल। २९. प्रभाव को। ३०. मानदण्ड से। ३१. रहते हुए। ३२. द्यावापृथ्वी के बीच।

(३) (५/८५/६) ३३. अत्यन्त ज्ञानी का। ३४. माया को। ३५. न तो। ३६. मारता है। ३७. केवल।

(४) (५/८५/७) ३८. जल को। ३९. भरता है। ४०. प्रवाह वाली। सींचने वाली। ४१. नदियाँ। ४२. श्रेष्ठ पुरुष को। ४३. मित्र के प्रति। ४४. सदा ही। ४५. समीप रहने वाले।

(५) ५६. शत्रु को। ४७. जो यह। ४८. अपराध। ४९. किया। ५०. शिथिल करो। ५१. द्युतकर्म करने वाले। ५२. मिथ्या आरोपण करता है। ५३. धूतकार्य में। ५४. सत्य या असत्य। ५५. अथवा अज्ञात। ५६. शिथिल करने के समान। ५७. मुक्त करो। ५८. ताकि।

ऋतमधिकुरुते वरुणः सोऽपां नाथः समुद्रनाथश्च।
इन्द्रस्तु सत्यमीष्टे स वासवो वायुरादित्यः ॥४॥
न ऋताद् ऋतेऽग्नयस्ते सत्येनापश्च गर्भिण्यः।
नैकस्तयोर्विनाऽन्यं कदापि वा रूपमादध्यात् ॥५॥
उभयोरनयोरेकः कः प्रवरः कोऽवरः कल्प्यः।
इन्द्रात्प्रवरो वरुणो वरुणात्प्रवरः स इन्द्रोऽस्ति ॥६॥
काण्वः सुपर्ण एव स भरद्वाजश्च वामदेवश्च।
इन्द्रावरुणौ स्वाराट् सम्राजौ तुल्यमस्तौषुः ॥७॥

## २५. दूसरे ब्राह्मणों ने दोनों की महिमा को स्वीकार किया

तत्पश्चात् इस विवाद में कुछ मध्यस्थ लोगों ने उपस्थित होकर दोनों (इन्द्र और वरुण) का ही समान रूप से महत्त्व स्थापित किया ॥१॥

तपोलोक से ऋत और सत्य की उत्पत्ति हुई, ये दोनों इस तपोलोक के दो नेत्र हैं। वह क्रन्दसी ऋत से तथा यह रोदसी सत्य के द्वारा धारण की गई है ॥२॥

ऋत से तात्पर्य तीनों प्रकार के जल से है, वह है —आपः, वायु और सोम। इसी प्रकार तीन प्रकार का अग्नि ही सत्य है। वह है — अग्नि, वायु और आदित्य ॥३॥

ऋतका अधिष्ठाता वरुण है, वह जलों का स्वामी है, वह समुद्र का स्वामी है। इन्द्र सत्य का अधिष्ठाता है, वही वासव है (इन्द्र का एक नाम), वही वायु और आदित्य है ॥४॥

ऋत के बिना ये अग्नियाँ स्थिति धारण नहीं कर सकती हैं तथा आपः (जल तत्त्व) भी सत्य से गर्भित है। दोनों ही परस्पर एक के बिना दूसरी कभी स्वरूप धारण नहीं कर सकती है ॥५॥

इन दोनों में से कौन अवर (छोटा) और कौन प्रवर (बड़ा) है, ऐसा निर्धारण करने पर देखते हैं कि इन्द्र (रोदसीस्थित इन्द्र) से बड़ा वरुण है तथा वरुण से बड़ा वह इन्द्र (संयती-स्थित इन्द्र) है ॥६॥

इस प्रकार कण्व के पुत्र सुपर्ण, भारद्वाज, वामदेव ने स्वाराट् तथा सम्राट् इन्द्र और वरुण की समान रूप से स्तुति की ॥७॥

### सुपर्णः काण्वः।

अवोचाम महते सौभगाय (१) सत्यं त्वेषाभ्यां (२) महिमानमिन्द्रियम्।
अस्मान्त्स्विन्द्रावरुणा घृतश्चुतस्त्रिभिः (३) साप्तेभिरवतं (४) शुभस्पती ।(८।५९।५)

सुपर्णः काण्वः –१. सौभाग्यं यस्य कारणम्। २. ज्योतिर्भ्यां दिव्यान्तरीक्षाभ्याम् ३–४ रसवाहिन्या नाड्या एकविंशत्या।

इन्द्रावरुणा यदृषिभ्यो मनीषां वाचो मतिं श्रुमदत्तमग्रे।
यानि स्थानान्यसृजन्त धीरा यज्ञं तन्वानास्तपसाभ्यपश्यम्। (८।५९।६)
इन्द्रावरुणा सौमनसमदृप्तं रायस्पोषं यजमानेषु धत्तम्।
प्रजां पुष्टिम्भूतिमस्मासु धत्तं दीर्घायुत्वाय प्रतिरतं न आयुः ॥(८।५९।७)

## कण्व के पुत्र सुपर्ण

हे शुभ का पालन करने वाले इन्द्र और वरुण! हम अपने महान् सौभाग्य के लिए तुम दोनों की शक्ति को बढ़ाने वाली महिमा का वर्णन करते हैं। तुम घृत प्रदान करने वाले हमारी इक्कीस बार रक्षा करो॥ (८/५९/५)[१]

हे इन्द्र और वरुण, प्राचीनकाल में ऋषियों को तुमने जो बुद्धि, विचारशक्ति, वाक्-शक्ति, तथा ज्ञान दिया था और यज्ञों को करते हुए धीर लोगों ने जिन स्थानों का निर्माण किया, उनको मैंने तप के द्वारा अच्छी तरह जान लिया है॥(८/५९/६)

हे इन्द्र और वरुण! तुम दोनों यजमानों को नम्रता, उदारता और पुष्टिकारक ऐश्वर्य प्रदान करो तथा प्रजा, पोषण, दीर्घ आयु भोगने के लिए हमारी आयु बढाओ ॥८/५९/७)

### भरद्वाजः ।

१ २
ता हि श्रेष्ठा देवताता तुजा शूराणां शविष्ठा ता हि भूतम्॥
३ ४ ५ ६ ७ ८
मघोनां मंहिष्ठा तुविशुष्म ऋतेन वृत्रतुरा सर्वसेना॥ (६।६८।२)
९ ११ १० १२ १३
ग्नाश्च यन्नरश्च वावृधन्त विश्वे देवासो नरां स्वगूर्त्ताः॥
१४ १५ १६ १७
प्रैभ्य इन्द्रावरुणा महित्वा द्यौश्च पृथिवि भूतमुर्वी॥ (६।६८।४)
२३ १९ २० १८ २३ २४ २१ २२
यं युवं दाशवध्वराय देवा रयिं धत्थो वसुमन्तं पुरुक्षुम्॥

---

१. सुपर्ण– (१) सौभाग्य का कारण अथवा शक्तिवर्धक। (२) अत्यन्त तेजस्वी। (३–४) रसवाहिनी नाड़ी के द्वारा अथवा घृत प्रदान करने वाले।

भरद्वाजः- १. देवतातौ देवविभागे तुजौ धन-प्रयोक्तारौ। २- बलवत्तरौ। ३-पूज्यानां। ४-दातृतमौ। ५-बहुबलौ। ६-सत्येन। ७-शत्रुनाशकौ। ८-सेनाध्यक्षौ।९-स्त्रियः। १०-पुमांसः। ११-यत् = यदा। १२- वर्धयन्ते। १३-मनुष्याणां स्वयमुद्यताःप्रवर्त्तकाः। १४-वर्धकेभ्यःस्तोतृभ्यः। १५-महत्त्वयुक्तौ। १६-प्रभूतं प्रभवतम्। १७-विस्तीर्णे। १८-देवौ इन्द्रावरुणौ। १९-युवाम्। २०-दत्तहविष्काय। २१-धनयुक्तम्। २२-बह्वन्नपूर्णं शक्तं वा।२३-यादृशं धनम्। २४-प्रयच्छथः।

२८ २९ २७ २५ २६
अस्मे स इन्द्रावरुणावपि ष्यात् प्र यो भनक्ति वनुषामशस्तीः।
(६।६८।६)
३० ३२ ३३ ३१
प्र सम्राजे बृहते मन्म नु प्रियमर्च देवाय वरुणाय सप्रथः॥
३४ ३५ ३६ ३८ ३७
अयं य उर्वी महिना महिव्रतः क्रत्वा विभात्यजरो न शोचिषा॥
(६।६८।९)
३९ ४०
इन्द्रावरुणा सुतपाविमं सुतं सोमं पिबतं मद्यं धृतव्रता॥
४१ ४५ ४२ ४४ ४३
युवो रथो अध्वरं देववीतये प्रति स्वसरमुपयाति पीतये॥(५।६८।१०)

## भरद्वाज

वे दोनों देवताओं में श्रेष्ठ हैं, धनवान् हैं, वे दोनों शूरवीरों में अधिक बलशाली, पूज्यों में बड़े हैं और अनेक बलों से युक्त हैं तथा सत्यव्यवहार से शत्रु को मारने वाले तथा समस्त प्रकार की सेना से युक्त हैं॥ (६/६८/२)[१]

स्त्रियाँ और पुरुष चाहे कितने भी बढ़ जायें, सभी ज्ञानी अपने परिश्रम से कितने भी बढ़ गये हों, द्यावापृथिवी कितनी भी विस्तृत हो जाएँ, तब भी इन्द्र और वरुण अपने महत्त्व के कारण सबसे बड़े हैं॥ (६/६८/४)[२]

हे इन्द्र और वरुण! आप दोनों दान और अहिंसा करने वाले पुरुष को ऐश्वर्ययुक्त और धन युद्ध समृद्धि प्रदान करते हो। वह धन हमें भी मिले, जिससे हम निन्दकों की निन्दा को नष्ट कर सकें॥ (६/६८/६)[३]

---

२५-शत्रूणाम्। २६-अकीर्तीः। २७-प्ररुजति-जलन पैदा करता है। २८-अस्मभ्यम्। २९-अपि स्यात्।३०-वरुणाय।३१-सर्वतः पृथुः।३२-स्तोत्रम्। ३३- प्रोच्चारय।३४-महिम्ना। ३५-महाकर्मा। ३६-प्रज्ञया। ३७-तेजसा। ३८-प्रौढः। ३९-सोमपातारौ। ४०-धृतकर्माणौ। ४१-युवयोः। ४२-देवानां पानार्थम्। ४३-युवयोरपि पानार्थम्। ४४-मार्गं प्रति। ४५-यज्ञमुद्दिश्य।

भरद्वाज- (१). १-देवताओं में धनवान्। २-बलशाली। ३-पूज्यों में। ४- बलशाली। ५-महान् बलशाली ६-सत्य से। ७-शत्रु का नाश करने वाले। ८- सेना से युक्त।

(२) ९-स्त्रियाँ। १०-पुरुष। ११-जो। १२-बढ़ जाएँ। १३-अपने परिश्रम से बढ़ने वाले। १४-इन सबसे । १५-अपने महत्त्व से। १६-विपुल प्रभाव से। १७-विस्तृत।

(३) १८-इन्द्र और वरुण। १९-आप दोनों। २०-दानी और अहिंसक के लिये। २१-ऐश्वर्ययुक्त। २२-अन्नयुक्त। २३-जैसा धन। २४-देते हो। २५-निन्दकों की। २६-निन्दा। २७-जलन पैदा करता है। २८-हमें भी। २९-में भी प्राप्त होवे।

हे मनुष्यों! बड़े सम्राट् वरुण देव के लिए यशस्वी तथा प्रिय स्तोत्र का मान करो, जो बड़े बड़े कार्य करने वाला है, जरारहित अपनी महान् सामर्थ्य से इस विशाल पृथ्वी को कर्त्तव्य और अपने तेज से प्रकाशित करता है ॥(६/६८/९)[१]

हे सोम पीने वाले इन्द्र और वरुण! हे व्रत को पालन करने वाले ! तुम दोनों निचोड़े हुए, आनन्दकारी इस सोमरस को पीओ। तुम्हारा रथ सोमपान और देवत्व की प्राप्ति के लिए अहिंसक यज्ञ में रस-पान करने के लिए प्रत्येक यज्ञ स्थान के पास जाता है ॥ (६/६८/१०)[२]

## पक्षत्रयवतां ब्राह्मणानां विज्ञानविरोधे विचारसमितिः ।

**१—इन्द्रस्य पक्षे कतिचिद्बभूवुर्बभूवुरन्ये वरुणस्य पक्षे।**
**परे बभूवुर्द्विसमत्वपक्षे मिथस्त्रिपक्ष्या ऋषयः समूदुः ॥१ ॥**

## २६. तीनों पक्षों के ब्राह्मणों में विरोध होने पर विचारसमिति

कुछ ब्राह्मण इन्द्र के पक्ष में हुए और कुछ वरुण के पक्ष में हो गये। अन्य कुछ ब्राह्मण दोनों की समानता के पक्ष में हो गये। इस प्रकार तीनों पक्ष के ऋषियों ने परस्पर बातचीत की ॥१ ॥

## तत इन्द्रपक्ष्याणां ब्राह्मणानां विचारसमितौ इन्द्राय पुनःसोमाभिषवार्थं हिरण्यगर्भनियोगः ।

**अथेन्द्रपक्ष्या ऋषयोऽत्र सर्वे पुनर्विचाराय पृथक् समीयुः ।**
**विशिष्य कण्वा अपरेऽपि केचिद् बृहद्दिवाद्या व्यदधुर्विमर्शम् ॥२ ॥**
**सोमं सुरेन्द्र एवार्हति पातुं नासुरेन्द्रोऽपि।**
**हन्तेन्द्राय सुतोऽयं सोमः पीतोऽनयाद् वृषाकपिना ॥३ ॥**
**तस्मादिह पुनरन्यः सोमः सोतव्य इन्द्राय।**
**इति निर्धार्य्य विधातुं हविषा प्रोचुर्हिरण्यगर्भमृषिम् ॥४ ॥**

---

(१) ३०-वरुण के लिए। ३१-महान् यशस्वी अथवा विशाल। ३२.स्तोत्र। ३३.स्तुति करो। ३४. महिमा से। ३५-महान् कर्तृत्ववान्। ३६-बुद्धि से। ३७-तेज से। ३८-जरा रहित।

(२) ३९-सोम पीने वाले। ४०-व्रत का पालन करने वाले। ४१-आप दोनों। ४२-देवत्व की प्राप्ति। ४३-आप दोनों रस पीने के लिये। ४४-मार्ग की ओर। ४५-यज्ञस्थान के पास।

# २७. इन्द्रपक्ष के ब्राह्मणों की विचार-समिति में इन्द्र के लिए सोम का सवन करने के लिए हिरण्यगर्भ की नियुक्ति

तब इन्द्रपक्ष के ऋषि पुनर्विचार करने के लिए अलग से एकत्रित हुए, इनमें विशेष रूप से कण्व थे तथा अन्य भी बृहद्दिव इत्यादि ऋषियों ने विचार-विमर्श किया ॥२ ।।

देवराज इन्द्र ही सोम का पान करने के अधिकारी हैं, असुरेन्द्र वृषाकपि सोम-पान के योग्य नहीं है। दुःख है कि इन्द्र के लिए सवन किया गया वह सोम वृषाकपि द्वारा अनीतिपूर्वक पी लिया गया ॥३ ॥

इसलिए हवि के द्वारा इन्द्र के लिए पुनः अन्य सोम का सवन किया जाना चाहिये, ऐसा निर्धारित करके हिरण्यगर्भ ऋषि को हवि का विधान करने के लिए कहा गया ॥४ ॥

## हिरण्यगर्भेणेन्द्राय हविर्विधानप्रत्याख्यानम्।

एष तु हिरण्यगर्भो मार्गं वैज्ञानिकं परं जगृहे।
इन्द्राद्वा वरुणाद्वा हिरण्यगर्भं निरूपयन् प्रवरम् ॥५ ॥
वज्री च पाशी च परश्च देवो हिरण्यगर्भस्य वशेऽस्ति सर्वः।
हिरण्यगर्भं प्रथमं विदन्तः कस्मै देवायं हविषा विधेम ॥६ ॥
यदेतदण्डं समन्तात् समुद्रस्तावान् स इन्द्रोऽपि हिरण्मयत्वात्।
आपोमयत्वाद्वरुणश्च तावानेतौ हि नाण्डं तदतिक्रमेते ॥७ ॥
हिरण्मयं त्वण्डमिदं समस्तं यस्यास्ति गर्भे परमस्य पुंसः।
हिरण्यगर्भं तमनुव्रजन्तः कस्मै देवाय हविषा विधेम ॥८ ॥
अपां पतिः स वरुणस्त्रीन् भृगूनधितिष्ठति।
असुराणां पतिर्लोकं चतुर्थं चाधितिष्ठति ॥९ ॥
मरुतां पतिरिन्द्रोऽधितिष्ठत्यङ्गिरसां त्रयम्।
देवानां स पतिर्लोकं चाधितिष्ठत्यमूं दिवम् ॥१० ॥
देवो हीन्द्रः शास्ति सुरान् देवः स वरुणोऽसुरान्।
नैवावरो न प्रवरोऽनयोरेकोऽपि कल्पते ॥११ ॥
हिरण्यगर्भस्तु परः सर्वतः प्रवरो मतः।
य एष चतुरो लोकानेक एवाधितिष्ठति ॥१२ ॥
अप्सु वीर्य्यं क्षिपन्नग्निरमृतोऽद्भिः स संभवन् ॥
हिरण्यं जनयत्येष सोऽमृतोऽग्निर्हिरण्मयः ॥१३ ॥
त्रिषु लोकेषु पर्य्याप्तश्चतुर्थेऽप्युपपद्यते ॥
प्रजापतिस्त्रिलोकीस्थापः परिचरन्ति तम् ॥१४ ॥

इत्थं हिण्यगर्भेण कल्पितात्मा महानृषिः ॥
हिरण्यगर्भ उत्थाय स्वं विज्ञानमदर्शयत् ॥१५ ॥

## २८. हिरण्यगर्भ द्वारा इन्द्र के लिए हविर्विधान का निषेध

इन्द्र से अथवा वरुण से हिरण्यगर्भ को श्रेष्ठ मानते हुए इस हिरण्यगर्भ ऋषि ने हिरण्यगर्भ तत्त्व के मार्ग को ही श्रेष्ठ और वैज्ञानिक माना ॥५ ॥

वज्रधारी इन्द्र, पाश को धारण करनेवाले वरुण अन्य भी कोई देव, सभी हिरण्यगर्भ के वश में है। हिरण्यगर्भ को प्रथम (सर्वश्रेष्ठ) जानते हुए कहा गया है "किस देव के लिए हवि का विधान करें।" (यहाँ "कस्मै" शब्द में प्रश्न और समाधान दोनों है। इसे वाकोवाक्य प्रणाली कहते हैं। यहाँ कः पद कौन और ब्रह्म दोनों का वाचक है।) अर्थात् ब्रह्म के लिए हवि का विधान करें ॥६ ॥

जितना इस अण्ड के चारों ओर समुद्र है, उतना भाग हिरण्यगर्भ होने के कारण इन्द्र है। आपोमय होने के कारण वरुण भी उतना ही व्याप्त है। अतः ये दोनों ही इस संपूर्ण अण्ड का अतिक्रमण नहीं करते हैं ॥७ ॥

यह सम्पूर्ण हिरण्यगर्भ अण्ड जिस परम पुरुष (ब्रह्म) के गर्भ में स्थित है, उस हिरण्यगर्भ का अनुमान करते हुए हम किस देव को हवि प्रदान करें? अर्थात् उसी प्रजापति के लिए हविर्विधान करें ॥८ ॥

जलों का स्वामी वह वरुण तीन भृगुओं (आपः, वायु और सोम) पर अधिष्ठित है। यह असुरों का स्वामी है, तथा चौथे लोक पर विराजमान है ॥९ ॥

मरुद्गण का स्वामी इन्द्र तीनों अंगिराओं (अग्नि, वायु और आदित्य) पर अधिष्ठित है। वह देवों का स्वामी है और इस द्युलोक पर विराजमान है ॥१० ॥

यह इन्द्रदेव देवों पर शासन करता है। और वह वरुण भी देव है, जो असुरों पर शासन करता है। इन दोनों में से किसी एक को छोटा अथवा बड़ा नहीं कहा जा सकता है ॥११ ॥

परन्तु हिरण्यगर्भ तो सबसे परे हैं तथा सबसे वरिष्ठ है, श्रेष्ठ है। यह हिरण्यगर्भ इन चारों लोकों (अग्नि, वायु, आदित्य और आपः) पर अकेला ही शासन करता है ॥१२ ॥

जलों में (अप्तत्त्व में) अपने वीर्य को फेंकता हुआ यह अमृताग्नि जल में ही उत्पन्न होता हुआ हिरण्य को उत्पन्न करता है। इसलिए यह अमृताग्नि ही हिरण्मय है ।१३ ॥

तीनों लोकों (अग्नि, वायु, सोम) में व्याप्त होता हुआ यह चौथे लोक में भी प्रजापति के रूप में उत्पन्न होता है। त्रिलोकी में रहने वाले ये आपः (सोम तत्त्व) ही उस प्रजापति की परिचर्या करते हैं ॥१४ ॥

इस प्रकार हिरण्यगर्भ से कल्पित आत्मा वाले महान् ऋषि ने उठकर अपने अर्थात् हिरण्यगर्भ के विज्ञान को दिखाया ॥१५ ॥

## हिरण्यगर्भः प्राजापत्यो विश्वामित्रपौत्रः ।

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ॥
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥
(१० ।१२१ ।१)

य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः ॥
यस्यच्छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥
(१० ।१२१ ।२)

यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव ॥
य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥
(१० ।१२१ ।३)

यस्येमे हिमवन्तो महित्वा यस्य समुद्रं रसया सहाहुः ॥
यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम ॥
(१० ।१२१ ।४)

येन द्यौरुग्राः पृथिवी च दृढा येन स्वः स्तभितं येन नाकः ॥
यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ॥
(१० ।१२१ ।५)

यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने ॥
यत्राधिसूर उदितो विभाति कस्मै देवाय हविषा विधेम ॥
(१० ।१२१ ।६)

आपो ह यद् बृहतीर्विश्वमायन् गर्भं दधाना जनयन्तीरग्निम् ॥
ततो देवानां समवर्ततासुरेकः कस्मै देवाय हविषा विधेम ॥
(१० ।१२१ ।७)

यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयन्तीर्यज्ञम् ॥
यो देवेष्वधि देव एक आसीत्कस्मै देवाय हविषा विधेम ॥
(१० ।१२१ ।८)

मा नो हिंसीज्जनिता यः पृथिव्या यो वा दिवं सत्यधर्मा जजान ॥
यश्चापश्चन्द्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम ॥
(१० ।१२१ ।९)

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव ॥
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥
(१० ।१२१ ।१०)

# प्रजापति का पुत्र हिरण्यगर्भ विश्वामित्र का पौत्र

सृष्टि का निर्माण होने से पूर्व भी यह हिरण्यगर्भ (परमात्मा) विद्यमान था। वही उत्पन्न समस्त प्राणिमात्र का एक ही अद्वितीय स्वामी था। वह पृथ्वी, द्यौ और अन्तरिक्ष को धारण करता है। उसी प्रजापति की हम हवि प्रदान करके उपासना करते हैं॥(१०/१२१/१)

जो आत्मज्ञान देने वाला है, बल प्रदान करने वाला है, जिसकी आज्ञा का सभी लोग तथा देव पालन करते हैं, जिसकी छाया (शरण) अमृत के समान है तथा जिसकी शरण न लेना मृत्यु के समान है, उस सुख-स्वरूप परमात्मा की हम हवि प्रदान करते हुए उपासना करते हैं॥(१०/१२१/२)

जो श्वास लेने वाले तथा पलक झपकने वाले समस्त चराचर जगत् का अपने महान् सामर्थ्य से तथा अपनी महिमा से एक ही अद्वितीय स्वामी है, उस सुखस्वरूप परमात्मा की हम हवि प्रदान करते हुए उपासना करते हैं॥(१०/१२१/३)

ये समस्त हिमाच्छादित पर्वत जिसकी महिमा से उत्पन्न हुए हैं , ये पर्वत जिसके महान् सामर्थ्य को प्रकट करते हैं, जिसके महान् सामर्थ्य को ये जलयुक्त नदियाँ, पृथ्वी और समुद्र बतला रहे हैं, जिसका सामर्थ्य बाहु के समान होकर ये दिशाऐं बतला रही हैं, ऐसे उस परमात्मा का हवि प्रदान करके आह्वान करते हैं॥(१०/१२/४)

जिंससे यह आकाश और अन्तरिक्ष सामर्थ्यसम्पन्न हुए, जिससे यह पृथ्वी दृढ हुई, जिसने स्वर्ग को स्थिर किया, जिसने सूर्य को अन्तरिक्ष में स्थापित किया, जिसने आकाश में जल का निर्माण किया, ऐसे उस सुखस्वरूप परमात्मा की हवि द्वारा स्तुति करते हैं॥(१०/१२१/५)

यह क्रन्दसी (द्वितीय द्यावापृथ्वी) शब्दायमान होकर तथा अत्यन्त प्रकाशित होकर मन से जिसको प्रत्यक्ष देखती है, जिसका आश्रय प्राप्त करने सूर्य आकाश में चमकता है, उस प्रकाशवान् परमात्मा की हम हवि करके प्रदान स्तुति करते हैं। (१०/१२१/६)

महान् अग्नि इत्यादि समस्त जगत् को उत्पन्न करता हुआ तथा हिरण्मय महान् अण्ड को अपने गर्भ में धारण करने वाला जल ही समस्त विश्व में व्याप्त है, जिससे उस कारण स्वरूप, तथा समस्त प्राणियों के प्राण-स्वरूप एक अद्वितीय प्रजापित का निर्माण हुआ है। उस सुखस्वरूप परमात्मा की हम हवि द्वारा उपासना करते हैं॥ (१०/१२१/७)॥

जिसने यज्ञ को उत्पन्न करने वाले, प्रजापति को धारण करने वाले, प्रलयकालीन जल को उत्पन्न किया है, जिसने अपनी महिमा से उस जल के चारों ओर निरीक्षण किया है, जो देवों का भी अधिदेव है, ऐसे उस सुखस्वरूप परमात्मा की हम हवि प्रदान करते हुए उपासना करते हैं॥१०/१२१/८)

वह हमें पीड़ित न करे, जो पृथ्वी को उत्पन्न करने वाला है, सृष्टि का रचयिता है, जो सत्य धर्म और जगत् को धारण करता है, जो स्वर्ग का रचयिता है, जिसने आनन्दस्वरूप अपार जल का निर्माण किया है, उस सुखस्वरूप परमात्मा की हम उत्तम रीति से उपासना करते हैं॥(१०/१२१/९)

हे प्रजापति ! तुम्हारे अतिरिक्त अन्य कोई भी ऐसा नहीं है, जो इस समस्त भूत, वर्तमान और भविष्य में उत्पन्न वस्तुओं को अधिगृहीत कर सकता हो, जिसकी अभिलाषा करके हम तुम्हें हवि प्रदान करते हैं, वह हमें प्राप्त हो। हम समस्त ऐश्वर्यों के स्वामी बनें ॥१०/१२१/१०)

# हिरण्यगर्भतात्पर्यविषये विज्ञानम्।

हिरण्यगर्भो वरुणेन्द्रपृथ्वीचन्द्रैकवल्शामधितिष्ठतीति।
प्रजापतिं तं परम विदन्तः कस्मै देवाय हविषा विधेम॥१॥
प्रजापतेः प्राण उदेति भूतान्यद्भ्यः समुद्राद्वरुणाद् भवन्ति।
प्रज्ञेन्द्र इत्याहुरथाग्निसीमारब्धास्त्रिमात्रा इदमस्ति विश्वम्॥२॥
प्रजा प्राणो भूतान्येषां मात्राभिराचितं विश्वम्।
ज्ञानं क्रियाऽर्थ एतद्व्यतिरिक्तं न क्वचित् किञ्चित्॥३॥
इन्द्रः प्रज्ञा तस्मात् प्रज्ञामात्राभिराचितं ज्ञानम्।
प्राणो हिरण्यगर्भः क्रिया इमाः प्राणमात्राभि॥४॥
भूतान्यापो वरुणः सर्वेऽर्था भूतमात्राभिः।
त्रिभिरेवैभिर्देवैरारब्धं विश्वमस्तीदम्॥५॥
अधिदेवास्त्रय एते तानितरे नातितिष्ठन्ति।
एषां हिरण्यगर्भोऽधिदेव एकः क्रियाहेतुः॥६॥
सर्वक्रियैकमलं न विना क्रिययाऽर्थ उद्भवति।
न विना क्रियया ज्ञाने सोऽर्थः प्रविशेन्न चेष्टेत॥७॥
तस्माद्धिरण्यगर्भं प्रवरं मन्ये क्रियाहेतुम्।
तमुपेक्ष्य सकमलं कस्मै देवाय हविषा विधेम॥८॥

# हिरण्यगर्भ के तात्पर्य के संबंध में विज्ञान

यह हिरण्यगर्भ वरुण, इन्द्र, पृथ्वी और चन्द्र की एक शाखा पर अधिष्ठित है।उस हिरण्यगर्भ को परम प्रजापति जानते हुए किस देवता की हवि द्वारा उपासना करें? अर्थात् परम प्रजापति का आह्वान करें॥१॥

प्रजापति से प्राण उत्पन्न होते हैं, भूत आपः से, समुद्र से अथवा वरुण से उत्पन्न होते हैं। प्रजा को केन्द्र कहते हैं और अग्नि की सीमा से प्रारम्भ होने वाला यह सम्पूर्ण विश्व तीन मात्राओं (प्राण, भूत, प्रज्ञा) से युक्त है॥२॥

प्रज्ञा, प्राण और भूत—इन्हीं तीन मात्राओं से यह सम्पूर्ण विश्व व्याप्त है। ज्ञान, क्रिया और अर्थ के अतिरिक्त कहीं कुछ भी नहीं है॥३॥

इन्द्र की प्रज्ञा है, इस प्रज्ञा मात्रा से समस्त ज्ञान समन्वित है। प्राण हिरण्यगर्भ है, इसीलिए समस्त क्रियाएँ इन्हीं प्राणमात्राओं से समन्वित हैं॥४॥

भूत, आपः, वरुण इत्यादि जो अर्थ हैं वे समस्त भूतमात्राओं से उत्पन्न होते हैं। इन्हीं तीनों देवों से यह समस्त विश्व आरम्भ किया गया है॥५॥

ये तीनों अधिदेव हैं, इनसे अधिक कुछ भी नहीं है। इनमें हिरण्यगर्भ अधिदेव है, जो एकमात्र क्रिया का कारण है ॥६ ॥

समस्त क्रियाओं के एकमात्र मूल कारण हिरण्यगर्भ के बिना केवल क्रिया से अर्थ की उत्पत्ति नहीं हो सकती है। ज्ञान और क्रिया दोनों से मिलकर अर्थ की उत्पत्ति होती है। क्रिया के बिना ज्ञान में किसी अर्थ का प्रवेश भी नहीं हो सकता है और न ही क्रियाशीलता हो सकती है ॥७ ॥

अतः क्रिया के कारणभूत हिरण्यगर्भ को ही श्रेष्ठ मानता हूँ। उस समस्त क्रियाओं के मूलं आधार की उपेक्षा करके हम किस देवता के लिए हवि का विधान कर सकते हैं ॥८ ॥

## इन्द्राय सोमाभिषवार्थं वसिष्ठविनियोगः ।

इन्द्रायेत्थं सोतं हिरण्यगर्भे प्रजापतेः पुत्रे।
अस्वीकुर्वति विप्रा वसिष्ठमृषिमार्थयां चक्रुः ॥१ ॥

## वसिष्ठेनेन्द्रपरितोषार्थं सोमयज्ञकरणम् ।

वसिष्ठ आसीद् वरुणस्य मित्रं बहूपचक्रे वरुणः पुराऽस्मै।
किन्त्वेष वैज्ञानिकविग्रहेऽस्मिन् इन्द्रस्य पक्षे जगृहे विशिष्य ॥२ ॥
दृष्ट्वा तत्र स सोमं धाष्ट्र्यात् पीतं वृषाकपिना।
अनयात्क्रुद्धः सद्यः स्वगृहे सोमं सुषाव चेन्द्राय ॥३ ॥

## वसिष्ठः (७।३२) इन्द्राय स्तौति।

पराणुदस्व मघवन्नमित्रान्त्सुवेदा नो वसू कृधि।
अस्मगकं बोध्यविता महाधने भवा वृधः सखीनाम् ॥(७।३२।२५)
इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा।
शिक्षाणो अस्मिन् पुरुहूत यामनि जीवा ज्योतिरशीमहि ॥(७/३२/२६)
रायस्कामो वज्रहस्तं सुदक्षिणं पुत्रो न पितरं हुवे (७।३२।३)
इम इन्द्राय सुन्विरे सोमासो दध्याशिरः ॥
ताँ आ मदाय वज्रहस्त पीतये हरिभ्यां याह्योक आ। (७।३२।४)
न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ॥
अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥(७।३२।२३)
अथ च वसिष्ठः स्वगृहे सोमं सुत्व समानयन्निन्द्रम् ॥
सम्मानयंस्तमस्तौन्निपीतसोमं स्वराजमभ्यर्हम् ॥४ ॥
इन्द्रोस्ति राजा जगतो जनानां यच्चास्ति पृथ्व्यामखिलस्य तस्य ॥
पितेव बन्धुः सममेति मन्ये तस्योपकारं न च विस्मरेयम् ॥५ ॥




पञ्चपुण्डीर–परिलेख

**एभिर्दिनैरिन्द्र सभाजयाऽस्मान् दुर्म्मित्रलोका हि परिक्रमन्ते॥**
**कुर्यादनिष्टं वरुणोऽर्थवद्वा निर्हेतु वा तद् द्वयमप्यपैतु॥६॥**

## इन्द्र के लिए सोम का सवन करने के लिए वशिष्ठ की नियुक्ति

इस प्रकार प्रजापति के पुत्र हिरण्यगर्भ के द्वारा इन्द्र के लिए सोम का सवन करना अस्वीकार किये जाने पर ब्राह्मणों ने वशिष्ठ को आमंत्रित किया॥१॥

## इन्द्र की प्रसन्नता के लिए वशिष्ठ ऋषि द्वारा सोम-याग का अनुष्ठान

वशिष्ठ वरुण के मित्र थे, इसीलिए वरुण ने पूर्वकाल में इनके लिए अनेक उपकार किये थे, किन्तु इस वैज्ञानिक कलह में वशिष्ठ ने विशेष रूप से इन्द्र का पक्ष लिया॥२॥

वशिष्ठ ने इस कलह में यह देखकर कि वृषाकपि द्वारा धृष्टतापूर्वक सोम पीया गया है, इस अनीति से क्रुद्ध होकर वसिष्ठ ने शीघ्र ही अपने घर में इन्द्र के लिए सोम का सवन किया॥३॥

## वसिष्ठ इन्द्र की स्तुति करते हैं

हे इन्द्र! हमारे शत्रुओं को दूर करो। हमें सुखपूर्वक धन की प्राप्ति कराओ। युद्ध के समय हमारे मित्रों की रक्षा करने वाले बनो। हमारे धन की वृद्धि करने वाले बनो॥(७/३२/२५)

हे इन्द्र! हमें बुद्धि प्रदान करो। हमें उसी प्रकार शिक्षा और धन प्रदान करो जैसे पिता अपने पुत्रों को देता है। हे इन्द्र! इस यज्ञ में हम जीवित रहकर तेज को प्राप्त करें॥(७/३२/२६)

पुत्र पिता को पूछता है उसी तरह धन की कामना करने वाला मैं वज्रधारी उत्तम दाता इन्द्र की प्रार्थना करता हूँ। (७)/३२/३)

हे वज्रधारी इन्द्र! दही से मिश्रित यह सोमरस इन्द्र के लिए (तुम्हारे लिए) ही तैयार हो रहा है। इस सोमरस को आनन्द हेतु पीने के लिए इस यज्ञ-स्थान पर अपने घोड़ों द्वारा आओ॥(७/३२/४)

हे इन्द्र! द्युलोक में तुम्हारे सदृश दूसरा कोई भी नहीं है। पृथ्वी पर भी तुम्हारे समान न कोई हुआ है और न ही कोई होगा। हम घोड़े, गायें और अन्न को चाहने वाले तुम्हारी प्रार्थना करते हैं॥(७/३२/२३)

**इस प्रकार वसिष्ठ ने सोम का सवन करके अपने घर में इन्द्र का सम्मान करते हुए, सवन किये गये सोम को पी लेने पर पूजनीय स्वराट्-स्वरूप सम्माननीय इन्द्र की स्तुति की॥४॥**

इन्द्र मनुष्यों का राजा है, समस्त जगत् का स्वामी है, इस पृथ्वी पर सब कुछ उसी का है। पिता के समान (पालक) बन्धु के समान (हितचिन्तक) आता है। मैं मानता हूँ कि उसके द्वारा किये गये उपकार को छोड़ना नहीं चाहिये॥५॥

हे इन्द्र ! हमारी सभा की शोभा बढाओ। इन दिनों में दुर्मित्र (राक्षस के समान) हमारे चारों ओर घूम रहे हैं। वरुण हमारा किसी उद्देश्य से अथवा निरुद्देश्य भी अनिष्ट कर सकता है। अत: इन दोनों बाधाओं को हमसे दूर करो ॥६ ॥

## पुनर्वसिष्ठः(७।२७।२९) इन्द्रं स्तौति।

१ २ ३ ४
I. इन्द्रो राजा जगतश्चर्षणीनामधि क्षमि विषुरूपं यदस्ति ॥
५ ६ ७ ८ ९
ततो ददाति दाशुषे वसूनि चोदद्राध उपस्तुतश्चिदर्वाक् ॥(७।२७।३)
१० ११ १२
II उतो घा ते पुरुष्या इदासन्येषां पूर्वेषामश्रृणोर्ऋषीणाम् ॥
१३ १४ १५
अधाहं त्वा मधवञ्जोहवीमि त्वं न इन्द्रासि प्रमतिः पितेव ॥(७।२९।४)
१६ १७ १८ १९ २०
III एभिर्न इन्द्राहभिर्दशस्य दुर्मित्रासो हि क्षितयः पवन्ते ॥
२१ २२ २३ २४ २५ २६ २४
प्रति यच्चष्टे अनृतमनेना अव द्विता वरुणो मायी नः सात् ॥(७।२८॥४)
२७ २८ २८ २८ २९
IV वोचेमेदिन्द्रं मघवानमेनं महो रायो राधसो यद्दन्नः ॥
३० ३१ ३२
यो अर्चतो ब्रह्मकृतिमविष्ठो यूयं पात स्वस्तिभिः सदा नः ॥(७।२८।५)

## वसिष्ठ पुनः इन्द्र की स्तुति करते हैं

संसार में जितने भी मानव और स्थावर-जंगम हैं, उन सबका इन्द्र ही एक मात्र स्वामी है। इस पृथ्वी पर अनेक प्रकार के रूप वाले जो भी पदार्थ हैं, उनका भी स्वामी वही

---

(I) १.जङ्गमस्य। २. मनुष्याणाम्। ३. भूमौ। ४. बहुविधम्। ५. सोमदात्रे। ६. आज्ञापयतु। ७. सम्पत्तिम्। ८. प्रार्थितः। ९. मामभि।

(II) १० अपि च। ११. पुरुषेभ्यो हिताः। विशिष्टाः। लोकमान्याः। १२ एवासन्। १३ अथ। १४. स्तुवन् प्रार्थयामि। १५. बन्धुः।

(III) १६. दिनैः। १७. देहि। १८. अन्तर्द्रोहिबन्धवः। १९. लोकाः। २०. अभिचरन्ति। २१ विरुणद्धि २२. मिथ्यादोषं। २३. पापनिष्कर्त्ता। २४. विमोचयतु। २५ द्वेधा-दोषापवादखण्डनेन दोषक्षमाकरणैन च। २६. प्रभावशाली।

(IV) २७ वक्षाम्येव। २८ महान्तं समृद्धं विभवम्। २९. अस्मभ्यं ददद् अस्ति। ३०. स्तुवतः। ३१. क्रियमाणां स्तुतिं। ३२ रक्षति।

इन्द्र है। इसलिए वह सोम प्रदान करने वाले को धन देता है वह स्तुति करने पर सम्पत्तियों को हमारे समीप आने के लिए प्रेरित करता है ॥(७/२३/३)[१]

हे धनपते! और जिन प्राचीन ऋषियों की स्तुतियाँ तुमने सुनी थीं, वे ऋषि मनुष्यों का हित करने वाले थे। अतः मैं तुम्हारी स्तुति करता हूँ। हे इन्द्र! तुम हमारे पिता के समान उत्तम बुद्धि प्रदान करने वाले हो ॥(७/२९/४)[२]

हे इन्द्र! जो दुष्ट मनुष्य हम लोगों पर हमला करते हैं, उनको इन अच्छे दिनों के साथ हमारे अधीन करो। निष्पाप, कुशल वरुण जो असत्य हमारे अन्दर देखेगा वह दो प्रकार का होकर (दोषापवाद खंडन से, दोष क्षमा करने से) हमसे दूर हो जाये॥ (७/२८/४)[३]

जो बड़ी बड़ी सिद्धियाँ प्रदान करने वाले धन का हमें दान करता है, जो स्तुति करने वाले के स्तोत्र रूप काव्यों की सुरक्षा करता है उस धनवान् इन्द्र की हम प्रशंसा करते हैं। हे इन्द्र! तुम सदा उत्तम कल्याणों के साथ हमारी रक्षा करो ॥(७/२८/५)[४]

**वरुणेन क्रुद्धेन वसिष्ठनिग्रहः।**

**वरुणसखे तु वसिष्ठे तथेन्द्रपक्षं तदा गृहीतवति॥**
**वरुणः क्रुद्धः काले तं स वसिष्ठं निजग्राह॥७॥**
**निगृहीतः स वसिष्ठः क्षमापयन् वरुणमर्थयामास॥**
**सुरया कृतमपराधं क्षमस्व तेऽहं वशंवदः स्वजनः॥८॥**

**वसिष्ठो वरुणमभ्यर्थयते॥७।८६॥**

**पृच्छे[१] तदेनो[२] वरुण दिदृक्षूपो[३] एमि चिकितुषो[४] विपृच्छम्[५]॥**

---

१. १. जंगम का। २. मनुष्यों का। ३. भूमि पर। ४. अनेक प्रकार के। ५. सोम प्रदान करने वाले के लिए। ६. प्रेरित करें। ७. सम्पत्ति को। ८. प्रार्थना। ९. मेरे प्रति। १०. और भी। ११. मनुष्यों का हित करने वाले। विशिष्ट। लोकमान्य।

२. (२) १२. थे। १३. अतः। १४. स्तुति करता हूँ। १५. बन्धु।

३. (३) १६. दिनों के साथ। १७. प्रदान करो। १८. दुष्ट मनुष्य। १९. लोग। २०. हमला करते हैं। २१. हमारे अन्दर देखेगा, उसे हमसे दूर करो। २२. मिथ्या दोष। २३. निष्पापी। २४. हमसे दूर कर दो। २५. दो प्रकार का—दोषापवाद-खंडन से और दोष क्षमा करने से। २६. प्रभावशाली।

(४) २७. प्रशंसा करते हैं। २८. महान् सिद्धिदायक। २९. हमें दान देता है। ३०. स्तुति करने वाले के। ३१. स्तोत्र। ३२. रक्षा करता है।

१. पृच्छामि। २. अपराधम्। ३. दोषं ज्ञातुमिच्छुः। ४. विदुषो जनान् उपागाम्। ५. विशिष्य प्रष्टुम्।

६ ५ ७
समानमिन्मे कवयश्चिदाहुरयं ह तुभ्यं वरुणो हृणीते ॥(७।८६।३)
८ ९
किमाग आस वरुण ज्येष्ठं यत्स्तोतारं जिघांससि सखायम् ॥
१० ११ १२ १५ १३ १६ १४ १५
प्र तन्मे वोचो दूळभ स्वधावोऽव त्वानेना नमसा तुर इयाम् ॥
(७।८६।४)

१७ १८ १९ २० २१
(द) न स स्वो दक्षो वरुण ध्रुतिः सा सुरा मन्युर्विभीदको अचित्तिः ॥
२२ २३
अस्ति ज्यायान्कनीयस उपारे स्वप्नश्चनेदनृतस्य प्रयोता ॥(७।८६।६)

२६ २४ २७ २५
(क) अरं दासो न मीळहुषे कराण्यहं देवाय भूर्णयेऽनागाः ॥
२८ २९ ३० ३१ ३२ ३३ ३४
अचेतयदचितो देवो अर्यो गृत्सं राये कवितरो जुनाति ॥(७।८६।७)

३५ ३६
(ख) अयं सु तुभ्यं वरुण स्वधावो हृदि स्तोम उपश्रितश्चिदस्तु ॥
शं नः क्षेमे शमु योगे नो अस्तु यूयं पात स्वस्तिभिः सदा नः ॥
(७।८६।८)

---

५. क्रान्तदर्शिनः। ६. एकरूपमेवाहुः।७ क्रुद्धोऽस्तीति।८ अपराधः।९. अधिकम्।१०. प्रब्रूहि। ११. दुर्दभः अन्यैर्बाधितुमशक्यः। १२. तेजस्विन्।१३. निर्दोषः।१४. त्वरमाणः। १५. आगच्छेयम्।१६. नमस्कारेण।

(द) १७. ज्ञानपूर्वकृतं प्रयोगबलम्। १८. जन्मसिद्धं दैवनिर्मितं स्वभावकृतम्।१९. सुरा-क्रोधः।२०. द्यूतम्। २१. अज्ञानमविवेकः साधारणमनुष्यस्य पापप्रवृत्तौ। समीपस्थः श्रेष्ठपुरुषः कारणम्। २३. मिश्रयिता। अध्यवसायमूलकमौत्साहिकं कर्तव्यार्थसाधनापेक्षं तत्कालजं बलं दक्षः। (क्रतूदक्षाविति) आगन्तुकौत्पातिकदोषमूलकं परवशोद्भूतं तत्कालजं बलं श्रुतिः, तत्र पञ्चोदाहरणानि (परवशतायां सुरामदः। मन्युः प्रबलक्रोधविशेषः विभीदको द्यूतकालिको विद्वेषावेशः। अचितिः अज्ञानता। अवरजनसमीपस्थितस्य प्रभावशालिनः श्रेष्ठजनस्य बलवदिच्छाविशेषानुरोधः। स्वप्नदोषः प्रमादः, अनवधानता।

(क) २४ कामानां वर्षित्रे। २५ जगतो भर्त्रे। २६. पर्याप्तम्। २७. परिचर्य्यां करवाणि। २८. प्राज्ञापयत्। २९. देवः अज्ञान्। ३०. स्वामी। ३१. स्तोतारं। ३२. धनप्राप्त्यर्थे। ३३. प्रज्ञतरः ३४. प्रेरयति।

(ख) ३५. अन्नवन्। ३६. स्तोत्रं, प्रार्थना च तव हृदि उपगमताः अस्तु, अप्राप्तस्य प्रापणं योगः प्राप्तस्य रक्षणं क्षेमः।

## निगडमुक्तेन वसिष्ठेन मेधातिथिवामदेवसहायेन इन्द्रावरुणयोः साम्योद्घोषः।

अथ मुक्तः स वसिष्ठः समत्वपक्षानुमोदकः समभूत्।
अपि वामदेवमेधातिथी व्यधातां तयोः सख्यम्॥९॥
इन्द्रस्य च वरुणस्य च परस्परं सख्यतासिद्धौ।
सह तुष्टुवुर्वसिष्ठो मेधातिथि-वामदेवौ च ॥१०॥

## क्रुद्ध वरुण के द्वारा वसिष्ठ का निग्रह

वरुण के मित्र के इस प्रकार इन्द्र का पक्ष ग्रहण किये जाने पर वरुण ने क्रुद्ध होकर समय आने पर वसिष्ठ का निग्रह कर लिया॥७॥

निग्रह (कैद) किये जाने पर वसिष्ठ ने क्षमायाचना करते हुए वरुण की प्रार्थना की और कहा —हे वरुण! मेरा सुरा द्वारा किया गया अपराध क्षमा करो। मैं तुम्हारे वश में हूँ और तुम्हारा ही हूँ॥८॥

## वसिष्ठ द्वारा वरुण की प्रार्थना

(अ) हे वरुण! मैं अपने पाप के विषय में जानने की इच्छा से तुम्हारे पास आया हूँ। मैं तुमसे पूछता हूँ। मैं पूछने की इच्छा से विद्वानों के पास भी गया हूँ परन्तु उन ज्ञानियों ने मुझे एक ही उत्तर दिया कि निश्चय ही यह वरुण तुम्हारे ऊपर क्रोधित हुआ है॥(७/८६/३)

(ब) हे वरुण! क्या मेरा ऐसा कोई बड़ा भारी अपराध हुआ है? जो तू अपने मित्र स्तुति करने वाले मुझे मारता है। हे तेजस्वी, न दबने वाले वरुण! यदि वह मेरा पाप है तो मुझे कह दो, जिससे मैं निष्पाप बन कर शीघ्र ही नम्रतापूर्वक तुम्हारे पास आ जाऊँ॥ (७/८६/४)

(द) हे वरुण! वह अपना ज्ञान द्वारा किया गया प्रयोगबल पाप का कारण नहीं होता। प्रगति में रुकावट होने से पाप में प्रवृत्ति होती है, सुरा, क्रोध, जुआ, अज्ञान, पाप में प्रवृत्त करने वाली प्रवृत्तियाँ हैं। साधारण पुरुष को श्रेष्ठ पुरुष पास में रखकर पाप में प्रवृत्त करता है तथा निद्रा या आलस्य भी पाप के प्रर्वतक हैं॥ (७/८६/६)

---

(अ) १. पूछता हूँ। २. अपराध को। ३. दोष जानने का इच्छुक। ४. विद्वानों के पास गया। ५. विशिष्ट रूप से पूछने के लिए। ५. ज्ञानी। ६. एक ही उत्तर। ७. क्रोधित है।

(ब) ८. अपराध ९. निर्दोष। १४. शीघ्र। १५. प्राप्त हो जाऊँ। १६. नमस्कार से।

(द) १७. ज्ञानपूर्वक किया गया प्रयोगबल। १८. जन्मसिद्ध दैवनिर्मित अथवा स्वाभाविक। १९. मद्य एवं क्रोध। २०. जुआ। २१. अज्ञान साधारण मनुष्य की पापप्रवृत्ति में। २२. समीप में स्थित श्रेष्ठ पुरुष जिसमें कारण। २३. प्रवृत्त करने वाली।

प्रयत्न और उत्साह के साथ-साथ कर्तव्यार्थ के साधन की उपेक्षा करने वाला जो तात्कालिक बल है, उसको दक्ष कहते हैं। आगन्तुक और उत्पात उत्पन्न करने वाले दोष से युक्त, जो पराधीनता से उत्पन्न तात्कालिक बल को क्रतु कहते हैं। इस संबंध में पांच उदाहरण हैं-पराधीनता में सुरामद। मन्यु-प्रबल क्रोधविशेष। द्यूतकालिक विद्वेष -आवेश कहलाता है।अचिति-अज्ञानता। प्रभावशाली प्रबल व्यक्ति की प्रबल इच्छा भी विशेषानुरोध से उत्पन्न अपराध है।स्वप्नदोष-जागरूकता का अभाव है।

(क) समस्त इच्छाओं को पूर्ण करने वाले और भरण-पोषण करने वाले वरुण देव की मैं निष्पाप होकर सेवा करता हूँ। मैं उनके सेवक के समान हूँ। वह श्रेष्ठ देव हम अज्ञानियों को प्रेरित करता है, वह श्रेष्ठ ज्ञानी वरुण देव स्तुति करने वाले को धन-प्राप्ति की ओर प्रेरित करता है ॥ (७/८६/७)

(ख) अन्न पास में रखने वाले हे वरुण! यह स्तोत्र तुम्हारे लिए हृदयंगम बने। यह स्तोत्र तुम्हारे हृदय में निवास करे। अप्राप्त वस्तुओं की प्राप्ति के लिए तथा प्राप्त की रक्षा के लिए हमारा कल्याण हो। तुम सदा कल्याण के साधनों से हमारी रक्षा करो ॥(७/८६/८)

## निग्रह से छूटने पर वसिष्ठ द्वारा मेधातिथि और वामदेव की सहायता से इन्द्र और वरुण की समानता का उद्घोष

इस प्रकार मुक्त हुए वसिष्ठ इन्द्र और वरुण की समानता के पक्ष के अनुमोदक बने। वामदेव और मेधातिथि ने भी दोनों में मित्रता स्थापित करा दी ॥९ ॥

इन्द्र और वरुण की परस्पर मित्रता सिद्ध होने पर वसिष्ठ, मेधातिथि और वामदेव सभी प्रसन्न हुए ॥१० ॥

### वामदेव इन्द्रावरुणौ सह स्तौति।

**इन्द्रा को वां वरुणा सुम्नमाप स्तोमो हविष्माँ अमृतो न होता।**
**यो वां हृदि क्रतुमाँ अस्मदुक्तः पस्पर्शदिन्द्रावरुणा नमस्वान् ॥(४।४१।१)**
**इन्द्रा ह यो वरुणा चक्र आपी देवौ मर्तः सख्याय प्रयस्वान्।**
**स हन्ति वृत्रा समिथेषु शत्रूनवोभिर्वा महद्भिः स प्र श्रृण्वे ॥(४।४१।२)**
**इन्द्रा ह रत्नं वरुणा धेष्ठेत्था नृभ्यः शशमानेभ्यस्ता।**
**यदी सखाया सख्याय सोमैः सुतेभिः सुप्रयसा मादयैते ॥(४।४१।३)**
**युवामिद्ध्यवसे पूर्व्याय परि प्रभूती गविषः स्वापी।**
**वृणीमहे सख्याय प्रियाय शूरा मंहिष्ठा पितरेव शंभू ॥(४।४१।७)**
**ता वां धियोऽवसे वाजयन्तीराजिं न जग्मुर्युवयूः सुदानू।**
**श्रिये न गाव उपसोममस्थुरिन्द्रं गिरो वरुणं मे मनीषाः ॥(४।४१।८)**
**इमा इन्द्रं वरुणं मे मनीषा अग्मन्नुप द्रविणमिच्छमानाः।**
**उपेमस्थुर्जोष्टार इव वस्वो रघ्वीरिव श्रवसो भिक्षमाणाः ॥(४।४१।९)**

---

(क) २४. इच्छाओं को पूर्ण करने वाले। २५. जगत् के पोषक २६. पर्याप्त। २७. सेवा करूँ। २८. प्रेरित करता है। २९. देव। ३०. स्वामी। ३१. स्तोता को। ३२. धनप्राप्ति के लिए। ३३. विद्वान्। ३४. प्रेरित करता है।

(ख) ३५. अन्न से युक्त। ३६. स्तोत्र तुम्हारे हृदयंगम हो। अप्राप्त की प्राप्ति योग है और प्राप्त की रक्षा क्षेम।

## वामदेव द्वारा इन्द्र और वरुण की साथ-साथ स्तुति

हे इन्द्रावरुण! हमारे द्वारा बुद्धिपूर्वक, नम्रता से किया गया जो स्तोत्र है, वह आप दोनों के हृदय का स्पर्श करे। हे इन्द्र और वरुण! अमृत और हवि से युक्त, तेजस्वी ऐसा कौन सा स्तोत्र है, जो आपको सुख प्रदान कर सके। (४/४१/१)

जो मनुष्य हवि से युक्त होकर मित्रताप्राप्ति के लिए इन्द्र और वरुण दोनों को अपना मित्र (भाई) बनाता है, वह अपने समस्त पापों को नष्ट करता है। युद्ध में शत्रुओं को मारता है और इन्द्र और वरुण द्वारा सुरक्षित होकर महान् यश को प्राप्त करता है॥(४/४१/२)

यदि मित्र बने हुए इन्द्र और वरुण मित्रता के लिए निचोड़े गये सोमरसों से और उत्तम अन्नों से आनन्दित हों, तो ये इन्द्र और वरुण स्तुति करने वाले मनुष्यों को इस प्रकार रत्न और धन प्रदान करते हैं॥ (४/४१/३)

हे इन्द्र और वरुण! गायों की इच्छा करने वाले हम प्रभावशाली और उत्तम बन्धु के समान व्यवहार करने वाले आप दोनों की ही प्राचीन शरण को चाहते हैं। माता-पिता के समान सुखदायक, शूरवीर और पूज्य तुम दोनों को प्रेमपूर्वक मित्रता के लिए बुलाते हैं॥ (४/४१/७)

हे उत्तम फलदायक इन्द्रावरुण! जिस तरह तुम्हारे भक्त संग्राम में संरक्षण के लिए तुम्हारे पास आते हैं, उसी प्रकार ऐश्वर्य की कामना करने वाली हमारी बुद्धियाँ तुम्हारे पास जाती हैं। जिस तरह गायें सोम का तेज बढ़ाने के लिए सोम के पास जाती हैं उसी प्रकार बुद्धिपूर्वक की गई स्तुतियाँ इन्द्र और वरुण से जाकर मिलें॥ (४/४१/८)

धन की अभिलाषा करने वाली मेरी बुद्धि इन्द्र और वरुण के पास उसी तरह जाती है, जिस तरह धन के अभिलाषी व्यक्ति धनी के पास जाते हैं, जिस तरह अन्न की भीख मांगने वाले भिखारी दानियों के पास जाते हैं, उसी प्रकार मेरी स्तुतियाँ इन्द्र और वरुण के पास जाती हैं॥ (४/४१/९)

### मेधातिथिः काण्व इन्द्रावरुणौ सह स्तौति।१।१७॥

**इन्द्रावरुणयोरहं सम्राजोरव आ वृणे॥ ता नो मृळात ईदृशे॥१॥**
**गन्तारा हि स्थोऽवसे हवं विप्रस्य मावतः॥ धर्त्तारा चर्षणीनाम्॥२॥**
**अनुकामं तर्पयेथामिन्द्रावरुण राय आ॥ ता वां नेदिष्ठमीमहे॥३॥**
**युवाकु हि शचीनां युवाकु सुमतीनाम्॥ भूयाम वाजदाव्नाम्॥४॥**
**इन्द्रः सहस्रदाव्नां वरुणः शंस्यानाम्॥ क्रतुर्भवत्युक्थ्यः॥५॥**
**तयोरिदवसा वयं सनेम नि च धीमहि॥ स्यादुत प्ररेचनम्॥६॥**
**इन्द्रावरुण वामहं हुवे चित्राय राधसे॥ अस्मान्त्सु जिग्युषस्कृतम्॥७॥**
**इन्द्रावरुण नू नु वां सिषासन्तीषु धीष्वा॥ अस्मभ्यं शर्म्म यच्छतम्॥८॥**
**प्र वामश्नोतु सुष्टुतिरिन्द्रावरुण यां हुवे॥ यामृधाथे सधस्तुतिम्॥९॥**

# काण्व मेधातिथि द्वारा इन्द्र और वरुण की साथ-साथ स्तुति (ऋग्वेद १/१७/१ से ९ तक)

मैं इन्द्र और वरुण दोनों सम्राटों से अपनी सुरक्षा करने की शक्ति प्रदान करना चाहता हूँ। ऐसी स्थिति में वे दोनों हमें सुखी रखें ॥१॥

वे दोनों सम्राट् मनुष्यों का भरण-पोषण करने वाले हैं। ऐसे वे दोनों मुझ जैसे ब्राह्मण की सुरक्षा करने के लिए स्तुति करने के स्थान पर शीघ्र आवें ॥२॥

हे इन्द्र और वरुण! हमें हमारी इच्छा के अनुसार धन प्रदान करो। हमें तृप्त करो। हम तुम दोनों के सामीप्य की कामना करते हैं ॥३॥

उत्तम शक्तियों से एकत्रित हुए हैं, सुमतियों की भी एकता हुई है। हम अन्न और दान देने वालों में श्रेष्ठ बनें ॥४॥

हे इन्द्र! तुम सहस्रों दान-दाताओं में प्रमुख कार्य करने वाले हो। हे वरुण! तुम सहस्रों प्रशंसायोग्य देवों में सर्वाधिक प्रशंसनीय हो ॥५॥

इन्द्र और वरुण की सुरक्षा से सुरक्षित हुए हम इतना धन प्राप्त करना और सुरक्षित करना चाहते हैं, चाहे हमारे पास उससे भी अधिक धन पहले से विद्यमान हो ॥६॥

हे इन्द्र और वरुण ! मैं आप दोनों की सच्चे मन से प्रार्थना करता हूँ। आप मुझे उत्तम सिद्धि प्रदान करो। तुम दोनों मुझे श्रेष्ठ और विजयी बनाओ ॥७॥

हे इन्द्र और वरुण! हमारी बुद्धियाँ तुम्हारे अनुकूल आचरण कर रही हैं। इसलिए हमें सुख प्रदान करो ॥८॥

हे इन्द्र और वरुण! सम्मिलित होकर जो स्तुति हम करते हैं, जिस स्तुति को तुम बढ़ाते हो वह उत्तम स्तुति तुम्हें प्राप्त हो ॥९॥

## वसिष्ठ इन्द्रावरुणौ सह स्तौति।

**सम्राडन्यः स्वराडन्य उच्यते वां महान्ताविन्द्रावरुणा महावसू ॥**
**विश्वे देवासः परमे व्योमनि सं वामोजो वृषणा सं बलं दधुः ॥७।८२।२)**
**अन्वपां खान्यतृन्तमोजसा सूर्यमैरयतं दिवि प्रभुम् ॥**
**इन्द्रावरुणा मदे अस्य मायिनोऽपिन्वतमपितः पिन्वतं धियः ॥(७।८२।३)**
**युवामिद्युत्सु पृतनासु बह्नयो युवां क्षेमस्य प्रसवे मितज्ञवः ॥**
**ईशाना वस्व उभयस्य कारव इन्द्रावरुणा सुहवा हवामहे ॥ (७।८२।४)**
**अर्वाङ्नरा दैव्येनावसा गतं श्रृणुतं हवं यदि मे जुजोषथः ॥**
**युवार्हि सख्यमुत वा यदाप्यं मार्डीकमिन्द्रावरुणा नि यच्छतम् ॥(७।८२।८)**

## वसिष्ठ द्वारा वरुण और इन्द्र की साथ-साथ स्तुति

हे इन्द्र और वरुण! आप दोनों में से एक सम्राट् है और दूसरा स्वराट् है, ऐसा कहा जाता है। परन्तु आप दोनों महान् है, महान् वैभवशाली है। हे शक्ति सम्पन्न इन्द्रावरुण!

आप दोनों के लिए ही समस्त देवों ने उच्चाकाश में बल और तेज को धारण किया है॥ (८/८२/२)

हे इन्द्रावरुण! तुमने अपने बल से जलों के मार्ग खोल दिये हैं अर्थात् जलों को प्रवाहित किया है। तुमने सूर्य को द्युलोक का प्रभु बनाकर प्रेरित किया है। इस शक्तिशाली सोम का पान करके, आनन्दित होकर जलरहित इन नदियों को जल से पूर्ण किया है और बुद्धिपूर्वक किये गये कर्मों को पूर्ण किया है॥ (७/८२/३)

हे इन्द्रावरुण! अग्नि के समान तेजस्वी वीर युद्ध-क्षेत्र में शत्रुओं से घिरने पर तुम्हें ही बुलाते हैं। घुटने टेक कर रक्षा के लए तुम्हारी ही प्रार्थना करते हैं। हम कला को जानने वाले कारीगर लोग भी सहायता के लिए हे भूलोक और द्युलोक के स्वामी! तुम्हारी ही प्रार्थना करते हैं॥ (७/८२/४)

हे नेता इन्द्रावरुण! तुम दोनों सुरक्षा के दिव्य साधनों के साथ हमारे पास आओ। हमारी प्रार्थना सुनो। हे इन्द्रावरुण। यदि मुझ पर तुम्हारी प्रीति है, जो तुम्हारी मित्रता है, जो बन्धुता है, जो तुम्हारा सुख देने का साधन है, वह सब हमें प्राप्त होवे॥ (७/८२/८)

## इन्द्रावरुणयोः समत्वोपपादकं विज्ञानम्

**वैज्ञानिकास्ते कतिचिन्महर्षयः समत्वविज्ञानमिहान्वमोदयन्॥**
**देवेश्वरो योऽस्त्यसुरेश्वरोऽस्ति यस्तयोः परः कोन्ववरश्च को नु वा॥१॥**
**तेजोविभागं स यथैक ईष्टे तथाऽपरः स्नेहविभागमीष्टे॥**
**सर्वं यथेदं व्यतिरिच्य नाग्निं नापस्तथेदं व्यतिरिच्य किञ्चित्॥२॥**
**देहे च नापः क्व ममास्ति जीवनं देहे च नाग्निः क्व ममास्ति जीवनम्॥**
**अग्नेरिहापोऽग्निरपां तु गर्भजो विज्ञानमिन्द्राद्वरुणाद्बलं भवेत्॥३॥**
**एकस्तयोः सत्यहितो यथाऽयं परस्तथाऽसावृतसत्प्रतीतः॥**
**यथाऽङ्गिरा एष ऋषिः सुरस्यासुरस्य निर्भाति भृगुस्तथर्षिः॥४॥**
**अर्वाक् च सूर्य्याद्वरुणोऽस्ति रोदसीगतः स देवेन्द्रमनुव्रजन् स्थितः।**
**यः क्रन्दसीस्थः परतोऽस्ति सूर्य्यतः स पञ्चविंशे वरुणं श्रयत्ययम्॥५॥**
**समुद्रगर्भे भुवनं हिरणमयं तदण्डमद्भिः परितः समाप्लुतम्।**
**समुद्र आकाशगतः स वाङ्मयो वागिन्द्र आकाश इयं हि संयती॥६॥**
**सा क्रन्दसीतो ह्यवरास्ति रोदसी सा क्रन्दसीतोऽपि परास्ति संयती।**
**द्यावापृथिव्यौ विविधे इमे स्थिते अश्वत्थबल्शामनु ते निरीक्षयेत्॥७॥**
**इत्थं स इन्द्रो वरुणं समाश्रितस्तथा तमिन्द्रं वरुणः समाश्रितः।**
**नान्योन्यतोऽन्योन्यमिह प्रहीयते तेनायमिन्द्रो वरुणश्च तुल्यवत्॥८॥**

## इन्द्र और वरुण दोनों की समानता का समर्थन करने वाला विज्ञान

कुछ वैज्ञानिक महर्षियों ने इन्द्र और वरुण में वैज्ञानिक समानता का अनुमोदन करते हुए कहा कि जो देवेश्वर इन्द्र है तथा जो असुरेश्वर वरुण है, इन दोनों में कौन बड़ा है अथवा कौन छोटा? अर्थात् दोनों ही समान हैं ॥१॥

यह इन्द्र तेजोमय विभाग का स्वामी है, उसी प्रकार दूसरा(वरुण) स्नेह-विभाग (सोम-विभाग) का स्वामी है। जिस प्रकार अग्नि के अतिरिक्त कुछ भी नहीं है, उसी प्रकार आप के बिना भी कुछ भी नहीं है ॥२॥

यदि मेरे शरीर में जल नहीं हो तो यह जीवन कहाँ से होगा? इसी प्रकार यदि मेरे शरीर में अग्नि (ऊष्मा तत्त्व) नहीं है तो जीवन कैसे संभव है? इसलिए अग्नि जल के गर्भ से उत्पन्न हुआ है। अतः इन्द्र से विज्ञान तथा वरुण से बल की प्राप्ति होती है।।३॥

दोनों में से एक सत्य रूप है, वैसे ही दूसरा ऋत रूप प्रतीत होता है। जिस प्रकार अंगिरा देवताओं के ऋषि हैं, उसी प्रकार ऋषि भृगु असुरों के ऋषि प्रतीत होते हैं ॥४॥

रोदसी में सूर्य से नीचे वरुण है और वरुण उस देवेन्द्र (संयतीमें स्थिति इन्द्र) का अनुगमन करते हुए स्थित है और जो क्रन्दसी में स्थित वरुण है, वह सूर्य से परे है और यह इन्द्र पच्चीसवें स्तोम पर उस वरुण का आश्रम लेता है ॥५॥

समुद्र के गर्भ में जो भुवन है, वह हिरण्मय अण्ड है, वह अण्ड चारों ओर से जल से घिरा हुआ है। समुद्र आकाश में स्थित है और वह आकाश वाङ्मय है तथा वाग् ही इन्द्र है। इसलिए वह परम आकाश ही संयती है ॥६॥

यह रोदसी क्रन्दसी से नीचे है और क्रन्दसी से भी ऊपर संयती है। इस तरह ये द्यावापृथिवियाँ स्थित हैं, जिन्हें अश्वत्थबल्शा में देखा जा सकता है ॥७॥

इस प्रकार यह इन्द्र वरुण के आश्रित है तथा वरुण उस (संयती-स्थित) इन्द्र के आश्रित है। इसलिए दोनों ही परस्पर एक दूसरे से भिन्न नहीं हैं। अतः इन्द्र और वरुण समान ही है ॥८॥

### उभयोः परितोषार्थमैन्द्रवारुणभारतयोर्मध्ये वंसिष्ठनिवासः।

**सुरेश्वरस्यैष ततः स्वराजः सम्राज एवं त्वसुरेश्वरस्य।**
**सखा वसिष्ठः समभूत् तयोश्च द्वयोः प्रियं वर्तयति स्म नित्यम् ॥९॥**
**द्वयोस्तदा सोऽनुमते वसिष्ठश्चक्रे स्थितिं भारतवर्षमध्ये।**
**ऐन्द्रं तथा वारुणमन्तराऽर्द्धं सरस्वतीं नाम पुरं व्यधत्त ॥१०॥**
**तत्रैष सूर्य्यसदनं चकार विज्ञानभवनं तत्।**
**वैज्ञानिकीं परीक्षां कुर्वाणस्तत्र वसति स्म ॥११॥**

## दोनों के सन्तोष के लिए ऐन्द्र-भारत और वारुण भारत के बीच वसिष्ठ का निवास

तब वसिष्ठ स्वराट् सुरेश्वर इन्द्र और सम्राट् असुरेश्वर वरुण दोनों के ही प्रिय मित्र बन गये। इस प्रकार दोनों के ही कार्यों को प्रतिदिन सम्पन्न करने लगे ॥९ ॥

तब दोनों की ही अनुमति से वसिष्ठ ने भारतवर्ष के मध्य अपना निवास-स्थान बनाया। इस प्रकार ऐन्द्र और वारुण भारत के मध्य भाग में सरस्वती नाम का नगर बनाया ॥१० ॥

तब वहाँ वसिष्ठ ने सूर्यसदन नाम का स्थान बनाया, जो कि विज्ञान-भवन था। वहाँ वैज्ञानिक तथ्यों का परीक्षण करते हुए वसिष्ठ ऋषि निवास करते थे ॥११ ॥

## इतिहासोपसंहारे जरथुस्त्राभिज्ञानम्।

आख्यानमेतदुक्तं जरथुस्त्रमतानुगामिनां ग्रन्थे।
अपि च भविष्यपुराणे कथंचिदुक्तस्तदाभासः ॥१ ॥
जरथुस्त्रा इह बहवः प्रागभवन् किन्तु सर्वतः प्रथमः।
दौहित्रः स ऋजिश्वन आसीत् स मगः स इन्द्रद्विट् ॥२ ॥
अस्ति भविष्यपुराणे नभयाध्याये च (१४०) धूलिकाध्याये (१३९) ।
मंत्रद्रष्टुर्ऋजिश्वन उल्लेखः प्राक्तनः सततः ॥३ ॥
वैदिकमंत्रकृदासीदृषिर्भरद्वाजवंशधरः।
स ऋजिश्वा तस्यायं दौहित्रोऽन्यस्य वेति संदेहः ॥४ ॥
ऋज्राश्वो वा कश्चित् तस्य भवेदेष दौहित्रः।
किन्तु पुरातन आसीदेष मगो नाम देवद्विट् ॥५ ॥
मैत्रो धर्म्मः पूर्वं प्रचरित आसीच्छकेष्वेषु।
ब्राह्मं व्रतं च गोत्रं मिहिरं जरथुस्त्रपूर्वेषाम् ॥६ ॥
उत्पद्य तु जरथुस्त्रो विदविस्परदविदाद आङ्गिरसः।
इति वेदान् रचयित्वा मैत्रं धर्म्मं निपातयामास ॥७ ॥
जरथुस्त्रवंशजाताः सर्वे जरथुस्त्रनामानः।
धर्म्माचार्य्या एते शकगुरुवर्य्या महामान्याः ॥८ ॥
काले कालेऽन्योऽन्यो जरथुस्त्रोऽभूत् प्रभावशाली सः।
शाकद्वीपनिवासिषु मगेषु धर्मं स्वमप्रथयत् ॥९ ॥
जरथुस्त्रधिष्ण्यगा अपि जरथुस्त्रा एव कथ्यन्ते।
तेषामेव तु कश्चिल्लिपिं खरोष्ठीं प्रवर्तयांचक्रे ॥१० ॥
अद्यत्वे त्वितिहासग्रन्था वैदेशिकानां ये।
तेषु तु चतुःसहस्रादर्वाचां सन्ति वृत्तानि ॥११ ॥
अत एव तु जरथुस्त्रो यो राजा बाबिलोननगरस्य।

आहुश्चतुःसहस्रप्राये काले तमुत्पन्नम् ॥१२ ॥
किन्त्वसुरो जरथुस्त्रः सोऽर्वाचीनो भवेत्कश्चित् ।
तस्मात्त्विह बहुपूर्वः देवयुगेऽन्यो बभूव जरथुस्त्रः ॥१३ ॥
देवयुगीयः सोऽयं जरथुस्त्रो निवसति स्म बाह्लीके ।
ब्राह्मण एषोऽनिन्द्रानसुरांस्तान् वर्द्धयांचक्रे ॥१४ ॥

## इतिहास-प्रसंग के उपसंहार में जरथुस्त्र की पहचान

जरथुस्त्र के मतानुयायियों के ग्रन्थ में यह आख्यान वर्णित है, तथा इसी आख्यान का भविष्य पुराण में भी कुछ आभास मिलता है ॥१ ॥

प्राचीनकाल में अनेक जरथुस्त्र नाम के व्यक्ति हुए हैं, परन्तु सब से पहला जरथुस्त्र ऋजिश्वा का दौहित्र हुआ है, जो मग जाति का था तथा वह इन्द्र का निन्दक था ॥२ ॥

भविष्य पुराण के १४०-१३९ अध्याय में किसी मंत्रद्रष्टा ऋजिश्वा का प्राचीन एवं बराबर उल्लेख मिलता है ॥३ ॥

ऋषि भरद्वाज के वंश में उत्पन्न, वैदिक मंत्रों के द्रष्टा यह ऋजिश्वा ऋषि थे। उन्हीं ऋजिश्वा का दौहित्र यह जरथुस्त्र था अथवा कोई अन्य था, इसमें सन्देह ही है ॥४ ॥

अथवा ऋजिश्वा कोई भी रहा हो, जिसका दौहित्र यह जरथुस्त्र था, परन्तु यह प्राचीन व्यक्ति था, जो मग जाति का था तथा देव-निन्दक था ॥५ ॥

पूर्व काल में शक जाति के लोगों में मैत्र धर्म का ही प्रचार था। जरथुस्त्र के पूर्वज ब्राह्मण जाति के तथा इनका मिहिर नाम का गोत्र था ॥६ ॥

जरथुस्त्र नाम के विद्वान् ने उत्पन्न होकर विद-विस्परद-विदाद और आङ्गिरस नाम के चार वेदों की रचना करके मैत्र धर्म का खण्डन किया ॥७ ॥

जरथुस्त्र के वंश में उत्पन्न हुए सभी लोग जरथुस्त्र के नाम से जाने जाते थे। ये सभी धर्माचार्य थे, शकों के श्रेष्ठ गुरु थे तथा परम सम्माननीय थे ॥८ ॥

समय- समय पर अन्य भी अनेक प्रभावशाली जरथुस्त्र हुए हैं, जिन्होंने शाकद्वीप के निवासी मगजाति के लोगों में अपने धर्म का प्रचार किया ॥९ ॥

जरथुस्त्र की बुद्धि का अनुगमन करने वाले भी जरथुस्त्र के नाम से ही कहे जाते थे। उन्हीं में से किसी ने खरोष्ठी नाम की लिपि की रचना की ॥१० ॥

आज तक विदेशियों के जो भी इतिहासग्रन्थ मिलते हैं, उनमें चार हजार तक के वर्षों में ही उनके वृत्तान्त मिलते हैं ॥११ ॥

अतः बाबिलोन नगर का राजा जो जरथुस्त्र था, वह चार हंजार वर्ष के समय में ही उत्पन्न हुआ था, ऐसा मानना है ॥१२ ।

परन्तु जरथुस्त्र नाम का जो असुर हुआ है, वह कोई अर्वाचीन काल का ही व्यक्ति होगा और उससे भी अत्यन्त प्राचीनकाल में देवयुग में अन्य ही कोई जरथुस्त्र हुआ है ॥१३ ॥ अतः वह जरथुस्त्र जो देवयुग में उत्पन्न हुआ था, वह बाह्लीक देश में निवास करता था और वह ब्राह्मण जाति का था और इन्द्र के विरोधी असुरों को बढ़ावा देता था। ॥१४ ॥

## अरणानां मूजवतां महावृषाणां बाह्लिकानां च जरथुस्त्रमतानुयायित्वम्।

ये तेऽनिन्द्रा इन्द्रं निन्दन्तश्चेन्द्रभक्तानाम्।
ऐन्द्राणामार्य्याणां विद्वेषिण आसुरा आसन्॥१५॥
अरणास्त एव कथितास्तेषामीरानदेशोऽयम्।
अप्योरियंसवासिषु भूयांसश्चाभवन्नरणाः॥१६॥
आथर्वणे तु पञ्चमकाण्डे द्वाविंशकेऽरणाः सूक्ते
(अथर्वसं. ५ का. २२ सू.)
अपि मूजवन्त उक्ता महावृषा बाह्लिकाश्चैते॥१७॥
"तक्मन् भ्रात्रा बलासेन स्वस्रा कासिकया सह।
पाप्मा भ्रातृव्येण सह गच्छामुमरणं जनम्॥(१२)
ओको अस्य मूजवन्त ओको अस्य महावृषाः।
यावज्जातस्तक्मंस्तावानसि बह्लिकेषु न्योचरः॥(४)
तक्मन् मूजवतो गच्छ बह्लिकान् वा परस्तराम्।
शूद्रामिच्छ प्रफर्व्यं तां तक्मन् वीव धूनुहि॥
अन्यक्षेत्रे न रमसे वशी सन् मृडयासि नः।
अभूदु प्रार्थस्तक्मा स गमिष्यति बाह्लिकान्॥"(अथर्व.५।२२)
विद्वेषाग्निर्ज्वलितः प्रतीयतेऽनेन वाक्येन।
गन्धारादिस्थानां बाह्लीकादिस्थितैर्विरोधः सः॥१८॥
ब्राह्मणराजन्यानामन्योन्यं यो विरोधोऽयम्।
तत्र च देवा ऐन्द्रानन्वसुरा वारुणानभवन्॥१९॥
"देवानामिदवो महत् तदा वृणीमहे वयम्॥
वृष्णामस्मभ्यमूतये॥"

## अरण, मूजवान्, महावृष तथा बाह्लीक लोगों का जरथुस्त्र का मतानुयायी होना

ये जो अनिन्द्र (इन्द्रविरोधी) थे, वे इन्द्र की निन्दा करते हुए, इन्द्र-भक्त, ऐन्द्र आर्यों से द्वेष करने वाले असुर हो गये॥१५॥

इन्हीं असुरों को अरण कहा गया, जिनका देश ईरान था।"ओरियन्स"देश के निवासियों में से बहुत से लोग अरण बन गये॥१६॥

अथर्ववेद के पांचवें काण्ड के बाईसवें अरण-सूक्त में इनको मूजवान्, बाह्लीक तथा महावृष नाम से भी कहा गया है॥१७॥

अथर्ववेद में लिखा है- हे तक्मन् ज्वर! तू अपने भाई कफ के साथ, बहिन खाँसी के साथ, पापी भतीजे क्षय के साथ उस मलिन मनुष्य के पास चला जा॥(तक्मन् रोग प्रायः

अतिवृष्टि -मूँज-घास-कीचड़ वाले क्षेत्रों में रहने वाले मलिन लोगों में देखा जाता है। बाह्लीक देश में अतिवृष्टि होती है, इसलिए वहाँ मूँज नामक घास भी अधिक पैदा होती है। यहीं प्राय: तक्मन् नाम का ज्वर होता है)॥

इस वाक्य से प्रतीत होता है कि इनमें परस्पर द्वेष की अग्नि प्रज्वलित हो गई थी तथा गान्धार इत्यादि स्थान पर रहने वालों का बाह्लीकादि स्थान के निवासियों के साथ परस्पर विरोध था। ब्राह्मण राजाओं में यह जो परस्पर विरोध हुआ, उसमें निश्चय ही देव लोग इन्द्रसमर्थकों के पक्ष में हो गये तथा असुर लोग वरुण के समर्थकों के पक्ष में हो गये ॥१८-१९ ॥

"यह अग्नि देवताओं में निश्चय ही महान् है। इसलिए देवों में से हम उसी का चयन करते हैं। सबल व्यक्ति के समान यह अग्नि हमारी रक्षा के लिए उद्यत रहता है॥"

## विरोधपरिहाराय ब्रह्मणा कृतः पूर्वपश्चिमभेदेन भारतवर्षस्य द्वेधा विभागः।

देवा इत्थं देवानेवाराध्यानपश्यंस्ते ॥
बलदानसुरान्मेध्यान् पश्यन्तस्त्वासुरा अभवन् ॥२० ॥
उभयेषां तु विरोधे भूयसि देशो विभक्तोऽभूत् ॥
ब्रह्मा गुरुर्विरोधं जहार भारतविभागेन ॥२१ ॥
प्राच्यं भारतमैन्द्रं सिन्धुस्थानं तदेतदाख्यातम् ॥
पश्चिमभारतमुक्तं पारस्थानं तु वारुणं तदभूत् ॥२२ ॥
वारुणपारस्थानं सिन्धोरालोहिताम्भोधेः ॥
तत्रान्ये तु विभागाः शासनभेदात् पुनर्जाताः ॥२३ ॥
कालेन राजशासनभेदात् सीमा हि देशानाम् ॥
संज्ञा च तत्र प्रभिद्यते हीति तच्चिन्त्यम् ॥२४ ॥

इति बाह्लीके ब्राह्मणानां वैज्ञानिको विवादस्तृतीयं प्रमाणम् ॥३ ॥

## विरोध को समाप्त करने के लिए पूर्व और पश्चिम भेद से भारतवर्ष का दो भागों में विभाजन

उन देवों ने इस प्रकार देवों को ही आराध्य माना तथा बलदायक असुरों को ही पवित्र मानते हुए आसुर लोग असुर बन गये ॥२० ॥

दोनों में (देव और असुर) अनेक बार विरोध होने पर देश दो भागों में विभक्त हो गया। गुरु ब्रह्मा ने इस प्रकार देश का विभाजन करके विरोध का निराकरण कर दिया ॥१२ ॥

पूर्वी ऐन्द्र भारत था जो सिन्धुस्थान नाम से प्रसिद्ध हुआ। पश्चिमी भारत पारस्थान कहलाया और यह "वारुण भारत" हुआ ॥२२ ॥

पारस्थान नाम का वारुण भारत सिन्धु नदी से लाल समुद्र पर्यन्त का भाग था, जिसके बाद में शासकभेद से अनेक अवान्तर भेद हो गये ॥२३ ॥

समय-समय पर शासनभेद से देशों की सीमा तथा नाम में जो परिवर्तन हो जाते हैं, वह विचार करने योग्य नहीं है। अतः उपेक्षणीय है ॥२४ ॥

इस प्रकार बाह्लीक में हुए ब्राह्मणों के वैज्ञानिक विवाद नाम का तृतीय प्रमाण समाप्त हुआ ॥३ ॥

## अथ भारतवर्षस्य भूवृत्तचतुर्थांशत्वाख्यानं चतुर्थं प्रमाणम् ॥४ ॥

### पृथिवीमण्डलस्य पद्मत्वाभ्युपगमः ।

पद्मपुराणमत्स्यपुराणादिषु तावदिदं पृथ्वीमण्डलं पद्मत्वेन व्याख्यातम्। तथाहि—

"पद्मं नाभ्युद्भवं चैकं समुत्पादितवाँस्ततः ॥<br>
सहस्रवर्णं विरजं भास्कराभं हिरण्मयम् ॥<br>
पद्मे हिरण्मये तस्मिन्नसृजद् भूरि वर्चसम् ॥<br>
स्रष्टारं सर्वलोकानां ब्रह्माणं सर्वतोमुखम् ॥<br>
तच्च पद्मं पुराभूतं पृथिवीरूपमुत्तमम् ॥<br>
यत्पद्मं सा रसादेवी पृथिवी परिकथ्यते ॥<br>
एवं नारायणस्यार्थे मही पुष्करसंभवा ॥<br>
प्रादुर्भावोप्ययं तस्मान्नाम्ना पुष्करसंज्ञितः ॥"

(पद्म.पु. सृ.अ.४०) (मत्स्य पु. अ. १६९)

## भारतवर्ष के भूमण्डल के चतुर्थांश (९०°) भाग का आख्यान रूप चतुर्थ प्रमाण ॥४ ॥

### पृथ्वीमण्डल की पद्मरूपात्मकता

पद्मपुराण, मत्स्यपुराणादि में इस पृथ्वीमण्डल का कमल रूप में वर्णन किया गया है। जैसा कि वर्णन मिलता है—

भगवान् नारायण ने अपनी नाभि से एक कमल उत्पन्न किया, जो अनेक वर्णों से युक्त, निर्मल, सूर्य के समान देदीप्यमान और स्वर्ण के समान कान्तिमान् था ॥१ ॥

उस स्वर्णमय कमल में भगवान् नारायण ने महान् ओजस्वी सृष्टिलोकों के कर्ता, चतुर्मुख ब्रह्मा को उत्पन्न किया ॥२ ॥

इस प्रकार सर्वप्रथम उत्पन्न यह श्रेष्ठ कमल पृथ्वी रूप था। यह जो कमल था वही रसादेवी और पृथ्वी कही गई है ॥३ ॥

इस प्रकार नारायण के कारण ही यह पृथ्वी पुष्करसम्भवा (कमल से उत्पन्न) है। इस प्रकार कमल से उत्पन्न होने के कारण यह पृथ्वी "पृथ्वी" नाम से भी कही गई है ॥४ ॥

(पद्म पु.सृ.अ.४०) (मत्स्य पु. अ. १६९)

## भूपद्मस्य चतुःपत्रत्वप्रतिपत्तिः ।

चतुष्पत्रं चेदं पद्म पुराणेषु निरूपितम्। यथा मार्कण्डेये—
"तदेतत्पार्थिवं पद्मं चतुष्पत्रं मयोदितम्॥
भद्राश्वभारताद्यानि पत्राण्यस्य चतुर्दिशम्" ॥इति॥
"भारताः केतुमालाश्च भद्राश्वाः कुरवस्तथा॥
पत्राणि लोकपद्मस्य मर्य्यादा शैलबाह्यतः"(इति ब्राह्मे)

इत्थं चास्य पृथिवीमण्डलस्य चतुष्पत्रत्वे भद्राश्वभारतकेतुमालोत्तरकुरूणां पत्र-भूतानां समानैरंशैर्विभक्तानां एकैकस्य नवत्यंशावच्छिन्नत्वमुपपद्यते।तथा चोक्तं सूर्य्यसिद्धान्ते भूगोलाध्याये—

भूवृत्तपादे पूर्वस्यां यमकोटीति विश्रुता॥
भद्राश्ववर्षे नगरी स्वर्णप्रकारतोरणा॥
याम्यायां भारते वर्षे लङ्का तद्वन्महापुरी॥
पश्चिमे केतुमालाख्ये रोमकाख्या प्रकीर्तिता॥
उदक् सिद्धपुरी नाम कुरुवर्षे प्रकीर्तिता॥
भूवृत्तपादविवरास्ताश्चान्योन्यं प्रतिष्ठिता॥
तासामुपरिगो याति विषुवस्थो दिवाकरः॥
न तासु विषुवच्छाया नाक्षस्योन्नतिरिष्यते" ॥इति॥

तत्र च लङ्कासुमेरुप्रोतरेखाया भारतवर्षीयमध्यरेखात्वव्यवस्थानात् ततः प्राच्यां पञ्चचत्वारिंशदंशैः प्रतीच्यां च तावदंशैरवच्छिन्नस्य भूभागस्य भारतवर्षत्वं सिद्ध्यति॥भारतवर्षात्प्राच्यां नवत्यंशं भद्राश्वं वर्षम् तत उत्तरतस्तावदंशं कुरुवर्षम्, ततः पश्चात्तावदंशं केतुमालवर्षमिति। एतानि भूपद्मस्य चतुर्दिक्षु चत्वारि पत्राणि॥ भारतवर्षीयमध्यरेखा चोज्जयिनीस्था निगद्यते। "यल्लङ्कोज्जयिनीपुरोपरि कुरुक्षेत्रादिदेशान् स्पृशत्सूत्रं मेरुगतं बुधैर्निगदिता सा मध्यरेखा भुवः" इत्युक्तेः। उज्जयिनी चेयं नगरी नवकलाधिकत्रयोविंशे (२३।९) उत्तरेऽक्षांशे स्थिता। ग्रीनवीचमध्येरेखापेक्षया त्रिचत्वारिंशत्कलाधिकपञ्चसप्ततिपरिमितात् पूर्वीयदेशान्तरांशादारभ्यते॥ (७५।४३ पू. देशान्तरे) तेन ग्रीनवीचमध्यरेखाभारतीयमध्यरेखयोः षट्सप्ततिरन्तरांशाः सिध्यन्ति। अन्तरांशेषु पञ्चचत्वारिंशदंशैर्हीनेषु ग्रीनवीचतः एकत्रिंशे पूर्वीयदेशान्तरांशे नीलनदीसागरसंगमप्रदेशोपलक्षिते भारतवर्षस्य पश्चिमा सीमेति प्रतीमः। एवं भारतीयमध्यरेखातः प्राच्यां पञ्चचत्वारिंशदंशाः फारमूसाद्वीपोपलक्षिते प्रशान्तसागरे पर्य्याप्नुवन्तीत्येष प्रशान्तसागरः पूर्वा सीमा संपद्यते।

इति चतुर्थं प्रमाणम्॥४॥

# भूपद्म – चतुष्पत्रत्व



# पृथ्वी के चार पत्र होने का निर्णय

पुराणों में चार पत्तों से युक्त इस कमल का वर्णन किया गया है, जैसा कि मार्कण्डेय पुराण में वर्णित है-

'यह पार्थिव्र कमल मेरे द्वारा चार पत्तों से युक्त बताया गया है। चारों दिशाओं में भद्राश्ववर्ष तथा भारतवर्ष इत्यादि इसके चार पत्ते हैं।

इस लोकपद्म के भारत, केतुमाल, भद्राश्व तथा कुरुवर्ष नामक चार पत्ते हैं, जो पर्वतों से मर्यादित हैं॥ (ब्रह्म पु.)

इस प्रकार इस पृथ्वीमण्डल के चारों पत्तों के रूप में भद्राश्व, भारत, केतुमाल और उत्तरकुरु का चार पत्तों के रूप में होना और प्रत्येक का समान रूप से ९०° अंश से विभक्त होना स्पष्ट होता है

जैसा कि सूर्यसिद्धान्त के भूगोलाध्याय में उल्लिखित है - "इस भूमण्डल के पूर्वी चतुर्थांश पर यमकोटि नाम की नगरी प्रसिद्ध है। यह नगरी "स्वर्ण प्रकार तोरणा' के नाम से भ्रदाश्ववर्ष में स्थित है॥

इसी प्रकार भारतवर्ष की दक्षिण दिशा में लंका नाम की महान् नगरी है। पश्चिम दिशा के चतुर्थांश पर केतुमाल वर्ष में रोमक नाम की नगरी प्रसिद्ध है।

उत्तरी चतुर्थांश पर कुरुवर्ष में सिद्धपुरी नाम की नगरी है। इस प्रकार इस पृथ्वीमण्डल के चारों चतुर्थांश (चरण) परस्पर एक दूसरे पर प्रतिष्ठित हैं अर्थात् सभी एक ही बिन्दु के चारों ओर ९०° अंश के कोण बनाते हुए चारों दिशाओं तक व्याप्त हैं॥

इनके ऊपर - ऊपर विपुवत् रेखा पर स्थित होकर सूर्य विचरण करता है, परन्तु विषुवत् रेखा इन चारों कोणों का स्पर्श नहीं करती है और न ही अक्षांश की वृद्धि होती है॥ (सूर्य.सि./भूगोलाध्याय)

यहाँ लंका से सुमेरु तक की सीधी रेखा है, वही भारतवर्ष की मध्य रेखा निर्धारित की गई है। यहाँ से ४५ डिग्री पूर्व में तथा ४५ डिग्री पश्चिम तक फैला हुआ जो भू-भाग है उस सम्पूर्ण भू-भाग का भारतवर्ष होना सिद्ध होता है। भारतवर्ष से ९०° अंश पूर्व में भद्राश्व वर्ष है, उत्तर में ९०° अंश पर कुरुवर्ष है, पश्चिम में ९०° अंश पर केतुमाल वर्ष है। ये इस भू-मण्डल की चारों दिशाओं में स्थित चार पत्ते हैं। भारतवर्ष की मध्य रेखा उज्जयिनी पर स्थित बताई गई है। कहा गया है —"जो सूत्र लंका और उज्जयिनी नगरी के ऊपर से कुरुक्षेत्र इत्यादि स्थानों पर स्पर्श करता हुआ मेरु पर्वत तक जाता है, वही भारतवर्ष की मध्य रेखा है, ऐसा विद्वानों ने कहा है।"

यह उज्जयिनी नगरी २३ डिग्री अंश तथा ९ कला (२३/९) उत्तर अक्षांश पर स्थित है। ग्रीनवीच स्थित मध्य रेखा की अपेक्षा यह उज्जयिनीस्थित मध्य रेखा ७५ डिग्री अंश तथा ४३ कला पूर्वी देशान्तर से प्रारम्भ होती है। इस प्रकार ग्रीनवीच-स्थित मध्य रेखा तथा भारतीय मध्य रेखा का परस्पर ७६ डिग्री अंश का स्पष्ट अन्तर है। अंशों के इस अन्तराल में ४५ डिग्री अंश कम अर्थात् ग्रीनविच से ३१ डिग्री अंश पूर्वी देशान्तर पर नील नदी के मुहाने पर (भू-मध्य-सागर) जो देश उपलक्षित है, वही भारतवर्ष की पश्चिमी सीमा प्रतीत होती है इसी प्रकार भारतवर्ष की मध्य रेखा से पूर्व में ४५ अंश प्रशान्त महासागर

में फ़ारमोसा नाम से उपलक्षित प्रदेश तक व्याप्त है। यही प्रशान्त महासागर भारतवर्ष की पूर्वी सीमा सिद्ध होती है ॥

चौथा प्रमाण समाप्त हुआ ॥४॥

## अपि च भारतवर्षाद् बहुपूर्वस्थानामुपद्वीपानां भारतीयत्वाख्यानं भारतवर्षस्य बहुविस्तृतप्रदेशत्वे पञ्चमं प्रमाणम् ॥५॥

तथा हि ब्राह्मसप्तदशे, मार्कण्डेयचतुःपञ्चाशे, मात्स्ये तु चतुर्दशाधिकशततमे भारतवर्षस्यैतस्य नवोपद्वीपाः पौराणिकैराख्यायन्ते ॥

"उत्तरेण समुद्रस्य हिमाद्रेश्चैव दक्षिणे ॥
वर्षं तद् भारतं नाम भारती यत्र संततिः ॥१॥
भारतस्यास्य वर्षस्य नव भेदान्निशामय ॥
इन्द्रद्वीपः कशेरुमाँस्ताम्रपर्णो गभस्तिमान् ॥२॥
नागद्वीपस्तथा सौम्यो गान्धर्वस्त्वथ वारुणः ॥
अयं तु नवमस्तेषां द्वीपः सागरसंवृतः ॥३॥" इति ॥
स्कान्देऽप्याह माहेश्वरखण्डस्योनचत्वारिंशे (३९) ॥
"इन्द्रद्वीपः कसेरुश्च ताम्रद्वीपो गभस्तिमान् ॥
नागः सौम्यश्च गान्धर्वो वरुणश्च कुमारिका ॥" इति ॥
एषां चाद्यत्वे प्रचलितभाषायां नामानि यथा—

| सं. नामानि | पर्य्यायाः | भाषानामानि | इंग्लिशनामानि |
|---|---|---|---|
| १ इन्द्रद्वीपः | इन्द्रद्युम्नः | इन्द्रमन | = एंडमन |
| २. नागद्वीपः | | निकोबार | = निकोबार |
| ३. सौम्यः | सोमत्रा | सुमात्रा | = यवद्वीप-बलिद्वीप |
| ४. गान्धर्वः | | फोलीपायिन द्वीपसंघः । | लुम्बक सुम्बापलोरीन प्रभृतिजावाद्वीपसंघोप्यत्रैव संनिविशते । |
| ५. वारुणः | | बोर्नियो | = ब्रूनाई = ब्रूणी |
| ६. कशेरुमान् | कसेरुः | सेलेवीस | |
| ७. गभस्तिमान् | | मलूक्का | |
| ८. ताम्रपर्णः-सिंहलः | ताम्रपर्णी | टापूरोवेनसीलोन | —सीलोन् सरन् |
| ९. कुमारिका | कुमारी | भारतखण्डः | |

## इसी प्रकार भारतवर्ष के सुदूर-पूर्व में स्थित उपद्वीपों को भी भारतीय उपद्वीप कहने से भारतवर्ष का विस्तृत क्षेत्र में व्याप्त होना पाँचवां प्रमाण ॥५॥

इसी प्रकार ब्रह्म पुराण के सत्रहवें, मार्कण्डेय के चौवनवें, मत्स्य के एक सौ चौदहवें अध्यायों में पौराणिकों द्वारा भारतवर्ष के नौ उपद्वीपों का वर्णन किया गया है ॥

लिखा है - समुद्र के उत्तर में, हिमालय के दक्षिण में जो देश है वह भारतवर्ष है, वहाँ के निवासी भारतीय हैं ॥१॥

भारतवर्ष के नौ उपद्वीप हैं, उनको सुनो । इन्द्रद्वीप, कशेरुमान्, ताम्रपर्ण, गभस्तिमान्, नागद्वीप, सौम्य, गान्धर्व, वरुण तथा यह द्वीप (जिसमें हम निवास करते हैं, कुमारिका) नवाँ द्वीप है, जो चारों ओर से समुद्र से घिरा हुआ हैं ॥ ॥१-३॥

स्कन्द पुराण के भी माहेश्वर खण्ड के ३९ वें अध्याय में लिखा है-इन्द्रद्वीप, कशेरुमान्, ताम्रपर्ण, गभस्तिमान, नाग, सौम्य, गान्धर्व, वारुण और कुमारिका द्वीप है ॥

इनके आज की प्रचलित भाषा में नाम इस प्रकार हैं :-

| सं. नाम | पर्याय | प्रचलित भाषा के नाम | अंग्रेजी नाम |
|---|---|---|---|
| १. इन्द्रद्वीप | इन्द्रद्युम्न | इन्द्रमन | एंडमन |
| २. नागद्वीप | — | निकोबार | निकोवर |
| ३. सौम्य | सोमत्रा | सुमात्रा | यवद्वीप बलिद्वीप |
| ४. गान्धर्व | — | फिलिपायिन द्वीप-समूह | लुम्बक, सुम्बाफ्लोरीन इत्यादि जावाद्वीपसमूह भी इसी में है। |
| ५. वारुण | — | बोर्नियो | बूनाई-बूणी |
| ६. कशेरुमान् | कसेरु | सेलेवीस | — |
| ७. गभस्तिमान् | — | मलूक्का | — |
| ८. ताम्रपर्ण | ताम्रपर्णी | टापूरोवेन/सीलोन | सीलोन सरन |
| ९. कुमारिका | कुमारी | भारत खण्ड | — |

### इन्द्रद्वीपः ।

१- पुरात्वे कदाचिदोड्रदेशीयपुरुषोत्तमक्षेत्रे इन्द्रद्युम्नो नाम राजाऽऽसीत्।
"पुराकृतयुगे कश्चिन्मालवेऽवन्तिकापुरे ॥
बभूव नृपतिः श्रीमानिन्द्रद्युम्न इति श्रुतः।
स गत्वा नृपतिः क्षेत्रं मुक्तिदं पुरुषोत्तमम्॥
तत्र संकर्षणं कृष्णं सुभद्रां चान्वसादयत्।
मार्कण्डेयं वटं कृष्णं दृष्ट्वा रामं च सुव्रतः ॥

सागरे चेन्द्रद्युम्नाख्ये स्नात्वा मोक्षं लभेद् ध्रुवम्।
एवं गत्वा स नृपतिर्दक्षिणास्योदधेस्तटम्॥
निवासमकरोत् तत्र वेलामासाद्य सागरीम्॥"

इति ब्राह्मे ४१।४२ अध्याये तथोक्तेः।

**तेनाधिकृतत्वादस्योपद्वीपस्य ऐन्द्रद्युम्नसंज्ञा जाता। तदपभ्रंशादयम् "ऐन्द्रमन" शब्दः प्रवृत्त इति प्रतीयते। चत्वारिंशदधिकदशोत्तराक्षांशात् पञ्चदशाधिकत्रयोदशाक्षांश-पर्य्यन्ते प्रदेशे(१०॥४०-१३॥१५) तथा षट्त्रिंशदधिकद्वानवत्यंशात् त्रिणवत्यं-शपर्य्यन्ते पूर्वदेशान्तरे संनिविष्टोऽयमिन्द्रद्युम्नः (९२।३६-९३।०) ॥१॥**

## इन्द्रद्वीप (एंडमन)

प्राचीन काल में किसी समय ओड्र (उड़ीसा) देश के पुरुषोत्तम क्षेत्र में इन्द्रद्युम्न नाम का राजा हुआ था। ब्रह्म पुराण में लिखा है—

प्राचीन काल में मालवा प्रदेश की अवंतिकापुरी में कोई इन्द्रद्युम्न नाम का राजा हुआ है, जो अत्यन्त वैभवशाली था, ऐसा सुना जाता है।

उस राजा ने पुरुषोत्तम नाम के मुक्तिदायक स्थान पर जाकर वहाँ बलराम, कृष्ण और सुभद्रा को प्राप्त किया॥

मार्कण्डेय नाम के वट वृक्ष को, कृष्ण और बलराम को देखने वाला इन्द्द्युम्न नाम के सागर में स्नान करने वाला पुण्यात्मा व्यक्ति अवश्य ही मोक्ष को प्राप्त करता है॥

वह राजा दक्षिण समुद्र के किनारे पर जाकर समुद्र के तट को प्राप्त करके वहीं निवास करने लगा॥(ब्राह्म ४१/८२)॥

इस राजा के अधिकार में होने के कारण इस द्वीप का नाम "इन्द्रद्युम्न" पड़ा। इसी के अपभ्रंश से "ऐन्द्रमन" शब्द बना है, ऐसा प्रतीत होता है। यह इन्द्रद्युम्न द्वीप १० डिग्री अंश तथा ४०' कला उत्तर अक्षांश से १३ अंश १५ कला अक्षांश पर्यन्त प्रदेश पर (१०॥४०।१३॥५) तथा ९२' डिग्री अंश और ३६' कला से ९३ डिग्री अंश पर्यन्त पूर्व देशान्तर तक स्थित है। (९२॥३६-९३।०) ॥१॥

## नागद्वीपः

**२- अथ पुरायुगे नागवंश्याः केचन क्षत्रियाः स्वर्गे भूमौ 'तासकन्द' प्रदेशादौ राज्यमकुर्वन्। ते च काश्मीरप्रदेशं पश्चादधितिष्ठन्तोऽस्मिन् भारतवर्षे यत्र तत्रो-पनिविष्टा बभूवुः। तेषामेवाधिकारे यो द्वीप आसीत् स नागेश्वर इति प्रसिद्धो म्लेच्छभाषायामपभ्रंशात् "नीकोवर" इति संभवति। सपञ्चाशषष्ठांशादष्टमांशं याव-दुत्तरेऽक्षांशे (६।५०।८।०) त्रिनवत्यंशात् सपञ्चाशत्रिनवत्यंशं यावत्पूर्वदेशान्तरे (९३।०।-९३।५०) नागेश्वराख्यो नीकोबरः॥२॥**

## नागद्वीप (निकोबार)

प्राचीनकाल में नागवंश के कुछ क्षत्रिय भौम स्वर्ग में स्थित तासकन्द प्रदेश आदि पर राज्य करते थे। कालान्तर में वे कश्मीर प्रदेश में अधिकार करते हुए भारतवर्ष में अनेक स्थानों पर निवास करने लगे। उनके अधिकार में जो द्वीप था, वह नागेश्वर नाम से प्रसिद्ध था, जो म्लेच्छ भाषा में अपभ्रंश रूप से निकोबार बन गया, ऐसी संभावना है। यह ६ डिग्री अंश और ५० डिग्री कला से ८ डिग्री अंश उत्तर अक्षांश तक तथा ९३ डिग्री अंश और ५० डिग्री कला से ९३ डिग्री अंश पूर्व देशान्तर तक नागेश्वर नाम का निकोबार द्वीप है ॥२॥

## सौम्यः।

**३-अथ सोमो राजा गन्धर्वेष्वासीद् गन्धर्वाणामधिपतिर्लोकपाल इति वेदे महाभारते पुराणादौ च प्रसिद्धम्। गन्धर्वदेशो गान्धारदेशः संप्रति "अफगानिस्तान"-इति प्रसिद्धः। तस्याधिपत्येनायं द्वीपः सौम्य उच्यते। अधीने च त्राप्रत्ययो वेदभाषायामनुशिष्यते। तेनैतस्य पुरात्वे सोमत्रा इति नाम संभाव्यते। तदपभ्रंशादयं "सुमात्रा" शब्दः प्रवर्तते। निरक्षवृत्ते द्वियुतशततमे पूर्वदेशान्तरे सोमत्रा द्वीपः। यवद्वीप-बलिद्वीप-लुम्बक-सुम्वावा-सुम्बा-फ्लोरीनप्रभृतिर्जावाद्वीपसंघोऽपि सुमात्रासांनिध्यात् सौम्यशब्देनैव संगृह्यते॥ अत एव जावाद्वीपसंघस्य दक्षिणाष्टमाद्यक्षांशवृत्तित्वेऽपि भारतीयत्वं नोपहन्यते। षडधिकशतांशाद्दशाधिकशतांशपर्य्यन्ते पूर्वदेशान्तरेऽयं जावाद्वीपसंघः ॥३॥**

## सौम्यद्वीप (सुमात्रा)

वेद, महाभारत और पुराण इत्यादि में प्रसिद्ध है कि गंधर्वों में सोम नाम का राजा हुआ है जो गंधर्वों का अधिपति और लोकपाल था। गंधर्व देश ही गंधार देश है, जो वर्तमान काल में अफगानिस्तान के नाम से जाना जाता है। इस सोम राजा के आधिपत्य में होने के कारण यह द्वीप सौम्य द्वीप कहा जाता है। वेदभाषा में अधीन अर्थ में त्रा प्रत्यय का विधान किया गया है। इसी से यह द्वीप कालान्तर में सोमत्रा नाम से कहा जाने लगा, ऐसा संभव है। इसी के अपभ्रंश से सुमात्रा शब्द बना है। यह सुमात्रा द्वीप $०^{\circ}$ अंश पर तथा $१०२^{\circ}$ अंश पूर्व देशान्तर तक व्याप्त है। यवद्वीप-वलिद्वीप-लुम्बक-सुम्वावा-सुम्वा-फ्लोरीन इत्यादि जावाद्वीपसमूह भी सुमात्रा के समीप होने के कारण सौम्य शब्द से ही सम्मिलित किये गये हैं। अत एव जावाद्वीपसंघ का $८^{\circ}$ अंश दक्षिण अक्षांश पर स्थित होते हुए भी भारतीयत्व असंगत नहीं होता है। यह जावाद्वीप संघ $१०६^{\circ}$ अंश से $११०^{\circ}$ अंश पर्यन्त पूर्व देशान्तर तक स्थित है ॥३॥

## गान्धर्वः।

**(४) अस्यैव सोमस्य सामन्तप्राया विश्वावसुप्रभृतयो गन्धर्वराजाः प्रसिद्धाः। तदधीनो द्वीपो गान्धर्वः। स चायं गान्धर्वद्वीपसंघः फीलीपायिनशब्देनाख्यायते। तत्र मनिल्लादयः प्रदेशा अन्तर्भवन्ति। द्वादशे उत्तराक्षांशे (१२।०) त्रयोविंशशते पूर्व-देशान्तरे (१२३) ऽयं द्वीपः स्थितः ॥४॥**

## गान्धर्व (फिलीपायिन द्वीपसमूह)

इसी सोम राजा के सामन्तगण विश्वावसु इत्यादि गन्धर्व राजा प्रसिद्ध थे। इनके अधिकार में जो द्वीप था, वह गांधर्व द्वीप कहलाया। आज यही गान्धर्व द्वीपसमूह फिलीपायिन द्वीप के नाम से जाना जाता है। इन्हीं में मनिल्ल (मनीला) इत्यादि प्रदेश भी समाविष्ट हैं। यह द्वीप १२° अंश उत्तर अक्षांश तथा १२३° अंश पूर्व देशान्तर तक स्थित है ॥४॥

## वारुणः ।

**(५) अथ वरुणोऽसुराणां राजासील्लोकपालः। तदधिकृतो द्वीपो वारुणः। तदपभ्रंशादयं बोर्नियो शब्द उच्यते। द्व्यधिकपञ्चमे उत्तराक्षांशे (५।२।उ.) द्वापञ्चाशत्कलोपेते चतुर्दशशते देशान्तरेऽयं वारुणद्वीपः (१४४।५२ पू.) ॥५॥**

## वारुण द्वीप (बोर्नियो)

असुरों का राजा वरुण लोकपाल था। उसके अधिकार में जो द्वीप था, वह वारुण द्वीप था। इसी वारुण के अपभ्रंश से बोर्नियो शब्द बना है। यह द्वीप ५° अंश, २' कला उत्तर अक्षांश तथा ११४° अंश तथा ५२' कला पूर्व देशान्तर तक स्थित है ॥५॥

## कशेरुमान् ।

**(६) अथ कशेरुः कन्दविशेषः। तस्याधिक्येन कदाचिदत्रोत्पत्तिर्भवेदिति कशेरुमानित्ययमाख्यातः स्यात्। ककारलोपे सेलुवाशब्दोपपत्तिक्रमेणायं द्वीपः सेलेवीस इत्युक्त इत्यनुमीयते॥ बोर्नियो द्वीपादयं प्राच्यां संनिविशते। चतुर्थे दक्षिणाक्षांशे (४।०) एकविंशशते पूर्वदेशान्तरे (१२१) कसेरुमान् ॥६॥**

## कशेरुमान् (सेलेवीस)

कशेरु नाम की एक कन्द विशेष होती है। इसी कन्द विशेष की किसी समय यहाँ अधिक उत्पत्ति होती होगी, इसीलिये इस द्वीप का नाम कशेरुमान् पड़ा। ककार का लोप होने पर "सेलुवा" शब्द की व्युत्पत्ति के क्रम से ही यह द्वीप सेलेवीस कहा जाने लगा, ऐसा अनुमान किया जाता है। यह द्वीप बोर्नियो द्वीप से पूर्व की ओर स्थित है। यह कशेरूमान् द्वीप ४° अंश दक्षिण अक्षांश और १२१° अंश पूर्व देशान्तर तक स्थित है ॥६॥

## गभस्तिमान् ।

**(७) सेलवीसात् प्राच्यां निरक्षवृत्ते मलक्कोपद्वीपो गभस्तिमान्॥ केचित्तु मलुक्वातोऽग्निकोणस्थमासन्नप्रायं पपुवाद्वीपं गभस्तिमच्छब्देनेच्छन्ति। अद्यतनास्तु पपुवोपद्वीपमाष्ट्रेलियाद्वीपानुबन्धिनमाहुः॥ अत एवेदानीं भारतीयोपद्वीपत्वाभावात् तत्परित्यागः। वस्तुतस्तु संभाव्यते पुरा युगे तस्यापि भारतीयत्वमिति मलुक्कामारभ्य पपुवापर्यन्तस्य द्वीपसंघस्य गभस्तिमच्छब्देन शक्यते व्यवहारः कर्तुं निरक्षवृत्ते सार्द्धे सप्तविंशशते (१२७।३०) देशान्तरे गभस्तिमानस्ति॥७॥**

## गभस्तिमान् (मलूका)

सेलेवीस द्वीप से पूर्व की ओर ०° अंश पर मलक्का नाम का उपद्वीप ही गभस्तिमान् कहलाता था। कुछ लोग मलुक्का के समीप अग्निकोण में जो पपुवा द्वीप है, उसी को गभस्तिमान् कहना पसन्द करते हैं। आजकल लोग पपुवा द्वीप को ऑस्ट्रेलिया का प्रमुख उपद्वीप मानते हैं। अतएव गभस्तिमान् को भारत का उपद्वीप न होने के कारण छोड़ दिया गया है। वास्तव में प्राचीनकाल में गभस्तिमान् भी भारतीय उपद्वीप ही था और मलुक्का से लेकर पपुवा तक के द्वीपसंघ गभस्तिमान् शब्द से कहे जा सकते हैं। यह द्वीप ०° अंश उ.अ. तथा १२७१/२ अंश देशान्तर तक स्थित है ॥७॥

## ताम्रपर्णः।

**(८) अथ सिंहलद्वीप एव ताम्रपर्णीद्वीपः। बौद्धग्रन्थे भारतवर्षीयदेशविभाग-प्रकरणे ताम्रपर्णीशब्देन सिंहलद्वीपस्योपदिष्टत्वात्। यूनानदेशीयग्रन्थे चायं सिंहलद्वीपः "टापरोवेन" शब्देनाख्यायते॥ तावताऽप्यस्य ताम्रपर्णसंज्ञोपपद्यते। टापरोवेनश-ब्दस्य ताम्रपर्णशब्दापभ्रंशतया संभाव्यमानत्वात्॥ यत्तु टापूरावणशब्दापभ्रंशतया टापरोवेनशब्दं केचित् संभवायन्ति तदयुक्तम्॥ टापूशब्दस्य भारतीयग्राम्यशब्दतया यूनानदेशे तदपभ्रंशस्य प्रयोगायोगात्। सिंहलस्य रावणटापूत्वाभावाच्च॥ चत्वा-रिंशदधिकसप्तमे उत्तराक्षांशे (७।४०) पञ्चाशदधिकाशीतिदेशान्तरे (८०।५०) चायं सिहलद्वीपः॥८॥**

## ताम्रपर्ण(टोपरोवेन अथवा सीलोन)

सिंहल द्वीप ही ताम्रपर्ण द्वीप है, क्योंकि बौद्ध ग्रन्थ में भारतवर्ष के विभागप्रकरण में ताम्रपर्णी शब्द से सिंहलद्वीप को ही बताया गया है। यूनानी ग्रन्थ में यह सिंहल द्वीप "टापरोवेन"शब्द से कहा जाता है। इस टापरोवेन शब्द का ताम्रपर्ण नाम भी उचित प्रतीत होता है। क्योंकि टापरोवेन शब्द ताम्रपर्ण शब्द का अपभ्रंश हो सकता है। कुछ लोग टापरोवेन शब्द को टापू रावण शब्द का अपभ्रंश मानते हैं, यह अनुचित है। क्योंकि टापू शब्द भारतीय ग्राम्य भाषा का शब्द होने के कारण यूनान देश में अपभ्रंश के रूप में प्रयुक्त होना असंभव है, तथा सिंहल द्वीप रावण का टापू हो ही नहीं सकता है। यह सिंहल द्वीप ७° अंश तथा ४०' कला उत्तर अक्षांश और ८०° तथा ५०' कला देशान्तर तक स्थित है ॥८॥

## कुमारिका

**(९) सर्वोप्ययं भारतीयोपद्वीपसंघः संप्रति म्लेच्छभाषायामेकेन शब्देन "इंडियन आर्किपैलैगो" –इत्याख्यायते॥ यस्तु कुमारिकाक्षेत्रादारभ्य काश्मीरपर्य्यन्तः प्रविततो महाद्वीपः सोऽत्र प्रधानो नवमो द्वीपः। एते चेन्द्रद्वीपादयः सिंहलातिरिक्ताः सर्वेऽप्यु-पद्वीपाः प्रचलितभाषायां वर्म्माशब्देन प्रसिद्धात् कृतवर्म्मणो राज्ञो राष्ट्राद् दक्षि-णपूर्वस्यां दिश्येव संनिविष्टा दृश्यन्ते॥ तत्र वारुणकसेरुगान्धर्वादीनामुपद्वीपानां भारतीयोद्वीपत्वाख्यानं नत्वेवोपपद्यते, यावता फारमोसाप्रदेशोपलक्षितप्रशान्तसाग-**

**रस्य भारतवर्षसीमान्तर्भुक्तत्वं नाभ्युपगम्येत । तस्माद् भारतीयमध्यरेखातः प्राच्यां पञ्च-चत्वारिंशदंशा भारतस्यास्य पूर्वा सीमेति सिद्धम् ।।९ ।। अपि च शक्तिसंगमतन्त्रादौ चीनप्रदेशनामपि केषांचिद् भारतीयत्वेनाख्यानात् चीनसंबंधिफारमूसोपद्वीपपर्य्यन्तं भारतवर्षमासीदिति विज्ञायते। तथा चेदं भारतवर्षस्य नवत्त्यंशपरिमितत्त्वे पञ्चमं प्रमाणम् ।। हिन्दुस्तानशब्देन प्रसिद्धस्य कुमारीद्वीपस्य भारतीयत्वाख्यानं भारतवर्षस्य बहुविस्तृतप्रदेशत्वं गमयति ।।५ ।।**

## कुमारिका (भारत खण्ड)

यह समस्त भारतीय उपद्वीप संघ वर्तमान समय में अंग्रेजी भाषा के एक शब्द "इंडियन आर्किपैलैगो"से कहा जाता है। जो द्वीप कन्याकुमारी क्षेत्र से कश्मीर तक फैला हुआ है, वही महाद्वीप प्रधान तथा नवां द्वीप है। सिंहल द्वीप को छोड़कर इन्द्रद्वीप इत्यादि समस्त उपद्वीप वर्तमान प्रचलित भाषा में वर्मा (बर्मा) शब्द से प्रसिद्ध कृतवर्मा राजा के राष्ट्र से दक्षिण पूर्व दिशा में फैले हुए दिखाई देते हैं। वारुण, कसेरू, गांधर्व इत्यादि उपद्वीपों को भारतीय उपद्वीप कहना तब तक संगत नहीं हो सकता, जब तक फारमोसा प्रदेश से लक्षित प्रशान्त सागर को भारतवर्ष की सीमा के अन्तर्गत स्वीकार न कर लिया जावे। इसलिये भारतीय मध्य रेखा से पूर्व की ओर ४५° अंश तक भारतवर्ष की पूर्व सीमा सिद्ध होती है ।।९.।

और भी, शक्तिसंगमतंत्र इत्यादि में चीन के कुछ प्रदेशों को भी भारतीय ही कहे जाने से स्पष्ट प्रतीत होता है कि चीन से संबद्ध फारमोसा उपद्वीप तक भारतवर्ष फैला हुआ था और इस प्रकार ९०° अंश तक भारतवर्ष की सीमा है, यह पांचवा प्रमाण है। हिन्दुस्तान शब्द से प्रसिद्ध कुमारी द्वीप को भारतीय कहा जाना भारतवर्ष का बहुत विस्तृत प्रदेश होना सिद्ध करता है ।।५ ।।

## अपि च सिन्धोः पश्चिमस्थानां देशानां भारतीयदेशत्वाख्यानं षष्ठं प्रमाणम् ।।

**तथाहि— पौराणिके भुवनकोशे भारतवर्षीयावान्तरदेशपरिगणनासूदीच्य-**

**१ २ ३ ४ ५ ६ ७**

**देशतया गान्धार-मद्र-पारद-पह्लव-कम्बोज-शक-यवनादि-देशानामुल्लेखादेषां देशानां पुरायुगे भारतीयत्वमासीदित्युपगम्यते। बृहत्संहितायां च "भारतवर्षे मध्यात् प्रागादिविभाजिता देशाः ।। (१४ ।१) इति प्रतिज्ञाय पश्चिमायां हैहय-पारद-शकदेशानां पश्चिमोत्तरस्यां च तुखारमद्रादिदेशानामाख्यानात् तत्कालेप्येषां भारतवर्षीयत्वं सुप्रसिद्धमिति गम्यते।**

## सिन्धु नदी के पश्चिमी भाग में स्थित देशों का भी भारतीयत्व-कथन—छठा प्रमाण

पौराणिक भुवन कोश में भारतवर्ष के अवान्तर देशों की गणनाओं में उत्तरी देशों के रूप में गांधारमद्र- पारद-पह्लव-कम्बोज-शक-यवन इत्यादि देशों का उल्लेख करने से प्राचीन काल में इन देशों का भारतीय होना सिद्ध होता है। और बृहत्संहिता में लिखा है- "भारतवर्ष में मध्य से पूर्व आदि दिशाओं में विभाजित देश" यह शीर्षक देकर पश्चिम में हैहय-पारद-शक इत्यादि देशों का तथा पश्चिमोत्तर दिशा में तुखार-मद्र इत्यादि देशों का उल्लेख करने से उस काल में भी इनका भारतीय होना प्रसिद्ध था, ऐसा स्पष्ट होता है।

### गान्धारमद्रौ।

**तत्रायमफगानस्ताननाम्ना संप्रति प्रसिद्धः संपूर्णो देशः पुरात्वे गान्धारशब्देन, संपूर्णश्चामीरानदेशः पुरात्वे मद्रशब्देन व्यवहृतावास्ताम्। इत्थमेतत् पश्चिमं भारतवर्षं गान्धारमद्राभ्यां द्वेधा विभक्तं द्रष्टव्यम्। गान्धारमद्रौ चैतौ प्रत्येकं द्वेधा विभक्तावास्ताम्॥ तत्रैते गान्धाराः कन्दहारनगरोपलक्षितास्तावत्सिन्धोः पूर्वतः पश्चिमतश्च प्रसिद्धाः। रामभ्रातृभरतपुत्राभ्यां तक्षकपुष्कराभ्यां तक्षशिलां पुष्करावतीं च राजधानीं पृथगधितिष्ठद्भ्यां स्व-स्वराष्ट्रतयैषां गान्धाराणां द्वेधा विभज्यमानत्वात्। तथा च भारतीयराजशासनाधीनतयैषामुभयेषां भारतीयत्वं सुनिश्चितम्॥**

**काबुलतोऽनतिदूरे वायव्ये वामियानाख्याः॥**
**प्रान्तोऽस्ति तत्र पूर्वं राजा लोकाश्च वैदिका अभवन्॥१॥**
**ईरानेऽपि तथासीत्पुरा युगे पार्सिपोलिसेत्याख्या॥**
**पारस्यपुरीयायां विदुरद्यत्वे त्विस्तखरनाम्ना॥२॥**
**प्राक्तनपारस्यलिपिप्रोल्लिखितास्तत्र ये शिलालेखाः॥**
**तेभ्यस्तत्रत्यानां भारतवर्षार्य्यसंस्रवोऽधिगतः॥३॥**

**अथौत्तरमद्रा दक्षिणमद्रा इत्येव मद्रदेशस्यापि द्वैविध्यं प्रसिद्धम्॥ तथा च द्विधा गान्धारा द्विधा मद्रा इत्येवमेते चत्वारो विभागा, भौगोलिका नित्या भवन्ति।**

### गान्धार तथा मद्र

आज जो देश अफगानिस्तान नाम से प्रसिद्ध है, प्राचीन काल में वह सम्पूर्ण देश गान्धार शब्द से तथा यह सम्पूर्ण प्राचीन ईरान देश प्राचीन काल में मद्र शब्द से व्यवहृत किया जाता था। इस प्रकार यह पश्चिमी भारतवर्ष गान्धार और मद्र देशों के रूप में दो भागों में विभक्त था, ऐसा प्रतीत होता है। गान्धार और मद्र देश भी प्रत्येक दो-दो भागों में विभक्त थे। वहां ये गान्धार लोग कन्दहार नगर से लक्षित सिन्धु नदी के पूर्व और पश्चिम भाग में स्थित थे। राम के भाई भरत के पुत्र तक्षक और पुष्कर ने तक्षशिला और पुष्करावती नगरियों को अपनी राजधानी बनाकर गान्धार देशवासियों को अपने राष्ट्र के अनुसार दो

भागों में विभाजित कर दिया था और भारतीय राजाओं के राज्य शासन के अधीन होने के कारण इन दोनों का भारतीयत्व होना सुनिश्चित है।

काबुल के समीप ही वायव्य कोण में वामियाना नाम का एक प्रान्त है। प्राचीन काल में वहाँ के राजा और प्रजा दोनों ही वैदिक थे ॥१ ॥

प्राचीनकाल में ईरान में भी पारस्यपुरी में पार्सिपोलिस नाम की नगरी थी, जो आजकल "त्विस्तखर" नाम से जानी जाती है ॥२ ॥

प्राचीनकाल की पारसी लिपि में उल्लिखित जो शिलालेख प्राप्त होते हैं, उनसे भी वहाँ के निवासियों का भारतवर्ष के आर्यमूल का होना स्पष्ट होता है ॥३ ॥

मद्र देश का उत्तर मद्र और दक्षिण मद्र दो भागों मं विभक्त होना प्रसिद्ध है। और इसी प्रकार भौगोलिक दृष्टि से दो भाग गान्धार तथा दो भाग मद्र के मिलाकर सदा से ही कुल चार भाग हैं।

## सगरनिर्वासिताः धर्मभ्रष्टाः पञ्चगणाः ।

**अथैतयोरेव गान्धारमद्रयोर्जनताविभागनिबन्धनाः पुनरन्ये पारदपह्लवकाम्बोजादयः पञ्चधावान्तरविभागा इष्यन्ते। तथा हि यदुवंशीयहैहयसाम्राज्यकाले तन्मित्रराष्ट्रत्वेन**

**१ २ ३ ४ ५**

**तदधीनराष्ट्रत्वेन चैते पारदाः-पह्लवाः-कम्बोजाः-शकाः-यवना इति पञ्चगणाः सिन्धोः पश्चिमतो राज्यं कुर्वन्ति स्म। ते चाणुवंश्या द्रुह्यवंश्या वा चन्द्रवंशीयाः क्षत्रियापसदाः सम्राजमेतं हैहयमनुवर्तन्ते स्म। हैहयकुलशत्रुः सूर्यवंशीयो महाराजः सगरः स्वपितृविद्वेषिणं हैहयराजं विनिर्जित्य चक्रवर्तित्वं लेभे। स एषां हैहयानुगामिनां पह्लवादीनां पराजयचिह्नतया वैकृतं चक्रे। तदुक्तं ब्राह्मादिषु-**

**रुरुकस्य वृकः पुत्रो वृकाद् बाहुस्तु जज्ञिवान्।**
**हैहयास्तालजंघाश्च निरस्यन्ति स्म तं नृपाः ॥१ ॥**
**बाहोर्व्यसनिनः सर्वं हृतं राज्यमभूत्किल ॥**
**हैहयैस्तालजंघैश्च शकैः सार्द्धं द्विजोत्तमाः ॥२ ॥**
**यवनाः पारदाश्चैव काम्बोजाः पह्लवास्तथा ॥**
**एते ह्यपि गणाः पञ्च हैहयार्थे पराक्रमन् ॥३ ॥**
**सगरस्तु सुतो बाहोर्जज्ञे सह गरेण वै ॥**
**और्वस्याश्रममासाद्य भार्गवेणाभिरक्षितः ॥४ ॥**
**आग्नेयमस्त्रं लब्ध्वा च भार्गवात्सगरो नृपः ॥**
**हैहयान् विजघानापशु क्रुद्धो रुद्रः पशूनिव ॥५ ॥**
**ततः शकाँश्च यवनान् काम्बोजान् पारदाँस्तथा ॥**
**पह्लवाँश्चैव निःशेषान् कर्तुं व्यवसितोऽभवत् ॥६ ॥**
**ते बध्यमाना वीरेण सगरेण महात्मना ॥**

वशिष्ठं शरणं गत्वा प्रणिपेतुर्मनीषिणम् ॥७॥
वसिष्ठस्त्वथ तान् दृष्ट्वा समयेन महाद्युतिः ॥
सगरं वारयामास तेषां दत्वाऽभयं तदा ॥८॥
सगरस्तां प्रतिज्ञां च गुरोर्वाक्यं निशम्य च ॥
धर्मं जघान तेषां च वेषानन्यांश्चकार ह ॥९॥
अर्द्धं शकानां शिरसो मुण्डयित्वा व्यसर्जयत् ॥
यवनानां शिरः सर्वं काम्बोजानां तथैव च ॥१०॥
पारदा मुक्तकेशाश्च पह्लवाः श्मश्रुधारिणः ॥
सर्वे ते क्षत्रिया विप्रा धर्मस्तेषां निराकृतः ॥११॥

॥इत्यादि॥

## सगर द्वारा निर्वासित धर्मभ्रष्ट पंचगण

इस प्रकार गान्धार और मद्र की जनता का विभाजन करने के पश्चात् फिर उनके पारद-पह्लव-काम्बोज इत्यादि पांच अवान्तर विभाग बताये गये हैं। इसी प्रकार यदुवंशीय हैहय साम्राज्य के समय उसके मित्र राष्ट्र के रूप में तथा उसके अधीन राष्ट्र के रूप में पारद, पह्लव, कम्बोज, शक, यवन, ये पांच गण सिंधु नदी के पश्चिम में राज्य करते थे। वे अणुवंशी, द्रुह्युवंशी अथवा चन्द्रवंशी निम्न क्षत्रिय इस हैहयसाम्राज्य का अनुगमन करते थे। हैहयसाम्राज्य के वंश के शत्रु सूर्यवंशीय महाराजा सगर अपने पिता से द्वेष करने वाले हैहयराज को जीत कर चक्रवर्ती बने। ब्रह्म पुराण में यह कहा भी गया है—

रुरुक का पुत्र वृक हुआ और वृक के बाहु पैदा हुआ। हैहय और तालजङ्घ राजाओं ने उस बाहु नाम के राजा को पराजित (बहिष्कृत) कर दिया ॥१॥

बाहुराजा व्यसनी था अतः श्रेष्ठ ब्राह्मणों ने हैहय, तालजङ्घ और शकों के साथ मिलकर उसका राज्य और सर्वस्व छीन लिया।२॥

यवन, पारद, काम्बोज, पह्लव इत्यादि पांच गणों ने भी हैहयवंश के लोगों के पक्ष में पराक्रम किये अथवा आक्रमण किये ॥३॥

बाहु का पुत्र सगर हुआ जो कि विष के साथ ही पैदा हुआ था। उसने और्व ऋषि के आश्रम में जाकर भार्गव ऋषि द्वारा रक्षा प्राप्त की ॥४॥

इस सगर राजा ने भार्गव ऋषि से आग्नेय नाम का अस्त्र प्राप्त करके हैहयों को शीघ्र ही उसी प्रकार मार दिया जिस प्रकार क्रुद्ध रुद्र पशुओं (प्राणियों) को मारता है।।५॥

तब वह राजा सगर शकों, यवनों, पारदों, काम्बोजों और पह्लवों को पूर्ण रूप से नष्ट करने के कार्य में प्रयत्नशील हो गया ॥६॥

महात्मा, वीर राजा सगर के द्वारा पीड़ित किये जाते हुए तथा बांधे जाते हुए वे लोग महान् विद्वान् महर्षि वसिष्ठ की शरण में जाकर गिर गये ॥७॥

तब महान् तेजस्वी महर्षि वसिष्ठ ने उन्हें देखकर प्रतिज्ञापूर्वक राजा सगर को रोक दिया और उन लोगों को अभयदान दिया ॥८॥

और राजा सगर ने प्रतिज्ञा को तथा मुनि वसिष्ठ के वचनों को सुनकर उन पंचगणों के धर्म को नष्ट कर दिया तथा उनकी वेषभूषा में परिवर्तन कर दिया ॥९॥

शकों के आधे सिर को मूंड कर उन्हें छोड़ दिया, यवनों तथा काम्बोजों के सिर को पूरी तरह से मूँड दिया ॥१०॥

पारदों को केश मुक्त कर दिया गया तथा पह्लवों को केवल दाढ़ीधारी बना दिया। ये सभी क्षत्रिय और ब्राह्मण थे, जिनके धर्म को नष्ट-भ्रष्ट कर दिया गया ॥११॥

इत्यादि।

## पारदाः।

**पञ्चाप्येते क्षत्रियापसदा भारतीयार्यधर्माद्विच्च्याविताः कालेन कैलडियादेशनिवासिकालकेयासुरधर्मे दीक्षिता भूत्वा क्रमेणाऽसुरवेषभूषां तद्भाषां चागृह्णन्। अहंमन्येषु पूर्णाभिमानिषु तेषु केचिदात्मनो धनुर्धरवीरत्वं प्रख्यापयन्तः पारदा इत्यात्मनो राजोपाधिं जगृहुः॥ तच्छब्दस्यासुरभाषायां धनुर्धरार्थत्वात्। ते चैते पारदाः उत्तरकाले म्लेच्छभाषया पार्थिया इत्युक्ताः। एषां च निवासप्रदेशः काश्यपीयसागराद्दक्षिणपूर्वदिश्युत्तरमद्रोभवत्। तमिदानीं युगे खुरासानदेशमाहुः।**

## पारद

इन पाँचों नीच क्षत्रियों ने भारतीय आर्यधर्म से च्युत किये जाने पर समय आने पर कैलडिया देश के निवासी कालकेय जाति के असुरों के धर्म में दीक्षित होकर धीरे-धीरे असुरों की वेशभूषा तथा उनकी भाषा को ग्रहण कर लिया। इन लोगों ने अहंकारी तथा पूर्ण रूप से अभिमानी होकर स्वयं को धनुर्धारी वीर घोषित करते हुए अपने आप "पारद" नाम की राजोपाधि धारण कर ली। क्योंकि असुर भाषा में पारद शब्द का अर्थ धनुर्धर होता है। और ये पारद उत्तरवर्ती काल में म्लेच्छ भाषा में पार्थिया कहे जाने लगे। इनका निवास स्थान कैस्पीयन सागर के दक्षिण पूर्व में उत्तरमद्र प्रदेश था। उसी को आजकल खुरासान देश कहा जाता है॥

## पह्लवाः।

**अथान्ये केचिन्महाबलिष्ठार्थकमासुरभाषया पह्लवान् शब्दं स्वोपाधिं जगृहुः। ते पह्लवाः इति आख्यायन्त।**

**पह्लवास्तु पार्थवाः पार्थिवा इति कालेनाख्याताः शासनीनाम्ना पश्चात् प्रसिद्धा अभवन्। इस्पहाननगरोपलक्षितो दक्षिणमद्रप्रान्तस्तेषां निवासभूमिः॥ यत्तु केचित् पाश्चात्यविद्वांसोऽद्यत्वे पारदानामेव पह्लवत्वमुपतर्कयन्ति पार्थिवा एव त्वपभ्रंशात् पार्थिया उच्यन्ते इति चाहुः। तन्न युक्तम्। पौराणिकेऽतिप्राचीने भुवनकोशे पारदानां पह्लवानां च भेदेन सर्वत्राख्याततत्वात् ॥ यथा मार्कण्डेयो॥ ५४ अ.)**

"बाह्लीका वाटधानाश्च पह्लवाश्चर्मखण्डिकाः ॥
गान्धारा यवनाश्चैव पारदा हारभूषिकाः ॥१ ॥
कम्बोजा दरदाश्चैव काश्मीरानुगुणास्तथा" ॥इति. ॥

**जेन्दावस्ताग्रन्थोऽप्यादितः पह्लवीभाषायामासीत्। तेनैते तद्ग्रन्थानुयायिनामग्निपूजकानां पारसीकानां पुरात्वे चन्द्रवंशीयक्षत्रियत्वानुमानेऽपि कालेन पह्लवसंज्ञाप्रसिद्धजातिमुक्तत्वमनुमीयते। जेन्दावस्ताग्रन्थनिर्म्माता जरथुस्त्रो यद्यपि मगजातीयतया शक आसीत्। तथापि जेन्दावस्ताग्रन्थस्य पह्लवीभाषायां निर्म्माणात् पह्लवशकयोः परस्परतः संस्त्रवाधिक्यमासीदित्यवगम्यते ॥**

## पह्लव

अन्य कुछ लोगों ने असुरभाषा के अतिबलिष्ठ अर्थ को प्रकट करने वाले "पहलवान्" शब्द को अपनी उपाधि के रूप में धारण कर लिया। ऐसे वे लोग पह्लव कहलाये। ये पह्लव ही समय समय पर पार्थव और पार्थिव कहलाये और बाद में ये ही शासनी के नाम से प्रसिद्ध हुए। इस्पहान नाम से पहचाना जाने वाला दक्षिण मद्र प्रान्त इन लोगों की निवासस्थली थी। जो कुछ पाश्चात्य विद्वान् आज तक पारदों को ही पह्लव मानते हैं, वे यह भी कहते हैं कि पार्थिव ही अपभ्रंश रूप में पार्थिया कहे जाते हैं। यह उचित नहीं है, क्योंकि अति प्राचीन पौराणिक भुवनकोश में पारदों और पह्लवों का अलग-अलग वर्णन किया गया है। जैसा कि मार्कण्डेय पुराण में लिखा है-

बाह्लीक, वाटधान, पहलव, चर्मखण्डिक, गान्धार, यवन, पारद, हारभूषिक, कम्बोज और दरद काश्मीर के लोगों के समान गुण वाले थे॥

"जेन्दावस्ता" ग्रन्थ भी मूल रूप से पहलवी भाषा में ही था। ऐसा अनुमान है कि इस ग्रन्थ का अनुकरण करने वाले, अग्निपूजक पारसियों को प्राचीन चन्द्रवंशीय क्षत्रिय मान लेने पर भी परवर्ती काल में ये पह्लव नाम की प्रसिद्ध जाति के कहे जाने लगे। जेन्दावस्ता ग्रन्थ का निर्माता जरथुस्त्र यद्यपि मग जाति का होने के कारण शक था तथापि जेन्दावस्ता ग्रन्थ का निर्माण पह्लवी भाषा में होने से प्रतीत होता है कि पह्लव और शक जाति के लोगों में परस्पर अत्यन्त घनिष्ठता थी।

## कम्बोजाः।

**कामभोजाः यथेच्छभोगप्रवणाः सर्वस्वतंत्रा वयमित्यात्मानं प्रथयन्तोऽपरे कालेन काम्भोजाः काम्बोजा उच्यन्ते स्म। त एव कम्बोडिया इत्याख्याताः। ते चैते काम्बोजा निषधपर्वताद्दक्षिणस्था अपि भारतीया एवासन् ॥"शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते"— इति व्याकरणमहाभाष्योक्त्या तत्रत्यानामपि संस्कृतभाषाभाषित्वेनार्यत्वोपगमात् ॥ ये त्विदानीं भारतवर्षस्य पूर्वप्रान्तेऽपि नूनं वर्म्माख्यप्रदेशपूर्वभागस्थात् स्यामदेशात् प्राच्यां, कोचीनतः प्रतीच्यां तयोर्देशयोर्मध्येऽष्टमाक्षांशात् पञ्चदशाक्षांशपर्य्यन्तं केचित् कम्बोजाः प्रसिद्ध्यन्ति। यॉश्च कम्बोडियाशब्देनैवेदानींन्तनाः पाश्चात्याः व्यपदिशन्ति ते खल्वेभ्यो भारतपश्चिमप्रान्तवासिभ्यः काम्बो-**

जेभ्यो भिन्नाः स्युः ।। पुरा युगे भारतीयसर्वग्रन्थे कम्बोजानां भारतपश्चिमत्वेनैवाख्यानात्तेषां पारस्तानप्रान्तवासित्वं नापलपितुं शक्यते ।।

## कम्बोज

"काम-भोज" अर्थात् इच्छानुसार भोगविलास में प्रवृत्त, "हम सब स्वतंत्र है", ऐसा मानने वाले काम्भोज ही परवर्ती काल में काम्बोज कहलाये। वे इस प्रकार कम्बोडिया कहे जाने लगे। ये काम्बोज निषध पर्वत के दक्षिण भाग में रहते हुए भी भारतीय ही थे। "गत्यर्थक शवति धातु" का प्रयोग काम्बोजों में ही किया जाता है, व्याकरणभाष्य की इस उक्ति के अनुसार वहां के निवासी भी संस्कृत भाषा बोलने के कारण आर्य ही थे। जो लोग आज भारत वर्ष के पूर्वी प्रान्त में वर्मा, उससे पूर्व में स्याम देश से पूर्व तथा कोचीन से पश्चिम, इन दोनों देशों के मध्य ८ अक्षांश से १५ अक्षांश तक के लोग काम्बोज कहलाते हैं और जिनको पाश्चात्य लोग कम्बोडिया शब्द से संबोधित करते हैं, वे भारत के इन पश्चिम प्रान्तनिवासी काम्बोजों से भिन्न हैं। प्राचीन काल में भारतीय ग्रन्थों में काम्बोजों को भारत के पश्चिमी भाग में रहने वाले बताये जाने पर उनका पारस्थान प्रान्त के निवासी होने का निषेध करना संभव नहीं है।

## शकाः ।

अथ शक्ताः समर्था वयमित्यावेदयन्तः केचन शका अभवन्। ते चैते शका उत्तरयुगे स्कीथीया नाम्नोच्यन्ते स्म ।। समर्था एते पूर्वभारतेऽपि चिरमागत्य राज्यं कुर्वाणा विक्रमादित्येनोज्जयिनीमहाराजेन पराजिता अभवन्निति वदन्त्यैहासिकाः शकानामेषां निवासप्रान्तविशेष एव शाकद्वीपः। शकजातीयानां ये ब्राह्मणविद्यावृत्तयस्ते मगा आख्याताः ।।

"एभिर्यजन्ति भूयिष्ठं तस्मिन् (शाक) द्वीपे मगाधिपाः ।।
विद्यावन्तं कुलश्रेष्ठाः शौचाचारसमन्विताः ।।१ ।।

।।इति भविष्यपुराणोक्तेः अ. १४ ।।

पारसीकानां मतप्रवर्तको बाह्लीकजन्मा ऋजिश्वर्षिकन्यागर्भजो जरथुस्त्रोऽपि भगजातीय एवासीत्।

वेदोक्तं विधिमुत्सृज्य यतोऽहं लङ्घितस्त्वया ।।
तस्मान्मगः समुत्पन्नस्तव पुत्रो भविष्यति ।।१ ।।
जरथुस्त्र इति ख्यातो वंशकीर्तिविवर्द्धनः ।
अग्निजात्या मगाः प्रोक्ताः सोमजात्या द्विजातयः ।।२ ।।

(१३९ ।४३ ।४५) (इति भविष्योक्तेः)

एते च जरथुस्त्रमतावलम्बिनो वैदिकधर्मविरोधाद्विपरीतमतानुगामिनो बभूवुः। लिपिरपि जरथुस्त्रेण दक्षिणतो वामानुगा नवीना प्राकल्प्यत। देवाराधनावैपरीत्येनासुराराधना चानने प्रकल्पितेत्याहुः ।

विपर्य्यस्तेन वेदेन मगा गायन्त्यतो मगाः।
ऋग्वेदोऽथ यजुर्वेदः सामवेदस्त्वथर्वणः ॥१ ॥
ब्राह्मणोक्तास्तथा वेदा मगानामपि सुव्रत।
त एव विपरीतास्तु तेषां वेदाः प्रकीर्त्तिताः ॥२ ॥

**इति भविष्यपुराणे (अ. १४) तेषां वैदिकब्राह्मणविरोधिताया उक्तत्वात्। मगानामेषां चत्वारो वेदाः क्रमेण विद विस्परद (विश्वरद) विदाद, आङ्गिरस इत्युच्यन्ते। शाकद्वीपिनोऽप्येते भारतवर्षं पूर्वमागत्य मगधप्रान्तं स्वनाम्ना वासयामासुः।**

## शक

हम शक्तिशाली और समर्थ हैं, ऐसा मानने वाले कुछ लोग शक बन गये। परवर्ती काल में शक लोग स्कीथिया कहे जाने लगे। ऐतिहासिकों का कहना है कि ये समर्थ (शक) लोग प्राचीन भारत में भी आकर चिरकाल तक राज्य करते हुए उज्जयिनी के महाराजा विक्रमादित्य से पराजित हुए। शकों का निवास प्रान्त ही शाकद्वीप कहलाया। शक जाति के जो ब्राह्मण लोग विद्या द्वारा जीविकोपार्जन करते थे वे मग कहलाये। भविष्य पुराण में लिखा है- "इसलिए विद्यावान्, श्रेष्ठकुल के, शुद्ध आचरणों से युक्त मग जाति के ये राजा लोग वहाँ शाकद्वीप में इन शकजातीय ब्राह्मणों के साथ यज्ञ करते थे॥ (भवि.पु. १४)

बाह्लीक देश में जन्मे, पारसीमत के प्रवर्तक ऋजिश्व ऋषि की कन्या से उत्पन्न जरथुस्त्र भी मगजातीय ही था। भविष्य पुराण में लिखा है -

"तुमने वेदोक्त विधि का उल्लंघन करके मेरा अतिक्रमण किया है, अतः तेरा पुत्र मग होगा, जरथुस्त्र उसका नाम होगा, वह वंश की कीर्ति बढ़ाने वाला होगा। अग्नि से उत्पन्न होने वाले मग तथा सोम से उत्पन्न होने वाले द्विज कहलाते हैं। (१-२) (भवि.पु. ।३९/४३/४५)

ये जरथुस्त्र के मतानुयायी वैदिक मत एवं वैदिक धर्म का विरोध करने के कारण विपरीत मत का अनुगमन करने वाले बन गए। जरथुस्त्र द्वारा दाहिनी ओर से बाँई ओर लिखी जाने वाली नवीन लिपि की भी रचना की गई। इसके द्वारा देवताओं की आराधना के विपरीत असुरों की आराधना का विधान किया गया, ऐसा कहा जाता है। जैसा कि भवि.पु. में लिखा है—

"वेदों को उल्टा करके गाते हैं, अतः वे मग कहलाए। ऋग्वेद, यजुर्वेद, सामवेद और अथर्ववेद इत्यादि ब्राह्मणों द्वारा कहे गए वेद मग लोगों द्वारा इसी प्रकार ये ही चारों वेद उल्टे करके बनाए गए, ऐसा प्रसिद्ध है ॥१-२ ॥ (भवि.पु.अ. १४)

इस प्रकार भविष्य पुराण में उन मगों का वैदिक ब्राह्मणों से हुए विरोध का उल्लेख किया जाना स्पष्ट होता है। इन मगों के चार वेद क्रमशः बताये गये हैं — विद, विस्परद (विश्वरद), विदाद, आङ्गिरस। प्राचीन काल में शाकद्वीप के निवासियों ने भी भारत में आकर अपने नाम (मग) से कहे जाने वाले "मगध" प्रान्त को बसाया।

युद्ध में देवताओं के द्वारा मरे गये घायल, वापी में स्नान किये हुए दैत्यों को पुनर्जीवित कर दिया। जो पिछले दिन मारा जाता, वह भी दूसरे दिन देवताओं से युद्ध करने लग जाता था ॥६१ ॥

युद्ध में मरे हुए इन असुरों को वापी में स्नान करके इस प्रकार पुनर्जीवित होते हुए देखकर चिन्ता से व्याकुल चित्त हुए और घबराते हुए देवों ने विष्णु को इस वापी का विध्वंस करने के लिये समर्थ जाना ॥६२ ॥

विष्णु ने अत्यन्त भयानक वृषभ का रूप बनाया और उस मायामयी बावड़ी के पास गये और उस वापी के रक्षक असुरों को मारकर बावड़ी के जल को पूर्णरूप से पीकर नृत्य करते हुए वापस आ गये ॥६३ ॥

वापी के नष्ट हो जाने से जिनका उत्साह और पराक्रम नष्ट हो गया, ऐसे त्रिपुर के समस्त दैत्य वीरों ने वहाँ आयी हुई आपत्ति को देखकर अपनी रक्षा के लिये युद्धभूमि से पलायन कर लिया ॥६४ ॥

भागते हुए वे दैत्य शीघ्रता से अपनी इस त्रिपुरी को महीसागर (मध्य सागर) के ऊपर आकाश में ले गये। और भगवान् शिव का वह द्रुतगामी दिव्य रथ भी अपनी सेना सहित उस त्रिपुरी के पीछ-पीछे चला गया ॥६५ ॥

भगवान् शिव ने शिल्प कला प्रवीण देवताओं के द्वारा निर्मित आश्चर्यपूर्ण और कठिन से कठिन कार्य को करने वाले आकाशस्थित इस श्रेष्ठ रथ पर आरूढ होकर अंतरिक्ष में स्थित त्रिपुरी में युद्ध करते हुए समस्त दैत्यों का संहार कर दिया ॥६६ ॥

अत्यन्त आश्चर्य की बात है कि आकाश में विचरण करती हुई वह नगरी पुष्ययोग में एक ही बाण से भेद दी गई और वह नगरी नष्ट होकर खण्ड खण्ड में गिर गई और भूमध्य सागर में डूब गई ।६७ ॥

तत्पश्चात् अग्नि ने इन असुरों की नगरी के भवनों को जला दिया, और इस नगरी के परकोटे धधकते हुए अंगारों के साथ टूट टूट कर समुद्र में गिर गये ॥६८ ॥

विद्युन्माली शिवगण नन्दी द्वारा मारा गया और उसके निष्प्राण हो जाने पर वे सभी दैत्य विकल हो गए। रक्षा का अन्य कोई उपाय न देखकर उस आपत्ति के निराकरण के लिये वे असुर लोग तार के पास गये ॥६९ ॥

तब उस तार वीर ने अपने समस्त पुत्र पौत्रों के साथ जब तक शक्ति थी तब तक युद्ध किया। परन्तु बाद में अपनी सेना में उत्साह नष्ट होता हुआ देखखर निराश होकर इस युद्ध से दूर हट गया ॥७० ॥

## महीसागरोपरिष्टात् त्रिपुरासुरपलायनम्।

१८— आदायैकं स्वं गृहं सोऽपसृप्तोपक्रान्तोऽभूत् क्वाप्यविज्ञातदेशे।
त्यक्त्वा पूर्वोदक् प्रदेशान् स दैवान्नैर्ऋत्येऽन्तेगान्महीसागरस्य ॥७१ ॥
मिश्रे देशे नीलनद्याः परस्तादन्याप्येका दृश्यते पूस्त्रिपूली।
मन्येऽनैषीद् भग्नशेषामिहैतां तत्स्मृत्यर्थं निर्ममेऽन्यां त्रिपूलीम् ॥७२ ॥
भूमध्यसागरस्य प्राक् तटवद्दक्षिणेऽपि तटे।
एकत्रिंशेऽक्षांशे त्रयोदशे ग्रीनवीचांशे ॥७३ ॥
नष्टा यैषाऽभूत् त्रिपूली पुरीयं तस्याः स्थाने निर्मिताऽन्या त्रिपूली।
इत्येकस्या अद्भुतायास्त्रिपूल्या ध्वंसात् पश्चाद् द्वे त्रिपूल्यावभूताम् ॥७४ ॥
इत्थं शर्वः सर्वमेषां मयानां राष्ट्रं जित्वा संन्यच्छत् सुरेभ्यः।
यः प्रागासीत् सामदेशः स पश्चाद्देवाक्रान्तः सीरियेति श्रुतोऽभूत् ॥

## (१८) महीसागर से त्रिपुरासुर का पलायन

अपने एक घर को लेकर वह त्रिपुरासुर गुप्त रूप से किसी अज्ञात स्थान पर पलायन कर गया। वह पूर्वोत्तर प्रदेशों को छोड़कर दैवयोग से भूमध्य सागर की नैर्ऋत्यदिशा में चला गया ॥७१ ॥

मिश्र देश में नील नद्री के पार एक और भी त्रिपुली नाम की नगरी दिखायी देती है। मैं मानता हूँ कि वे लोग उस भग्नशेष त्रिपुरी को यहाँ लाये थे और उसकी स्मृति में उन्होंने एक दूसरी ही त्रिपुली का निर्माण कर लिया ॥७२ ॥

भूमध्य सागर के पूर्वी किनारे की तरह ही दक्षिणी किनारे पर भी ३१ अक्षांश तथा ग्रीनवीच से १३ अक्षांश पर जो यह त्रिपूली नाम की पुरी नष्ट हुई थी, उसके स्थान पर अन्य त्रिपूली बनादी गई। इस एक विचित्र त्रिपूली के नष्ट हो जाने के पश्चात् दो त्रिपूलियाँ बन गईं ॥७३-७४ ॥

इस प्रकार शिव ने इन समस्त मय दानवों के राष्ट्र को जीतकर देवताओं को सौंप दिया। जो पहले साम देश था वह बाद में पराजित होकर सीरिया के नाम से प्रसिद्ध हुआ।

## तारकासुरसंग्रामः।

१९— तस्मिन् पश्चात्तारकोऽभ्येत्य भूयो युद्धं चक्रे तत्र बालः कुमारः।
क्षात्रे वीर्य्ये पूर्णमात्रेऽभिषिक्तः पूर्णोत्साहोऽयोधयत् तारकं तम् ॥७५ ॥
१ २ ३ ४ ५ ६ ७
जम्भक, जम्भ, कुजम्भा, कुञ्जर, महिषौ, च मेघ, शुम्भौ, च।
८ ९ १०
निमि, कालनेमि, मथनास्तारकसेनासु नायकास्तु दश ॥७६ ॥

१ २ ३ ४ ५ ६
श्रृङ्गी, भृङ्गी, नन्दी, नन्दीशः, शङ्कु कर्ण, रिटी।
७ ८ ९ १०
तुण्डी, शाख, विशाखौ, स्कन्दः स्कन्दस्य नायकाः सैन्ये ॥७७॥
शिशुरप्येष कुमारः स्कन्दोऽभ्यस्कन्दयन्महाप्रबलम्।
तारकमेतं पश्चात् सर्वेऽप्यसुरा दिशो जग्मुः ॥७८॥

## (१९) तारकासुर संग्राम

तत्पश्चात् तारकासुर ने आकर अनेक बार युद्ध किया और जिसको क्षात्र-वीर्य (सेनापतित्व) में पूर्ण रूप से अभिषिक्त किया गया था, ऐसे बालक कार्तिकेय ने अत्यन्त उत्साह से उस तारकासुर को युद्ध में हराया ॥७५॥

तारकासुर की सेना मे जम्भक, जम्भ, कुजम्भा, कुंजर, महिष, मेद्य, शुम्भ, निभि, कालनेमि और मथन नाम के सेनानायक थे ॥७६॥

इसी प्रकार स्कन्द की सेना में श्रृंगी, भृंगी, नन्दी, नन्दीश, शंकु कर्ण, रिटी, तुण्डी, शाख, विशाख और स्कन्द नाम के सेनानायक थे ॥७७॥

बालक होते हुए भी इस कुमार स्कन्द ने अत्यन्त बलशाली उस तारकासुर को उछाल दिया, फिर समस्त असुर भी दिशाओं के अन्त में चले गये ॥७८॥

### असुरराजविध्वंसेऽप्यसुरप्रजाविध्वंसाभावः।

२०— देवा यद्यपि विजयं प्राप्तास्त्रिपुरासुरान् हत्वा।
न तथाप्यसुरविशस्ता इलावृतान्निर्हरन्ति स्म ॥७९॥
असुराक्रमणे देवानासुरधर्मेषु दीक्षयांचक्रुः।
तेन न संप्रति देवा दृश्यन्तेऽभ्रश्यत स्वर्गः ॥८०॥

## (२०) असुरराज का विनाश होने पर भी असुरप्रजा के विनाश का अभाव

यद्यपि त्रिपुरासुरों को मार कर देवताओं ने विजय प्राप्त करली, तथापि अशिष्ट असुर लोगों का इलावृत से उन्मूलन नहीं हुआ ॥७९॥

असुरों के आक्रमण में देवताओं को आसुर धर्म में दीक्षित कर दिया गया, इसीलिये अब स्वर्ग नष्ट हो गया और देवता दिखाई नहीं देते हैं ॥८०॥

### प्रकरणोपसंहारः

२१— इत्थं भूमावन्तरिक्षे दिवि प्राग् देवद्विड्भिः स्थापिता या नगर्य्यः।
तासां भूमावायसी पूरियं भूमध्याद्व्यन्तं भारतं सुव्यनक्ति ॥८१॥
भूमिः पृथ्वी मानुषो लोक उक्तो मर्त्यं लोकं भारतं वर्षमाहुः।

मर्त्ये लोके सा महीसागरप्राक्कूले भूमावायसी पूः प्रसिद्धा ॥८२ ॥
आद्वात्रिंशाक्षांशतोऽर्वाक् प्रदेशः पृथ्वीलोको मर्त्यलोको निरुक्तः ।
सप्तत्रिंशादुत्तरः स्वर्गलोको द्यावाभूम्योरन्तरे त्वन्तरिक्षम् ॥८३ ॥
पृथ्वीलोकं भारतं प्राहुरार्य्या लोकाध्यक्षत्वेन यत्राग्निरासीत् ।
तत्रैवासीदायसी पूस्ततो भूमध्याब्ध्यन्तं भारतं भावयामः ॥८४ ॥

**इति भारतवर्षस्य महीसागरान्तत्वे दशमं प्रमाणम्**

## (२१) प्रकरण का उपसंहार

इस प्रकार भूमि, अंतरिक्ष और स्वर्ग में देवविरोधियों द्वारा पहले जो नगरियाँ स्थापित की गई थीं उनमें से पृथ्वी पर यह आयसीपुरी भारतवर्ष को भूमध्यसागर पर्यन्त सिद्ध करती है ॥८१ ॥

इस भारतवर्ष को भूमि, पृथ्वी, मनुष्य और मर्त्यलोक कहा गया है। इस मर्त्यलोक में वह आयसी नगरी भूमध्य सागर के पूर्वी तट पर प्रसिद्ध थी ॥८२ ॥

बत्तीस अक्षांश (३२ अंश) से पहले का प्रदेश पृथ्वीलोक है और वह मर्त्यलोक कहा गया है। सैंतीस डिग्री उत्तर अक्षांश पर स्वर्गलोक तथा द्युलोक और पृथ्वीलोक के बीच का भाग अन्तरिक्ष लोक है ॥८३ ॥

आर्यों ने भारत को पृथ्वीलोक कहा है, जहाँ का लोकाध्यक्ष अग्नि था और वहीं पर आयसी नगरी थी। इसलिये इस भूमध्य सागर के अंत तक के प्रदेश को भारतवर्ष के रूप में जानते हैं ॥८४ ॥

**भारतवर्ष का भूमध्यसागर पर्यन्त होना दसवाँ प्रमाण समाप्त ॥१० ॥**

## नवानां भारतीयद्वीपानां मध्ये हिन्दुस्तानस्य नवमं कुमारिकाद्वीपत्वाख्यानं भारतवर्षस्य हिन्दुस्तानमात्रपर्य्यवसायित्वाभावे एकादशं प्रमाणम् ॥११ ॥

अस्य भारतवर्षस्य दक्षिणोत्तरतः सहस्रयोजनत्वं भुवनकोशे निर्दिश्यते यथा मात्स्ये (११४)

"योजनानां सहस्रं तु द्वीपोऽयं दक्षिणोत्तरः ।
आयतस्तु कुमारीतो गङ्गायाः प्रवहावधिः" ॥इति ॥

मार्कण्डेयेपि — "योजनानां सहस्रं वै द्वीपोऽयं दक्षिणोत्तरम्" ।इति। अत्र योजनशब्दः क्रोशपरतया नेयः। तथा हि कुमारीशब्दः सिहलद्वीपेऽपि वर्तते, स्कान्दे माहेश्वरखण्डीयकुमारिकाऽऽख्यानात्तथावगमात् सिंहलद्वीपश्चत्वारिंशदधिकसप्तमेंऽशे संनिविष्ट इति सोऽवधिर्दक्षिणो भाव्यः.। गङ्गाप्रवाहारम्भस्तु षट्त्रिंशेऽक्षांशे। तथा च तयोरन्तरं साधिका अष्टाविंशत्यंशाः स्युः। एकैकश्चाक्षांशो मीलतृतीयां- शो-

पेतैरूनसप्ततिमीलैः (६९ $\frac{1}{3}$) सम्पद्यते। तेषामष्टाविंशतिगुणत्वे मीलानां द्विसहस्रप्रायतया तावानस्य दक्षिणोत्तरायामो निष्कृष्यते। मीलशब्दश्चार्द्धक्रोशकल्पे पथि निरूढः। तेन सहस्रक्रो-शता सिद्धा। एतच्च मानं सिन्धोः पश्चिमतोऽपि लोहितसागर-पर्य्यन्तमुपनीयते। मेशापोटेमियाप्रदेशस्यापि षट्त्रिंशदक्षांशप्रायत्वात्। यत्तु ब्राह्मादिषु

"उत्तरेण समुद्रस्य हिमाद्रेश्चैव दक्षिणे।
वर्षं तद् भारतं नाम भारती यत्र संततिः ॥१॥

(ब्राह्मे०१७अ० १ श्लो०)

यच्च मात्स्यादिषु—

"तिर्य्यगूर्ध्वं तु विस्तीर्णः सहस्राणि दशैव तु।"

इति निर्दिश्यते तत्र कालदोषाल्लेखप्रमादात् पाठभ्रमः संभाव्यते। दशसहस्रसंख्यायाः सर्वथा प्रत्यक्षविरुद्धत्वात् पूर्वापरस्वोक्तिविरोधाच्च। अथवा वर्गात्मकक्रोशानामयमुल्लेखः संभाव्यते। तथा च पूर्वपश्चिमतो नवत्यंशतया साधिकत्रिसहस्रक्रोशमितं दक्षिणोत्तरतस्तु साधिकाष्टाविंशत्यंशतया सहस्रक्रोशमितं चेदं भारतवर्षमिति स्थितम्। यदि तु निरक्षदेशाद् व्यवतिष्ठते। तदा षट्त्रिंशदंशतया ततोऽप्यधिकं दक्षिणोत्तरायामः सिध्यतीत्यूह्यम्।

इति एकादशं प्रमाणम् ॥११॥

## (११) भारतवर्ष के जो नौ उपद्वीप बताये गये हैं, उनमें नवाँ द्वीप कुमारी द्वीप है, ऐसा कहने से हिन्दुस्तान मात्र को भारत का पर्याय मानने का खण्डन होना ग्यारहवाँ प्रमाण ॥११॥

भुवनकोश में यह भारतवर्ष दक्षिण से उत्तर एक हजार योजन का है, ऐसा निर्दिष्ट किया गया है। जैसा कि मत्स्य पुराण में लिखा है—

यह द्वीप दक्षिण से उत्तर कन्याकुमारी से गंगा के प्रवाह पर्यन्त एक हजार योजन तक विस्तृत है। (मत्स्य/११४)

इसी प्रकार मार्कण्डेय पुराण में भी वर्णित है-

"यह द्वीप दक्षिण के उत्तर एक हजार योजन तक विस्तृत है।" इस प्रकार यहाँ योजन शब्द कोसपरक (एक कोस बराबर) मानना चाहिये। इसीलिये कुमारी शब्द सिंहल द्वीप में भी उचित ठहरता है, ऐसा स्कन्द पुराण के माहेश्वर खण्ड के कुमारिका आख्यान से स्पष्ट होता है। यह सिंहलद्वीप ७ अंश तथा ४० कला पर स्थित है और यह सीमा दक्षिण दिशा में माननी चाहिये। गंगा के प्रवाह का उद्गम ३६ अंश पर है और इन दोनों के बीच का भाग अट्ठाईस डिग्री अंश से कुछ अधिक है। एक अक्षांश का अन्तर ६९ १/३ मील से बनता है। इस तरह ६९ १/३ मील को २८ से गुणा करने पर प्रायः दो हजार मील उत्तर से दक्षिण की दूरी निर्धारित होती है। मील शब्द आधे कोस की दूरी में रूढ़ हो

गया है। इस प्रकार यह दूरी एक हजार कोस सिद्ध होती है। यह सिंधु के पश्चिम से लाल सागर पर्यन्त भी की जाती है। क्योंकि मेसोपोटिमिया प्रदेश भी लगभग छत्तीस डिग्री अंश पर स्थित है। जैसा कि ब्रह्म पुराण में लिखा है- "उत्तर में हिमालय पर्वत से दक्षिण में समुद्र पर्यन्त जो महाद्वीप है वह भारतवर्ष है, यहाँ के निवासी भारतीय कहलाते हैं।"

और मत्स्य पुराण में - "तिरछा ऊपर की ओर दस हजार (कोस) तक विस्तृत है।" इस प्रकार निर्दिष्ट है, यहाँ कालदोष अथवा लेखन के प्रमाद से पाठभेद हो सकता है। क्योंकि स्वयं की ही पहले और बाद की उक्ति में विरोध होने के कारण दस हजार की संख्या का सर्वथा प्रत्यक्ष रूप से विरोध हो जाता है अथवा यह उल्लेख संभवत: वर्गात्मक कोस के रूप में हो सकता है और इसी प्रकार पूर्व से पश्चिम तक ९० अंश होने के कारण तीन हजार कोस से कुछ अधिक तथा दक्षिण से उत्तर २८ अंश से कुछ अधिक होने के कारण यह भारतवर्ष एक हजार कोस तक स्थित है। यदि निरक्ष देश (० अंश) से निश्चित किया जाता है तो ३६ अंश और उससे भी अधिक दक्षिण से उत्तर तक की दूरी सिद्ध होती है, ऐसा समझना चाहिये।

**ग्यारहवाँ प्रमाण समाप्त ॥११॥**

## तुरुष्कदेशस्य भारतवर्षीयोत्तरसीमात्वाख्यानं द्वादशं प्रमाणम् ॥१२॥

तथाहि—वायव्यादिषु भुवनकोशेष्विदं भारतवर्षं चतु:सीमतयाऽऽख्यातम्।

"पूर्वे किराता यस्यान्ते पश्चिमे यवना: स्थिता:।
आन्ध्रा दक्षिणतो धीरतुरुष्कास्त्वपि चोत्तरे ॥१॥(वायु१३।४।इति)

तुरुष्कस्थानं चेदानीं म्लेच्छभाषायां "तुर्किस्तान—" इति तूरान इति तातार इति तारतार इति टारटरी इति चाख्यायते। तद् राजशासनद्वैविध्यादिदानीं द्विधा विभक्तं भवति। पौरस्त्यं पाश्चात्यं च। तत्र पश्चिमं तुरुष्कं राजशासनाधीनं पौरस्त्यं तु चीनराज्यान्तर्गतमिति भेद:। तयो: पौरस्त्यं पौरस्त्यभारतस्य पाश्चात्यं पाश्चात्यभारतस्योत्तरसीमा भवति। सिन्धुस्थानपारस्थानाभ्यां (हिन्दुस्थान ईरान) द्विधा विभक्तस्य भारतवर्षस्य साम्येनोत्तरतस्तुरुष्कस्थानोपगमात् तस्योत्तरसीमात्वं साधूपपद्यते। तथा च तुर्किस्तानस्य भारतोत्तरसीमात्वाख्यानात् सिन्धुनदपश्चिमानाम् अफगानिस्तान, ईराक, साम इत्यादीनामपि देशानां भारतसीमान्तर्भुक्तत्वमुपपद्यते। तथा चात्र श्लोका:—

स्वर्गोन्तरिक्षं पृथिवीतिभेदाद् द्वीपस्त्रिधासीदिह यो विभक्त:।
स एष संप्रत्यपि दैवयोगात् म्लेच्छैर्विभक्तोऽस्ति पुनस्त्रिधैव ॥१॥
उदक्समुद्रानुगतोऽस्ति रूस: पूर्वापरौ तोयनिधी वगाह्य।
तद्दक्षिणे भाति तुरुष्कदेश: पूर्वापरौ तोयनिधी वगाह्य ॥२॥
तद्दक्षिणे दक्षिणसागरेणानु भाषितं भारतवर्षमेतत्।

पूर्वापरौ तोयनिधी वगाह्य ध्रुवं भवेदन्यविभागसाम्यात् ।।३ ।।
रूसो द्विधास्ति द्विविधं तुरुष्कस्थानं तथा भारतवर्षमेतत् ।
सिन्धुस्थपारस्थविभागतोऽस्तु द्विधा तथाऽप्यस्ति तदेकवर्षम् ।।४ ।।

इति द्वादशं प्रमाणम् ।।१२ ।।

## (१२) तुरुष्क देश को भारतवर्ष की उत्तरी सीमा कहना बारहवाँ प्रमाण

जैसा कि वायुपुराण इत्यादि में वर्णित भुवनकोशों में भारतवर्ष की चारों सीमाओं का वर्णन किया गया है—

जिसकी सीमा में पूर्व में किरात, पश्चिम में यवन, दक्षिण में आंध्र और उत्तर में वीर तुरुष्क निवास करते हैं ।।१ ।।(वायु. १३/४)

तुरुष्क शब्द से आजकल म्लेच्छ भाषा में तुर्किस्तान, तूरान, तातार, तारतर, टारटरी के नाम से भी कहा जाता है। यह आजकल राज्यशासन के भेद से पूर्व और पश्चिम दो भागों में विभक्त है। इनमें पश्चिम में तुरुष्क राजशासन के अधीन और पूर्वी तुरुष्क चीन राज्य के अंतर्गत हैं, इस प्रकार भेद किया गया है। इनमें से पूर्वी तुरुष्क पूर्वी भारत की तथा पश्चिमी तुरुष्क पश्चिमी भारत की उत्तरी सीमा है। सिंधुस्थान और पारस्थान (हिन्दुस्तान और ईरान) पूर्वोक्त रूप से दो भागों में विभक्त भारतवर्ष की समानता से पूर्वी और पाश्चात्य तुर्किस्तान भारतवर्ष की उत्तरी सीमा सिद्ध होती है और तुर्किस्तान को भारत की उत्तरी सीमा कहने से सिंधु नदी के पश्चिम में स्थित अफगानिस्तान, ईराक, साम इत्यादि देशों को भी भारतवर्ष की सीमा के अन्तर्गत मानना उचित है। इस संबंध में यहाँ कुछ श्लोक प्रस्तुत हैं:—

"जो यह द्वीप स्वर्ग, अन्तरिक्ष और पृथ्वी (पूर्वोक्त भौम- त्रिलोकीप्रसंग के अनुसार) भेद से तीन भागों में विभक्त था, वही वर्तमान में भी संयोगवश म्लेच्छों के द्वारा पुनः तीन भागों में विभक्त कर दिया गया है ।।१ ।।

पूर्व और पश्चिम में समुद्र की सीमा का स्पर्श करता हुआ उत्तर समुद्र के किनारे पर रूस देश है और इसके दक्षिण में पूर्व और पश्चिम समुद्र का स्पर्श करता हुआ तुरुष्क देश है ।।२ ।।

और इस तुरुष्क देश के दक्षिण में दक्षिण समुद्र के किनारे पर स्थित पूर्वोक्त प्रकार से वर्णित यह भारत देश है, जो अन्य प्रकार से वर्णित यह भारत देश है, जो अन्य प्रकार से विभाजन की समानता के कारण निश्चय ही पूर्व और पश्चिम समुद्र को स्पर्श करता है ।।३ ।।

जिस प्रकार रूस दो भागों में विभक्त है और तुरुष्क देश भी दो भागों में विभक्त है, उसी प्रकार यह भारतवर्ष भी सिन्धुस्थान और पारस्थान रूप से दो भागों में विभक्त है, फिर भी यह सम्पूर्ण द्वीप एक ही भारतवर्ष है ।।४ ।।

**बारहवाँ प्रमाण समाप्त ।।१२ ।।**

## अपि च पश्चिमसमुद्रस्य भारतवर्षीयपश्चिमसीमात्वाख्यानं त्रयोदशं प्रमाणम् ॥१३॥

तथा हि इदं भारतवर्षं मार्कण्डेयादिभुवनकोशेषु दिक्त्रये समुद्रैः संवृतमाख्यायते।

"एतत्तु भारतं वर्षं चतुःसंस्थानसंस्थितम्।
दक्षिणापरतो ह्यस्य पूर्वेण च महोदधिः ॥१॥
हिमवानुत्तरेणास्य कार्मुकस्य यथागुणः।"

(मार्क.५४.अ.) इति ॥

तत्र नायं नर्म्मदासंगमनीयः सह्याद्रिपश्चिमस्थः समुद्रो भारतवर्षस्य पश्चिमसीमा भवितुमर्हति। तस्य दक्षिणापथपश्चिमत्वेऽपि आर्य्यावर्तसाधारणभारतापेक्षया पश्चिमत्वाभावात् ॥ मनुस्मृत्यादिषु त्वार्याणां प्रामाणिकशास्त्रेषु पूर्वतः पश्चिमतश्चार्य्यावर्तस्य समुद्रः सीमात्वेनाख्यायते—

"आसमुद्रात्तु वै पूर्वादासमुद्राच्च पश्चिमात्।
तयोरेवान्तरं गिर्य्योरार्य्यावर्तं विदुर्बुधाः ॥१॥(मनु.२।२२।) इति ॥

एतेन विन्ध्यपर्वतादुत्तरवर्तिनोऽस्यार्यावर्तस्य पश्चिमतोऽवश्यं समुद्रेण भवितव्यम्। तस्मात् पारस्याखातसमुद्रो लोहितसमुद्रो भूमध्यसमुद्रश्चास्य पश्चिमेऽवधिः साधीयान् संभाव्यते ॥

इति त्रयोदशं प्रमाणम् ॥१३॥

## (१३) पश्चिमी समुद्र को भारतवर्ष की पश्चिमी सीमा कहना तेरहवाँ प्रमाण

जैसा कि मार्कण्डेय इत्यादि पुराणों में उक्त भुवनकोशों में यह भारतवर्ष तीनों दिशाओं में समुद्र से घिरा हुआ कहा गया है।

यह भारतवर्ष चारों सीमाओं से युक्त हैं, इसके दक्षिण पश्चिम और पूर्व में महासागर है तथा उत्तर में धनुष की प्रत्यंचा के समान हिमालय पर्वत स्थित है। (मार्क.५४ अ.)

नर्मदा नदी का संगमस्थल और सह्याद्रि पर्वत के पश्चिम में स्थित समुद्र भारत वर्ष की पश्चिमी सीमा नहीं हो सकती है। क्योंकि यह समुद्र दक्षिणापथ (दक्षिण भारत) के पश्चिम में स्थित होते हुए भी आर्यावर्त की दृष्टि से पश्चिम में नहीं है। आर्यो के प्रामाणिक शास्त्र मनुस्मृति इत्यादि ग्रन्थों में आर्यावर्त के पूर्व और पश्चिम में समुद्र को सीमा के रूप में बताया गया है —

"विद्वानों ने पूर्व समुद्र से लेकर पश्चिम समुद्र पर्यन्त और इन दोनों पर्वतों के मध्य भाग को आर्यावर्त कहा है ॥१॥ (मनु. २/२२)

इस कथन से विंध्याचल पर्वत के उत्तर में स्थित आर्यावर्त के पश्चिम की ओर भी अवश्य ही समुद्र होना चाहिये। इससे मानना चाहिये कि पारस की खाड़ी का समुद्र, लालसागर और भूमध्य सागर तक भारतवर्ष की पश्चिमी सीमा होना संभव है।

तेरहवाँ प्रमाण समाप्त ॥१३॥

## चतुर्दशं प्रमाणम् ॥१४॥

ईरान–विलोचिस्तानाफगानस्तानादिशब्दानां शासनक्रांतिभेदमूलकत्वेनाव्यवस्थित्वात् तेषां गणितव्यवस्थितभारतवर्षशब्दप्रयोगप्रतिरोधकत्वासंभवश्चतुर्दशं प्रमाणम् ॥१४॥

इह हि भुवनकोशे देशविभागाः द्विविधा निरूप्यन्ते—राज्यशासनव्यवस्थिताः भौगोलिकगणितव्यवस्थिताश्च। तत्र शासनकृतविभागा अनित्या अव्यवस्थिताः काले काले विभिद्यन्ते। ये देशा येन राज्ञा जीयन्ते, ते तदायत्तनामरूपाः पूर्वापेक्षया क्वचिदन्येन नाम्ना निर्दिश्यन्ते। अत एव तु भारतीयानामिमे गान्धारदेशा अफगानिस्तानशब्देन, हिङ्गला देशाः प्रथमं सुगदियानाम्ना, पश्चाद्‌बिलोचिस्ताननाम्ना व्यवह्रियन्ते स्म। पारस्थानमेव पर्सियाशब्देन, ईरानब्देन कैलडियाशब्देन असीरियाशब्देन ईराकशब्देन मेसोपाटेमियाशब्देन च काले कालेऽन्यान्यप्रान्तविभागैर्व्यवह्रियते स्म। वर्म्मात्र देशः पुरायुगे भारतवर्षीयदेशो मध्ययुगे हिन्दुस्तानात् पृथक् परिगणित आसीत्। स एव पुनरिदानी युगे हिन्दुस्तानान्तर्गतो व्यवतिष्ठते। एतन्नियमानुरोधेनैवेदं पश्चिमभारतवर्षमिदानीं युगे भिन्नशासनहेतो राजपुरुषीयव्यवहारविशेषानुरोधाद् भारतवर्षनामतो विहीनमभूत्। हिन्दुस्तानमात्रे चेदानीं भारतवर्षशब्दः संकुचितोऽभूत्। किन्तु वस्तुगत्या नैतौ भारतवर्षशब्दहिन्दुस्तानशब्दो पर्य्यायवाचिनौ वर्तते। भारतवर्षीयप्राचीनभुवनकोशानुसारेण राजशासनव्यवस्थामनपेक्ष्य स्वातन्त्र्येण भौगोलिकगणितव्यवस्थया प्रशान्तसमुद्रमारभ्य लोहितसमुद्रभूमध्यसमुद्रपर्य्यन्तप्रदेशे भारतवर्षशब्दस्य नियतत्वात्। अथैतस्य सिन्धुस्थानपारस्थानाभ्यां द्वेधा विभक्तस्या सिन्धुस्थानस्य हिन्दुस्तानशब्देन व्यवह्रियमाणतया तस्य भारतवर्षीयप्रान्तविशेषत्वाच्च। नित्यं व्यवस्थितं चेदं संज्ञाकरणं राजशासनानामन्यान्यत्वेऽपि न कदाचिद्विचलितं भवति। अत एव पश्चिमभारतस्य अफगानिस्तान, खुरासान ईरान—इत्यादेर्हिन्दुस्तानत्वाभावेऽपि भारतवर्षत्वं नोपहन्यते। भारतवर्षस्य भूवृत्तपादरूपतया प्राचीनार्य्यशास्त्रे सिद्धान्तितत्वादिति सर्वं सुस्थम्॥

इति चतुर्दशं प्रमाणम्॥१४॥

इत्थं चामीभिश्चतुर्दशभिः प्रमाणैः पूर्वस्यां दिशि चीनसमुद्रमारभ्य पश्चिमतो लोहितसमुद्रपर्य्यन्तं भारतवर्षस्य सीमा भवतीति सिद्धम्॥

इति भारतपरिचये सीमाप्रसङ्गः समाप्ताः ॥३॥

## (१४) चौदहवाँ प्रमाण

ईरान, बिलूचिस्तान, अफगानिस्तान इत्यादि शब्द शासनक्रांति के परिवर्तन के आधार पर होने के कारण अव्यवस्थित हैं। अतः ये शब्द गणित से व्यवस्थित भारतवर्ष शब्द के प्रयोग का खंडन नहीं कर सकते हैं।

भारतवर्ष के भुवनकोश में दो प्रकार से देश का विभाजन होना निरूपित किया गया है — एक तो राज्यशासन की व्यवस्था के आधार पर, और दूसरा भौगोलिक गणित की व्यवस्था के आधार पर। इनमें से शासन के आधार पर किये गये विभाजन अनित्य, अव्यवस्थित और समय समय पर बदलते रहते हैं। जो देश जिस राजा के द्वारा जीत लिये जाते हैं, वे देश उसी राजा के अनुरूप और पहले की अपेक्षा कुछ अन्य ही नाम से निर्दिष्ट किये जाते हैं। अत एव भारत के ही ये गान्धार देश अफगानिस्तान शब्द से, हिंगला देश पहले सुगदिया नाम से तथा बाद में बिलूचिस्तान नाम से कहे जाते थे।

समय समय पर पारस्थान को ही उसके प्रान्तों के नाम पर्सिया, ईरान, कैलडिया, असीरिया, ईराक और मेसोपोटेमिया शब्दों से भी कहा जाता था। बर्मा देश प्राचीनकाल में भारतवर्ष का ही एक प्रदेश था, जो बाद में मध्ययुग में हिन्दुस्तान से अलग माना जाने लगा, फिर वही बर्मा देश वर्तमान युग में सम्मिलित हो गया (पुस्तकरचना के समय)। इसी व्यवस्था के अनुसार ही यह पश्चिमी भारतवर्ष शासनपरिवर्तन के कारण राज्यशासकों के व्यवहार विशेष के आग्रह से वर्तमान में भारतवर्ष नाम से रहित हो गया है। आज हिन्दुस्तान मात्र में ही भारतवर्ष शब्द संकुचित हो गया है। किन्तु वस्तुतः भारतवर्ष और हिन्दुस्तान शब्द दोनों परस्पर पर्यायवाची नहीं है, अपितु भारतीय भुवनकोश के अनुसार राज्यशासन-व्यवस्था की अपेक्षा न करके स्वतंत्रतापूर्वक भौगोलिक गणित व्यवस्था के आधार पर प्रशान्त महासागर से लेकर लाल सागर और भूमध्य सागर पर्यन्त प्रदेश का भारतवर्ष शब्द से प्रयुक्त होना निश्चित होता है। अतः भारत का सिन्धुस्थान और पारस्थान रूप से दो भागों में विभक्त होने के आधार पर सिन्धुस्थान को ही हिन्दुस्तान शब्द से व्यवहार किये जाने के कारण सिद्ध होता है कि (हिन्दुस्तान) भारतवर्ष का एक प्रान्त विशेष है। भारतवर्ष नामकरण नित्य और व्यवस्थित है, जो राज्यशासनों के समय समय पर बदलते रहने पर भी कभी बदला नहीं गया है। अतएव पश्चिमी भारत के अफगानिस्तान, खुरासान, ईरान, इत्यादि का हिन्दुस्तान न होने पर भी भारतवर्ष होना समाप्त नहीं होता है। प्राचीन आर्यशास्त्रों में सिद्धान्त रूप से भारतवर्ष का पृथ्वीमण्डल के चतुर्थांश भाग में होना पूर्ण रूप से सिद्ध होता है।

**चौदहवाँ प्रमाण समाप्त ॥१४॥**

इस प्रकार इन चौदह प्रमाणों से भारतवर्ष की सीमा पूर्व दिशा में चीन समुद्र से लेकर पश्चिम में लाल समुद्र पर्यन्त सिद्ध होती है।

**भारतपरिचयखण्ड में सीमा-प्रसंग समाप्त**

# उपद्वीपप्रसङ्गः ॥४॥

## जम्बूद्वीपस्याष्टोपद्वीपभेदाः ।

ननु ब्राह्म—मार्कण्डेय—मात्स्य—स्कान्दादिषु भुवनकोशेष्विन्द्रद्वीपादयो नवोपद्वीपा निरूप्यन्ते। भागवतादिषु तु केषुचिद् भुवनकोशेषु ततोऽन्ये स्वर्णप्रस्थादयोऽष्टोपद्वीपा उच्यन्ते। तथा च विरोधः प्राप्नोति—इति चेन्न। इन्द्रद्वीपादीनां भारतीयोपद्वीपत्वेन, स्वर्णप्रस्थादीनां तु जम्बूद्वीपोपद्वीपत्वेनाख्यानाद् विरोधाप्रसक्तेः। तथा चोक्तं भागवते—"जम्बूद्वीपस्य च राजन्नुपद्वीपानष्टौ हैक उपदिशन्ति। तद्यथा—स्वर्णप्रस्थश्चन्द्रशुक्ल आवर्तनो नारमणको मन्दरहरिणः पाञ्चजन्यः सिंहलो लङ्केति ॥, (५/१९) एषां प्रचलितदेशभाषायां नामानि यथा।

(१) आवर्तनः —वर्तानिया–(इंगलैण्ड–स्काटलैण्ड–आयर्लेण्डादयः)

(अक्षांश उ० ५१-५८—उज्जयिन्याः पश्चिमदेशान्तरे७५—८५)

(२) नारमणक=नारवे।स्वेदन।(उ०अक्षांशे ५९–७०, उज्ज०देशा.पश्चि.४५–७०)

१ २

(३) मन्दर =हरिणो-नोविया-जेमूल्या (उ०अ०७१-७८, उ०प०दे० ६।२३)

१ २ ३ ४ ५

(४) पाञ्चजन्यः–जापान-द्वीपसंघः ॥ (सांघालियन-जेसो-नीफन-सिकोक-क्यूसू)

(उ०अ०५५-३०, -उ०पू०दे०४०)

इति पञ्चभिर्जनैस्तस्योपपन्नत्वात् पाञ्चजन्यत्वम् ॥

(५) चन्द्रशुक्लः =फीलीपायिन-द्वीपसंघः। चन्द्राय गन्धर्वराजाय पणिभिरुपायनीकृतत्वात् पण्युपायनस्य तस्य चन्द्रशुक्लत्वम् ॥

(उ०अ०१०-१८, -उ०पू०दे०३०)

१ २ ३ ४ ५

(६) स्वर्णप्रस्थः =वोर्नियो-जावाद्वीपसंघः-सुमात्रा, सिंगापुर, पीनाङ्ग,

(द०अ०१०-उ०अ०१६उ०पू०दे०१०-२५)

६ ७

निकोवर, ऐन्दमन। इत्येतेषां भारतीयोपद्वीपसंघानां स्वर्णप्राचुर्योपलब्ध्या स्वर्णप्रस्थत्वम् ॥

(७) सिंहलद्वीपः =सीलोन, इति नाम्ना प्रसिद्धः ॥
उ॰अ॰६-८, -उ॰पू॰दे॰५

(८) लङ्काद्वीपः =लक्केदीब, मालदीब-इतिद्वेधा विभक्तो नष्टप्रायः ॥
उ॰अ॰१-१२, -उ॰प॰दे॰५

इदं तावद् भूगोलं पूर्वीयपश्चिमीयगोलार्द्धाभ्यां द्वेधा विभज्यते। तत्र पूर्वीयगोलार्द्धस्य जम्बूद्वीप इति संज्ञा क्रियते। अस्ति हि पूर्वगोलार्द्धस्य मध्यप्रदेशे हिरण्यश्रृङ्गपर्वतान्निर्गत्य पश्चिमदिशि प्रवहन्ती अरालसमुद्रे प्रविशन्ती काचिन्नदी या वेदे यक्षुरित्याम्नाता। तदपभ्रंशेन च म्लेच्छभाषयाम्। 'अक्सस्'—इति साख्यायते ॥ सैव पश्चात् संस्कृतभाषायां 'जम्बू'—इत्याख्यायत। तदपभ्रंशेन च म्लेच्छभाषायाम्—'अमू'—इत्याख्यायते। तादृशजम्बूनद्युपलक्षितः पामीरप्रदेश एवासीत् पुरात्वे पूर्वीयगोलार्द्धे प्रधानरूपः समृद्धतमः केन्द्रभूतः प्रदेशः। तत्रत्यानां देवयुगीयानामिह गोलार्द्धे एकतन्त्रं स्वाराज्यमासीदिति कृत्वा पूर्वीयगोलार्द्धं जम्बूद्वीपशब्देन प्रसिद्धमासीत् ॥ वर्तमानयुगप्रसिद्धौ एशिया-यूरोप-देशौ सोपद्वीपौ तस्मिन् पूर्वीयगोलार्द्धे संनिविशेते। अफरीकाराष्ट्रेलिययोरप्यत्रैव संनिवेशं केचिदिच्छन्ति। तदसत्। सकोत्रा—मदगास्कार—प्रभृतीनामफरीकोपद्वीपानां पापुआप्रभृतीनामाष्ट्रेलियोपद्वीपानां च जम्बूद्वीपोपद्वीपतया भागवतादिष्वपरिगणितत्वात्। तस्मादफरीकाष्ट्रेलिययोर्जम्बूद्वीपाद्बहिष्ट्वमासुरद्वीपत्वं च प्रत्येतव्यम्। जम्बूद्वीपस्त्वयं दैवतो द्वीपः ॥ तस्यैतस्य महाद्वीपस्यैते आवर्तनादयोऽष्टावुपद्वीपा भवन्तीत्यन्यदेतत्। भारतवर्षस्य तु प्रातिस्विकतया पूर्वोक्ता इन्द्रद्युम्नादयो नवैवोपद्वीपा इष्यन्ते ॥ तेषां भारतसागरान्तर्वर्तित्वात्। अत एवैतद् भारतीयोपद्वीपसंघो वर्तमानयुगेऽपि म्लेच्छभाषायाम्—'इण्डियनआर्किपैलैगो—' इत्याख्यायते ॥. . . ॥

इति भारतपरिचये उपद्वीपप्रसङ्गः समाप्तः ॥४॥

# उपद्वीप-प्रसंग ॥४॥

## जम्बूद्वीप के आठ उपद्वीप

ब्रह्म, मार्कण्डेय, मत्स्य और स्कन्द इत्यादि पुराणों में सम्पूर्ण भुवनकोश में इन्द्र-द्वीपादि नौ उपद्वीपों का वर्णन किया गया है। परन्तु भागवतादि महापुराणों में भुवनकोश के वर्णनों में उनसे भिन्न ही स्वर्ण-प्रस्थादि आठ उपद्वीप बताये गये हैं। इस प्रकार यदि विरोध प्रतीत होता है, तो ऐसी बात नहीं है। क्योंकि इन्द्रद्वीपादि को भारतीय उपद्वीप तथा स्वर्णप्रस्थादि को जम्बूद्वीप के उपद्वीप मानने पर विरोध का निराकारण हो जाता है। भागवत महापुराण में कहा गया है — हे राजन्! जम्बूद्वीप के आठ उपद्वीप कहे गये हैं। वे उपद्वीप हैं — स्वर्ण-प्रस्थ, चन्द्रशुक्ल, आवर्तन, नारमणक, मन्दरहरिण, पांचजन्य, सिंहल और लंका।"(५/१९)

इनके प्रचलित देशभाषाओं में नाम इस प्रकार हैं—

(१) **आवर्तन** : वर्तानिया (इंगलैण्ड—स्कॉटलैण्ड—आर्यलैण्ड इत्यादि उपद्वीपसमूह)

(अक्षांश उत्तर ५१-५८ उज्जयिनी से पश्चिमी देशान्तर पर ७५-८५)

(२) **नारमणक** : नार्वे। स्वेदन अथवा स्वीडन।

(उत्तर अक्षांश ५९-७० उज्जयिनी से, देशान्तर पश्चिमी में ४५-७०)

(३) **मन्दर-हरिण** : नोविया-जेम्ल्या (उ.अ. ७१-७८, उत्तर प. दे. - ६/२३)

(४) **पांचजन्य** : जापान द्वीपसमूह। (सांघालिया—जेसो—नीफन—सिकोक—क्यूसू)

(उ.अ. ५५-३०, - उ.पू. दे. -४०) पांच व्यक्तियों द्वारा खोजे जाने के कारण यह द्वीप पांचजन्य कहलाया।

(५) **चन्द्रशुक्ल** : फिलीपायिन द्वीपसमूह। गन्धर्वराज चन्द्र को पणियों द्वारा भेट दिये जाने के कारण, पणियों के द्वारा प्रदत्त उपहार के कारण उसका नाम चन्द्रशुक्ल रखा गया। (उ.अ.१०-१८, - उ.पू.दे. ३०)

(६) **स्वर्णप्रस्थ** : वोर्नियो-जावाद्वीप-समूह-सुमात्रा, सिंगापुर, पीनाङ्ग।

(द.अ. १०-उ.अ. १६, उ.पू.दे. १०-२५)। निकोवर (निकोबार), ऐन्द्रामन (अण्डमान)। इन भारतीय उपद्वीपसमूहों में स्वर्ण की प्रचुर मात्रा में उपलब्धि होने के कारण इनका नाम स्वर्ण-प्रस्थ रखा गया॥

(७) **सिंहल द्वीप** : सीलोन नाम से प्रसिद्ध है। (उ.अ.६-८, उ.पू.दे. -५)

(८) **लंकाद्वीप** : लक्केदीव (लक्षद्वीप), मालदीव दो भागो में विभक्त होकर लगभग नष्ट से हो गये हैं। (उ.अ. १-१२, उ.प.दे. ५)

यह भूगोल (पृथ्वी का मानचित्र) पूर्वीय और पश्चिमी गोलार्द्ध रूप से दो भागों में विभक्त है, इसी पूर्वी गोलार्द्ध को जम्बूद्वीप कहा गया है। पूर्वी गोलार्द्ध के मध्यभाग में हिरण्य-श्रृंग पर्वत से निकल कर पश्चिम दिशा की ओर बहती हुई अराल समुद्र में प्रवेश करने वाली किसी नदी को वेद में "यक्ष" नाम से कहा गया है। इसी "यक्ष" नाम की नदी को अनार्य भाषा में इसके अपभ्रंश रूप "अकसस्" नाम से कहा गया है। वही "अकसस्" नदी संस्कृत भाषा में "जम्बू" नाम से कही गई है। यह जम्बू शब्द अपभ्रंश रूप से अनार्य भाषा में "अमू" कहा जाता है। ऐसा यह जम्बू नदी के नाम से पहचाना जाने वाला पामीर प्रदेश प्राचीन पूर्वी गोलार्द्ध में सर्वश्रेष्ठ समृद्ध तथा महत्त्वपूर्ण प्रदेश था। वहाँ पर निवास करने वाले देवयुगीय पुरुषों का इस गोलार्द्ध में पूर्ण स्वराज था। इसीलिए पूर्वी गोलार्द्ध "जम्बूद्वीप" नाम से प्रसिद्ध था। वर्तमान युग में एशिया और यूरोप से प्रसिद्ध देश भी अपने उपद्वीपों सहित उसी पूर्वीय गोलार्द्ध में समाविष्ट हैं। कुछ लोग अफ्रीका और आस्ट्रेलिया का भी इसी में समावेश करना चाहते हैं। परन्तु यह अनुचित है। क्योंकि भागवत इत्यादि महापुराणों में सकोत्रा और मदगास्कर इत्यादि अफ्रीका के उपद्वीपों की तथा पपुआ इत्यादि

ऑस्ट्रेलिया के उपद्वीपों की जम्बूद्वीप के उपद्वीपों में गणना नहीं की गई है। इसलिए अफरीका (अफ्रीका) और ऑस्ट्रेलिया को जम्बूद्वीप से अलग आसुरद्वीपों के रूप में मानना चाहिये। क्योंकि यह जम्बूद्वीप तो दैवीयद्वीप है। इस जम्बूद्वीप महाद्वीप के आवर्तन इत्यादि जो आठ उपद्वीप कहे गये हैं, वे अन्य ही हैं। भारतवर्ष के तो स्वयं के विशिष्ट होने के कारण पूर्वोक्त इन्द्रद्युम्न इत्यादि नौ उपद्वीप ही कहे गये हैं। क्योंकि ये सभी उपद्वीप भारत समुद्र (हिन्द-महासागर) के अन्तर्गत ही हैं। इसलिए ये भारतीय उपद्वीप समूह वर्तमान समय में भी अनार्य भाषा (अंग्रेजी) में "इण्डियन आर्किपैलैगो" नाम से कहे जाते हैं॥

**भारतपरिचयखण्ड में उपद्वीप-प्रसंग समाप्त हुआ॥४॥**


जम्बूद्वीप के आठ उपद्वीप
W 0° E 30° 60° 90° 120° 150°
N
75°
66½°
N
S
45°
S
W 0° E 30 60 90 120° 180°
मन्दर-हरिण
नारमणक
आवर्तन
पाञ्चजन्य
चन्द्रशुक्ल
स्वर्णप्रस्थ
लंकाद्वीप
सिंहलद्वीप

# लङ्काप्रसङ्गः ॥५ ॥

## द्वादशविप्रतिपत्तिभिः सिंहलद्वीपस्य लङ्कात्वभ्रमखण्डनम्।

(१) अत्रेदमपरं बोध्यम्। अद्यत्वे केचन विद्वांसः सिंहलमेव द्वीपं लङ्कामाचक्षते, तन्नितान्तं भ्रान्तमिति ब्रूमः ॥ लङ्कादयो हि शब्दा भारतवर्षीयग्रन्थोपलब्धसंज्ञाः सन्तीत्येषां भारतवर्षीयग्रन्थाधारेणैव व्यवस्थावकल्पते न तु स्वकपोलकल्पनया यथेच्छं प्रतिपत्तिः ॥ अन्यथा प्रमादप्रलपितत्वापत्तेः ॥ भारतवर्षीयग्रन्थेषु च सिंहलादन्या लङ्कोपदिश्यते ॥ "अथ दक्षिणेन लङ्का-कालाजिन-सौरिकीर्ण-तालिकटाः ॥ काञ्ची मरुचीपट्टनचेर्य्यार्य्यक-सिंहला ऋषभा"—इति बृहत्संहितायां (१४) कूर्मविभागे तयोः पृथकृत्वेन निर्देशात्। यदि सिंहलद्वीप एव लङ्काऽभविष्यत्, तदा भागवतादिषु सिंहलस्य सप्तमत्वमाख्याय लङ्काया अष्टमत्वं नोपदिष्टमभविष्यत् ॥ तस्मादन्या लङ्का अन्यश्चायं सिंहलद्वीप इति सिद्धं भवति ॥

इति प्रथमा विप्रतिपत्तिः ॥१ ॥

# लङ्का-प्रसंग ॥५ ॥

## सिंहलद्वीप को लङ्काद्वीप मानने की भ्रान्त धारणा का बारह आपत्तियों द्वारा खण्डन किया जाता है—

(१) इस विषय में इस प्रकार समझना चाहिये—

आजकल कुछ विद्वान् सिंहलद्वीप को ही लंकाद्वीप मानते हैं, परन्तु हम कहते हैं कि यह पूर्णतः एक भ्रान्त धारणा है। लंका इत्यादि शब्द भारतीय ग्रन्थों में प्राप्त संज्ञा शब्द हैं, जिनका समाधान भी भारतीय ग्रन्थों के आधार पर ही संभव है, अपनी इच्छा से कपोल-कल्पना के आधार पर किया गया समाधान स्वीकार करने योग्य नहीं हो सकता है। अन्यथा प्रमादवश किया गया प्रलाप ही माना जायेगा। भारतवर्षीय ग्रन्थों में लंका को सिंहलद्वीप से भिन्न बताया गया है। "बृहत्संहिता" के कूर्मविभाग में लिखा है — "दक्षिण दिशा में लंका, कालाजिन, सौरिकर्ण, तालिकटा, कांची, मरुची, पट्टनचैरी, आर्यक, सिंहल और ऋषभा।" इस प्रकार लंका और सिंहल को अलग अलग बताया गया है। यदि सिंहलद्वीप ही लंका द्वीप रहा होता तो भागवतादि महापुराणों में सिंहलद्वीप को सातवाँ द्वीप बताकर लंका को आठवां द्वीप नहीं बताया जाता। इसलिए सिंहलद्वीप तथा लंकाद्वीप भिन्न भिन्न ही हैं, ऐसा सिद्ध होता है।

यह पहली असंगति समाप्त हुई ॥१ ॥

(२) अपि च भारतवर्षीयार्य्यग्रन्थेषु लङ्केति निरक्षदेशस्य संज्ञा क्रियते। सिंहलद्वीपस्तूत्तरतश्चत्वारिंशत्कलोपेते सप्तमेऽक्षांशे (७।४०) संनिविष्ट इति साक्षदेशत्वान्न कदाचिदपि लङ्का भवितुमर्हतीति॥

इति द्वितीया विप्रतिपत्तिः॥२॥

(२) भारतीय आर्यग्रन्थों में लंका को निरक्ष (अक्षांश-रहित अर्थात् ० डिग्री अंश) देश नाम से कहा गया है। परन्तु सिंहलद्वीप सात अंश (७ डिग्री) और चालीस कला (४०[१]) उत्तर अक्षांश पर स्थित है। इस प्रकार सिंहल द्वीप साक्ष्य (अक्षांश सहित) देश होने के कारण किसी भी प्रकार से निरक्ष देश लंका नहीं माना जा सकता है।

दूसरी असंगति समाप्त हुई॥२॥

(३) अपि च यथेदानीं युगे पाश्चात्यैः स्वदेशे ग्रीनवीचनगरे भूमेर्मध्यरेखा प्राकल्प्यत, तथैवेह पुरायुगे भारतवर्षे उज्जयिन्यां नगर्यां सा मध्यरेखा प्रकल्पितासीत्॥सा च लङ्कोज्जयिनीमेरुस्पर्शिनी व्याख्यायते॥

"यल्लङ्कोज्जयिनीपुरोपरि कुरुक्षेत्रादिदेशान् स्पृशत्॥

सूत्रं मेरुगतं बुधैर्निगदिता सा मध्यरेखा भुवः"—

इत्यभियुक्तोक्तेः। सेयमुज्जयिनी ग्रीनवीचतः त्रिचत्वारिंशत्कलोपेतपञ्चसप्ततिमिते (७५।४३) पूर्वदेशान्तरे प्रारभ्यते, तेन तयोर्मध्यरेखयोः षट्सप्ततिरन्तरांशाः (७६) सिध्यन्ति॥ सीलोननाम्ना प्रसिद्धः सिंहलद्वीपस्तु ग्रीनवीचतः पञ्चाशत्कलोपेताशीत्यंशमिते (८०।५०) पूर्वदेशान्तरे संनिविष्ट इत्येकाशीतिरन्तरांशा भवन्ति॥ तथा च पञ्चभिरंशैरयं सिंहलद्वीपो भवत्युज्जयिन्यपेक्षया पूर्वदिक्स्थ इति सिंहलारब्धरेखाया उज्जयिनीस्पर्शो नतरां कदापि संभाव्यते। लङ्का तूज्जयिन्याः साम्येन दक्षिणतः षट्सप्ततिमिते ग्रीनवीचतः पूर्वदेशान्तरे विवक्ष्यते। तस्मात् सिंहलद्वीपो लङ्का नास्तीति लङ्काशब्देन सिंहलव्यपदेशः केषांचित् साहसमात्रम्॥

इति तृतीया विप्रतिपत्तिः॥३॥

(३) इसी प्रकार जैसे आज के युग में विदेशियों द्वारा ब्रिटेन स्थित ग्रीनवीच नगर में भू-मध्य रेखा मानी जाती है, वैसे ही प्राचीनकाल में भारतवर्ष में उजयिनी नगरी से वह भूमध्य रेखा मानी जाती थी। यह भूमध्य रेखा से उज्जयिनी होती हुई मेरु पर्वत तक बताई जाती है। विद्वानों का कहना है कि—

"लंका और उज्जयिनी जाती हुई, कुरुक्षेत्रादि सम्भाग का स्पर्श करती हुई मेरु पर्वत तक जाने वाली रेखा को विद्वानों ने पृथ्वी की मध्य रेखा कहा है॥"

यही उज्जयिनी नगरी ग्रीनवीच से ७५ डिग्री और ४३[१] मिनट पूर्व देशान्तर पर प्रारम्भ होती है। इन दोनों मध्य रेखाओं (भारतीय और पाश्चात्य) में परस्पर ७६ डिग्री (अंश) का अन्तर सिद्ध होता है।

परन्तु सीलोन नाम से प्रसिद्ध सिंहलद्वीप ग्रीनवीच से ८० डिग्री (अंश) और ५०[१] (कला (८०/५०) पूर्वी देशान्तर पर स्थित है। इस प्रकार ८१ डिग्री अंश होते हैं। तात्पर्य है कि सिंहलद्वीप उज्जयिनी की अपेक्षा ५ डिग्री अक्षांश पूर्व की ओर स्थित है। अतः सिंहलद्वीप से कोई भी रेखा उज्जयिनी का स्पर्श करती हुई किसी भी तरह से नहीं जा सकती है। परन्तु लंकाद्वीप तो उज्जयिनी के साम्य से दक्षिण में ग्रीनवीच से ७६ डिग्री (अंश) पूर्व देशान्तर में बताई गई है। अतः सिंहलद्वीप लंका नहीं हो सकता है। सिंहलद्वीप को लंका शब्द से व्यवहार करना कुछ लोगों का दुस्साहस मात्र है।

**तीसरी असंगति समाप्त हुई ॥३॥**

**(४) अपिच—"निरक्षदेशात् क्षितिषोडशांशे भवेदवन्ती गणितेन यस्मात्"— इति सिद्धान्तशिरोमणिप्रदर्शितज्योतिर्वित्समयानुसारेणोज्जयिन्या लङ्कापेक्षया सार्द्धद्वाविंशेऽक्षांशे स्थितिरुपपद्यते। सा च विषुवस्पर्शिमालदीवाभिप्रायेण कथंचित्संभवति, सिंहलस्य लङ्कात्वोपगमे तु तस्य निरक्षस्पर्शित्वाभावान्मुख्यैनिरक्षस्यवापादानत्वे स्थिते सार्द्धद्वाविंशेऽवन्तीस्थितिर्नोपपद्येत। दशकलाधिकत्रयोविंशेंऽशे (२३।१०) उज्ज-यिन्या अवस्थितत्वात्। तस्मात् सिंहलोऽयं लङ्का नास्तीति सिद्धम्॥**

**इति चतुर्थी विप्रतिपत्तिः ॥४॥**

(४) और भी लिखा है — "गणित के अनुसार अवन्ती नगरी जिस निरक्ष देश से पृथ्वी के सोलहवें अंश पर स्थित है।" इस प्रकार सिद्धान्तशिरोमणिकार ज्योतिर्विद की समय-गणना के अनुसार उज्जयिनी नगरी का लंका की अपेक्षा साढ़े बाईस अक्षांश पर स्थित होना सिद्ध किया गया हैं। (सम्पूर्ण पृथ्वी की परिधि ३६० डिग्री अंश होने के कारण उसका सोलहवाँ अंश ३६०/१६ = २२$\frac{१}{२}$ डिग्री उत्तर अक्षांश पर उज्जयिनी होनी चाहिये। निरक्ष देश से तात्पर्य यदि विषुवत् रेखा का स्पर्श करने वाले मालदीव से लिया जावे तो कुछ उचित सा प्रतीत होता है। यदि सिंहल को ही लंका मान लिया जावे तो उसके शून्य अक्षांश के स्पर्श के अभाव से लंका के प्रमुख उपलक्षण निरक्ष बिन्दु से दूर हटकर स्थित होने पर अवन्ती की २२$\frac{१}{२}$ डिग्री अंश पर स्थिति प्रतिपादित नहीं होती है। क्योंकि उज्जयिनी तो २३ डिग्री अंश और १०[१] कला पर स्थित है। इसलिए यह सिंहलद्वीप किसी प्रकार भी लंका नहीं हो सकता है, यह सिद्ध होता है।

**चौथी विसंगति समाप्त हुई ॥४॥**

**(५) अपि च वाल्मीकीये सुन्दरकाण्डे—**
**योजनानां शतं चापि कपिरेष खमाप्लुतः ॥११६॥**
**योजनानां शतस्यान्ते वनराजिं ददर्श सः ॥२०५॥**
**शतान्यहं योजनानां क्रमेयं सुबहून्यपि॥**

किं पुनः सागरस्यान्तं संख्यातं शतयोजनम् ॥२१४॥
योजनानां शतं श्रीमाँस्तीर्त्वाऽप्युत्तमविक्रमः ॥२१३॥
शतयोजनविस्तीर्णं पुप्लुवे लवणार्णवम्।

**इत्येवमभ्यासेन महेन्द्रगिरित्रिकूटगिर्य्योः शतयोजनात्मकमन्तरमाख्यायते॥ तेन चतुःशतक्रोशान्तरे लङ्कायाः संनिवेशोऽध्यवसीयते॥ स चावश्यं विषुवद्रेखाया-मुपपद्यते॥ महेन्द्राचलस्य विषुवतो दशाऽक्षांशान्तरितत्वादेकैकांशस्य साधिकोन-सप्ततिमीलात्मकतया सार्द्धत्रिशतीक्रोशान्तरितत्वोपपत्तेः। सिंहलस्य त्वस्य शतार्द्धक्रो-शमात्रमप्यन्तरं नास्ति तस्मादन्या लङ्का, अन्यश्चायं सिंहलद्वीप इत्यवसितं भवति॥**

**इति पंचमी विप्रतिपत्तिः ॥५॥**

(५) वाल्मीकि रामायण के सुन्दर काण्ड में लिखा है—

यह वानर सौ योजन की दूरी पर आकाश में उछल गया ॥११६॥

उसने सौ योजन की दूरी पर वनपंक्ति देखी।२०५॥

मैं सैंकड़ों योजन की दूरियाँ पार कर सकता हूँ, फिर समुद्र के पार की यह सौ योजन संख्या की दूरी क्या महत्त्व रखी है ॥(२/४)

उत्तम, पराक्रमी और श्रेष्ठ वानर वीर सौ योजन की दूरी पार करके भी थके नहीं ॥(२/३)

इस प्रकार की उक्तियों से स्पष्ट है कि महेन्द्र पर्वत से त्रिकूट पर्वत के बीच सौ योजन अन्तराल की दूरी का उल्लेख किया गया है। (चार कोस अथवा आठ मील की दूरी एक योजन होती है।) इस आधार पर लंका का चार सौ कोस अथवा आठ सौ मील की दूरी पर स्थित होना सिद्ध होता है। और लंका अवश्य ही विषुवत् रेखा पर स्थित हो सकती है। महेन्द्र पर्वत विषुवत् रेखा से १० डिग्री अक्षांश पर स्थित होने के कारण प्रत्येक अंश (डिग्री) साढ़े उनहत्तर मील के हिसाब से होने के कारण ३५० कोस की दूरी होती है। परन्तु सिंहल द्वीप तो मात्र ५० कोस की दूरी पर भी नहीं है। इसलिए लंका द्वीप अलग द्वीप है और सिंहल द्वीप अलग द्वीप है। यह निश्चित होता है ॥५॥

**पाचवीं विसंगति समाप्त हुई ॥५॥**

**(६) अपि च एष खलु सिंहलद्वीपः पञ्चत्रिंशदधिकशत (१३५) क्रोशदीर्घः सार्द्धद्वाविंशत्यधिकशत (१२२) क्रोशविस्तीर्ण उपलभ्यते, लङ्काद्वीपस्त्वयं चतुःशत-क्रोशदीर्घो (४००) विंशत्यधिकशत (१२०) क्रोशविस्तीर्णो रामायणे स्मर्यते। "त्रिंशद्योजनविस्तीर्णा शतयोजनमायता" इति। तत्र विस्तारसाम्येऽपि दीर्घत्वे भूयान् भेदोऽस्तीति नायं सिंहलो लङ्का भवितुमर्हति॥**

**इति षष्ठी विप्रतिपत्तिः ॥६॥**

(६) और भी— यह सिंहलद्वीप एक सौ पैंतीस कोस लम्बा और एक सौ साढ़े बाईस कोस चौड़ा है, जबकि लंका द्वीप चार सौ कोस लम्बा और एक सौ बीस कोस चौड़ा था, ऐसा रामायण में स्मरण किया गया है। लिखा है — "लंका तीस योजन (१२० कोस)

चौड़ी और सौ योजन (४०० कोस) लम्बी थी। अतः चौड़ाई में लगभग समानता होते हुए भी लम्बाई में बहुत अधिक अन्तर है अतः सिंहलद्वीप लंका नहीं हो सकता है ॥६ ॥

**छठी विसंगति समाप्त हुई ॥६ ॥**

**(७) अपि चेह सिंहले बहवः पर्वता महाबलिनाम्नी गङ्गा च प्रसिद्ध्यन्ति। लङ्कायां तु त्रिकूटसुवेलौ द्वौ पर्वतौ बहुधा स्मर्य्येते। यदि तत्र महाबलिगङ्गाऽप्यभविष्यत्, तत्तर्हि नूनं तस्या अपि रामायणे चरित्रप्रसङ्गे क्वच्चिदुपयोगोऽभविष्यत्। तस्मात् सिंहलस्य लङ्कात्वाख्यानं प्रमादः ॥**

**इति सप्तमी विप्रत्तिपत्तिः ॥७ ॥**

(७) तथा वर्तमान सिंहलद्वीप में अनेक पर्वत और महाबलि नाम की गंगा नदी प्रसिद्ध है। परन्तु लंकावर्णन में त्रिकूट और सुवेल नाम के दो पर्वतों का बार बार उल्लेख मिलता है। यदि वहाँ महाबलि नाम की गंगा होती तो अवश्य ही रामायण में चरित्रप्रसंग के समय उनका उल्लेख किया गया होता। इसलिए सिंहल को लंका कहना एक भूल ही है। ॥७ ॥

**सातवीं विसंगति समाप्त हुई ॥७ ॥**

**(८) यत्तु—अस्ति खल्वपि सिंहलद्वीपे त्रिकूटाचलो रावणविहारस्थानमशोकवाटिका चेत्येतेषां तत्र सुप्रसिद्ध्यैवास्य सिंहलस्य लङ्कात्वं संभाव्यत इति केचिदालपन्ति तन्न युक्तं प्रतीमः। प्रमाणविरोधे प्रसिद्धिमात्रस्यार्थोपपादकत्वायोगात्। अथवा सन्तु तादृशान्यपि तत्र संस्थानानि। पुष्पकविमानेन लङ्कातो भारतवर्षं प्रत्यासीदतो रावणस्य मध्येमार्गं तत्र सिंहलद्वीपेपि विश्रमार्थमवस्थानविहारादेः संभाव्यमानतया तदर्थं रावणाज्ञया तत्र तादृशसंस्थानादेर्निर्माणसंभवात्। किन्तु नैतावता शक्योऽयमपदार्थः कल्पयितुं यदुच्यते सिंहलोऽयं लङ्कास्तीति। तस्मात् सिंहलस्य लङ्कात्वं भ्रान्तिवादः ॥**

**इति अष्टमी विप्रतिप्रत्तिः ॥८ ॥**

(८) कुछ लोग कहते हैं कि वर्तमान सिंहलद्वीप में त्रिकूट पर्वत पर रावणविहार और अशोक- वाटिका नाम के स्थानों की प्रसिद्धि से ही सिंहल द्वीप में लंका की संभावना की जाती है, परन्तु यह उचित प्रतीत नहीं होता है। क्योंकि प्रमाण के अभाव में प्रसिद्धि मात्र से ही किसी तथ्य को स्वीकार नहीं किया जा सकता है। अथवा वहाँ और भी ऐसे अनेक लंका के जैसे स्थान होंगे। इनका समाधान इस प्रकार है कि लंका से पुष्पक विमान द्वारा रावण के भारतवर्ष आते हुए मार्ग में आये सिंहलद्वीप में भी विश्राम-स्थल और विहार की संभावना से अथवा रावण की आज्ञा से यहाँ भी लंका के सदृश स्थानों का निर्माण किया जाना संभव हो सकता है। अतः इतनी ही कल्पना मात्र से सिंहल को लंका द्वीप कहना उचित नहीं है ॥ इसलिए सिंहल द्वीप को लंका समझना एक भ्रान्ति मात्र है ॥८ ॥

**आठवीं विसंगति समाप्त हुई ॥८ ॥**

**(९) यद्यपि यूनानीयग्रन्थेऽस्य सिंहलद्वीपस्य 'टापरोवेन' इति संज्ञा दृश्यते तस्य च शब्दस्य 'टापू रावण' शब्दापभ्रंशत्वप्रतिपत्त्या सिंहलस्य लङ्कात्ववमध्यवसीयते इति केचिदाहुः। तदपि भ्रान्तम्। टापूशब्दस्य भारतीयग्राम्यशब्दतया यूनानदेशे तत्प्रचारायोगात्। अस्तु वा तस्यापि रावणाधिकृतवाद् रावणटापूत्वं किन्तु नैतावता तस्य लङ्कात्वमुपपद्यते। लङ्कावदेव द्वीपान्तराणामपि महाप्रतापिरावणाधिकृतत्वसंभवात्। वस्तुतस्तु बौद्धग्रन्थे सिंहलस्य ताम्रपर्णसंज्ञोपलभ्यते, तस्यैवापभ्रंशेनायं, 'टापूरोवेन' शब्दः संभाव्यत इति रावणटापूत्वमप्यस्य सिंहलस्य दूरापास्तम्। तस्मादस्य सिंहलस्य लङ्कात्वाख्यानमसङ्गतम्॥**

**इति नवमी विप्रतिप्रत्ति॥९॥**

(९) यद्यपि यूनानी ग्रन्थों में सिंहल द्वीप का नाम "टापरोवेन" लिखा मिलता है। उसी टापरोवेन शब्द को "टापू रावण" शब्द का अपभ्रंश मानकर कुछ लोग सिंहलद्वीप को ही लंका मानते हैं। यह भी मात्र एक भ्रान्ति है। क्योंकि "टापू" शब्द भारतीय ग्राम्य भाषा का शब्द है, जो यूनानी भाषा में प्रचलित नहीं हो सकता है। अथवा इसका भी रावण के अधिकार में होने के कारण "रावण टापू" नाम रखा जा सकता है, परन्तु इतने ही आधार पर इस द्वीप को लंका नहीं माना जा सकता है। अथवा लंका के समान ही अन्य द्वीप भी महाप्रतापी रावण के अधिकार में रहे होंगे। (उन्हीं में सिंहलद्वीप भी एक हो सकता है)। वस्तुतः बौद्ध ग्रन्थों में सिंहलद्वीप का नाम "ताम्रपर्ण" मिलता है, उसी ताम्रपर्ण का अपभ्रंश शब्द टोपरोवेन हो सकता है। अतः इस आधार पर सिंहलद्वीप को टापू रावण मानने का खंडन हो जाता है। इसलिए सिंहलद्वीप को लंका कहना सर्वथा असंगत लगता है॥९।।

**नवीं विसंगति समाप्त हुई॥९॥**

**(१०) यदपि च सेतुबन्धरामेश्वरात् सिंहलद्वीपपर्य्यन्तं मध्येसमुद्रमस्ति किञ्चित्किञ्चिदन्तरेण पर्वतानां सन्निवेशः। तदवश्यं रामचन्द्रकृतसेतोर्भग्नावशेषं लक्षणं संभाव्यते। तदेव चैतस्य सिंहलद्वीपस्य लङ्कात्वे जागरूकं प्रमाणं भवितुमर्हतीति केचिदाक्षिपन्ति। तदुपहासास्पदं तुच्छप्रायम्। नहि सेतुं बध्नता रामेण मध्यसमुद्रं पर्वता अवरोपिताः, येनैतेषां सेतुचिह्नत्वं संभाव्येत। अपि तु समुद्रोपरि तीर्य्यमाणाभिः शिलाभिरयं सेतुः प्रक्लृप्त आसीत्। ताश्चावश्यं सेतुभङ्गे यतस्ततो विप्लुता विनष्टा एवाभविष्यन्। रामेश्वरसिंहलयोरन्तराले तु पर्वताः पृथ्वीनिर्म्माणकालादेव प्रकृत्या सिद्धाः संभाव्यन्ते न त्वेते रामेण संस्थापिताः। तस्मादेतान् पर्वतानालोक्य सिंहलस्य लङ्कात्वव्यवस्थापनप्रयासो बालक्रीडामात्रमित्युपेक्ष्यते॥**

**इति दशमी विप्रतिप्रत्तिः॥१०॥**

(१०) सेतुबन्ध रामेश्वर से सिंहलद्वीप तक समुद्र में कुछ कुछ दूरी पर पर्वतों का समूह है, अतः कुछ लोगों का कहना है कि अवश्य ही वे पर्वत श्री रामचन्द्र द्वारा बनाये गये सेतु के भग्नावशेष के रूप में प्रतीत होते हैं और यही प्रमाण सिंहल का लंका मानने में एक पुष्ट प्रमाण हो सकता है। परन्तु यह तर्क लगभग तुच्छ सा है और उपहास करने

योग्य है। क्योंकि भगवान् राम ने सेतुबन्ध के समय पर्वतों को समुद्र के अन्दर स्थापित नहीं किया था, जो इन पर्वतों को सेतु के अवशेष मान लिये जावें, अपितु श्री राम द्वारा बांधा गया सेतु समुद्र के ऊपर तैरती हुई शिलाओं द्वारा तैयार किया गया था। वे शिलाएँ अवश्य ही सेतु के टूटने पर इधर उधर बिखर कर नष्ट हो गई होंगी। रामेश्वर और सिंहलद्वीप के मध्य की पर्वतश्रृंखलाएँ तो पृथ्वीनिर्माण-काल से ही हैं, ऐसा प्राकृतिक अनुसन्धानों से सिद्ध है। ये पर्वतखण्ड श्री राम द्वारा स्थापित पर्वतशिखर कदापि नहीं हो सकते हैं। इसलिए इन पर्वतों को देखकर सिंहलद्वीप को लंका बताने का प्रयास मात्र बालक्रीड़ा (चपलता) समझकर उपेक्षा करने योग्य है।

दसवीं विसंगति समाप्त हुई ॥१०॥

(११) यच्च भारतवर्षाद्दक्षिणतो निरक्षस्थाने कश्चिदपि स्थलप्रदेशो नोपलभ्यते। तस्मात् सिंहल एवायं लङ्काद्वीपः स्यात्। भारतवर्षीयार्य्याणां सिंहले निरक्षत्वभ्रमसंभवादिति केचिदुत्प्रेक्षन्ते। तदेतदेषामुक्तमुपहासास्पदं बालचापल्यमात्रमतिधाष्ट्र्यं वा। सर्वजगद्गुरूणामार्य्यमहामहर्षीणां विद्यासंबन्धे भ्रमकल्पनायाः साहसिकत्वात्। को हि नाम सभ्यो विद्वानखिलजगत्कर्तृणां महामहिमभाजामुपदेशे तावदित्थं भ्रमकल्पनां कुर्याद् ऋते संकीर्णहृदयादसभ्यात् पण्डितंमन्यात्। मेसोपोटेमियादेशे निमरूदप्रतिष्ठापितं बाबिलन्नगरं सम्प्रति नोपलभ्यत इत्येतावता बगदादनगरमेवासीद् बाबिलन्नगरमिति चेत् कश्चिदभ्युपगच्छेत् को नाम तस्य श्रद्दध्यात्। संभवति हि बहुभिः कालैः केषांचिन्नगराणां विध्वंसो यथा वेदप्रसिद्धानां यव्यावती वसोर्धाराप्रभृतीनाम्। यथा वा पुराणप्रसिद्धानां वस्वोकसारामहोदयपुष्कलावतीप्रतिष्ठानादीनामद्योपलब्धिर्नास्ति। भवति च बहूनां द्वीपानामपि कालेन समुद्रगर्भे प्रवेशः। उक्तं च तथा स्कान्दे प्रभासखण्डे द्वासप्ततिशततमाध्याये(१७२) ॥

भरतो नाम राजाभूदाग्नीध्रः प्रथितः क्षितौ॥
यस्येदं भारतं वर्षं नाम्ना लोकेषु गीयते॥१॥
भारतं नवधा कृत्वा पुत्रेभ्यः प्रददौ पृथक्॥
तेषां नामाङ्कितान्येव ततो द्वीपानि जज्ञिरे॥२॥
इन्द्रद्वीपः कसेरूश्च ताम्रपर्णो गभस्तिमान्॥
नागद्वीपस्तथा सौम्यो गान्धर्वस्त्वथ वारुणः॥३॥
अयं तु नवमो द्वीपः कुमार्य्यासंज्ञितः प्रिये॥
अष्टौ द्वीपाः समुद्रेण प्लाविताश्च तथापरे॥४॥
ग्रामादिदेशसंयुक्ताः स्थिताः सागरमध्यगाः।
एक एव स्थितस्तेषां कुमार्य्याख्यस्तु सांप्रतम्॥५॥—इति।

एतेन पुत्रेभ्यः समानविभागात् तदात्वे, नवानामपि भारतवर्षभागानां विस्तारसाम्यं प्रतीयते। कालेन तु तेष्वष्टद्वीपानां बहुभिर्भागैः समुद्रगर्भे प्रवेशादतितुच्छभागैरद्या-

**वशेषः स्मर्य्यते। तथा च तद्रीत्या लङ्काद्वीपस्यापि सर्वात्मना संभाव्यते समुद्रगर्भे प्रवेशाद्विलोप इति नैतावता स्थानान्तरस्य स्थानान्तरसंज्ञया व्यपदेशो विद्विद्भिः कर्तुं युज्यते तस्मात्सिंहले लङ्काशब्दप्रयोगो नितान्तमज्ञानाद् इति बोध्यम् ॥**

**इत्येकादशी विप्रतिप्रत्तिः ॥११ ॥**

(११) कुछ लोगों की मान्यता है कि भारतवर्ष के दक्षिण भाग में कोई भी स्थल प्रदेश निरक्ष (० डिग्री) स्थान पर स्थित नहीं है। अतः सिंहलद्वीप में ही निरक्ष स्थान का भ्रम हो गया होगा। परन्तु ऐसे लोगों द्वारा कही गई बातें मात्र उपहास के योग्य हैं, बालचपलता (अनभिज्ञता) अथवा धृष्टता मात्र है। क्योंकि समस्त संसार के गुरु, महान् ज्ञानी आर्य महर्षियों की विद्या के सम्बन्ध में जो भ्रामक कल्पना जैसे शब्द का प्रयोग करने का दुस्साहस करते हैं। केवल तुच्छ हृदय, असभ्य और स्वयं को पण्डित मानने वाले अज्ञानियों को छोडकर कौन सभ्य और विद्वान् इस प्रकार समस्त संसार के ज्ञान को प्रत्यक्ष करने वाले महान् एवं अत्यन्त उच्चकोटि के विद्वानों के उपदेशवाक्यों में इस प्रकार की भ्रामक कल्पनाएँ करने का प्रयास कर सकता है? इसी संबंध में कहते हैं कि मेसोपोटेमिया देश में निमरूद द्वारा स्थापित बाबिलन् नगर आज उपलब्ध नहीं है और इसके लिए कोई बगदाद को ही बाबिलन् बतलाने लग जाता है तो इस बात पर कौन विश्वास करेगा। यह सम्भव है कि लम्बा समय व्यतीत हो जाने से कुछ नगरों का विध्वंस हो जाता है यथा वेदों में वर्णित "यव्यावती" और "वसोर्धारा" नाम के नगर आज उपलब्ध नहीं है अथवा जैसे पुराणों में प्रसिद्ध "वस्वोकसारा", "महोदय","पुष्कलावती" इत्यादि स्थल आज उपलब्ध नहीं हैं। बहुत से द्वीप समय के दीर्घ अन्तराल के पश्चात् समुद्र में डूब गये हैं, जैसा कि स्कन्द पुराण के प्रभासखण्ड में कहा भी गया है —

"यज्ञाग्नि में हवन करने वाला, सम्पूर्ण पृथ्वी पर प्रसिद्ध भरत नाम का राजा हुआ है, जिसके नाम से निर्धारित भारतवर्ष तीनों लोकों में प्रसिद्ध है ॥१ ॥

भरत ने इस भारतवर्ष को नौ भागों में विभक्त करके अपने पुत्रों को अलग अलग दे दिया था, उन्हीं के नाम से इन नौ द्वीपों का नाम निर्धारित किया गया ॥२ ॥

वे द्वीप हैं इन्द्रद्वीप, कसेरूद्वीप, ताम्रपर्ण, नाग, गभस्तिमान्, सौम्य, गन्धर्व और वारुणद्वीप ॥३ ॥

"हे प्रिये! यह नवाँ द्वीप कुमारी द्वीप के नाम से जाना गया है। अन्य आठ द्वीप तो समुद्र में जलमग्न हो गये, जो नगर और गांवों सहित समुद्र के बीच में स्थित थे, परन्तु उनमें से आज कन्या कुमारी नाम का एक द्वीप उपलब्ध है ॥४-५ ॥ (स्क.पु.प्र.सं. १७२)

इस प्रकार पुत्रों को समान भाग वितरित करने से भारतवर्ष का नौ भागों में विस्तार उचित प्रतीत होता है। दीर्घकाल के व्यतीत हो जाने पर उन आठ द्वीपों के बहुत से भागों के समुद्र के गर्त में प्रविष्ट हो जाने पर अवशिष्ट भाग से ही उनके अवशेषों की कल्पना की जाती है। इसी प्रकार लंका द्वीप के भी समुद्र के गर्भ में प्रविष्ट होने की सम्भावना हो सकती है अतः इतने मात्र से ही विद्वानों द्वारा एक स्थान का नाम दूसरे स्थान के नाम के आधार पर ही निर्धारित कर देना, उचित नहीं है। अतः सिंहल द्वीप को मात्र अज्ञानतावश लंका शब्द से अभिहित किया जाता है, ऐसा स्पष्ट है ॥११ ॥

**ग्यारहवीं विसंगति समाप्त हुई ॥११ ॥**

(१२) अपि वा अस्त्येव खल्वस्या लङ्काया भग्नावशेषचिह्नमद्यापि॥ तथा हि यस्तावदुपलभ्यतेऽद्यत्वे सिंहलद्वीपात् पश्चिमतो नातिदूरे लक्के दीव (Lakkadiv = Laccadive) इत्युपद्वीपः स एव तु पुरा लङ्काद्वीप आसीदित्यध्यवस्यामः सन्ति हि तस्य लङ्काद्वीपत्वे षडुपष्टम्भकानि॥६॥

(१) तत्र तावन्नामसादृश्यं पश्यामः लक्केदीव (Lakkadiv = Lacca) इत्यवश्य लङ्काद्वीपशब्दस्य रक्षोद्वीपशब्दस्य वापभ्रंशो भवितुमर्हतीत्येकम्॥१॥

(२) यच्च लक्केदीवप्रदेशात् दक्षिणतो निरक्षदेशोपह्वरे मालदीवनाम (Maldvi) स्थानमुपलभामहे तन्नूनं मालेयद्वीप इति वा मालिद्वीप इति वा संभाव्यते। मालिसंज्ञस्य राक्षसविशेषस्य निवासोपलक्षितं स्थानं मालिद्वीपः। मालिनः पुत्राणां वा अनलानिलहरसंपातीनां मालेयसंज्ञा स्मर्य्यते। ते चैते विभीषणमातुला विभीषणामात्याश्चासान्।

"अनलश्चानिलश्चैव हरः संपातिरेव च।
एते विभीषणामात्या मालेयास्ते निशाचराः।" (उ.कां. ५।४३)

इति रामायणोक्तेः। तन्निवासोपलक्षितं स्थानं मालेयद्वीपः। स चायं मालदीवाख्यो मालिद्वीपोऽद्यत्वे लक्कद्वीपात् पृथक्त्वेनोपलभ्यमानोऽपि पुरात्वे नूनमासीदयं लङ्काया एवैको दक्षिणः प्रान्तः। लङ्काधिपतेर्माल्यवतः कनिष्ठभ्रातृत्वेन तत्सेनापतित्वेन च श्रुतस्य मालेर्लङ्कातोऽतिदूरे द्वीपान्तरे स्थातुमनवक्लृप्तत्वात्। तथा च लङ्कावासित्वेन प्रसिद्धस्य मालिनो राक्षसस्य निवासस्थानरूपमालिद्वीपसांनिध्योपपत्या ध्रुवमस्य लक्कदीवस्य लङ्काद्वीपत्वमुपपन्नं भवतीति द्वितीयम्॥२॥

(३) पूर्वं तावदयमेक एवार्थ आसील्लङ्काद्वीपश्च मालिद्वीपश्च अद्यतनोपलब्धलक्केदीवादारभ्यनिरक्षवृत्तादपि दक्षिणतः कियद्दूरपर्य्यन्तं लङ्कायाः सन्निविष्टत्वादद्य पृथक्त्वेनोपलब्धयोरपि लक्केदीवमालदीवयोः पुराकाले एकस्या एव लङ्कायाः प्रान्तविशेषत्वेनोपगन्तव्यत्वात्। तथा हि लङ्कायामस्यां सर्वतः पूर्वं साल कटंकटवंश्या राक्षसा वसन्ति स्म। तेषां च तद्वंश्य एव माल्यवन्नाम राजासीत्। माल्यवतोऽवरजः सुमाली प्रधानमंत्री सर्वकनिष्ठस्तु माली प्रधानसेनापतिरित्येवं त्रयोप्येते भ्रातरः सुकेशपुत्रा विद्युत्केशपौत्राः प्रहेतिप्रपौत्राः अस्या लङ्कायाः प्राधान्येन शासका आसन्। बलदुर्मदान्धैरेतैर्भूयो भूयः प्रपीडितानां प्रजानां रक्षार्थमेते त्रयोपि विष्णुना हतराज्याधिकारा लङ्कातो निष्कासिता अधस्तात्पातालं गत्वा सपरिवारास्तत्र न्यूषुः। उक्तं चैतत्सर्वमुत्तररामायणे—

"ततः काले सुकेशस्तु जनयामास राघव॥
माल्यवन्तं सुमालिं च मालिं च बलिनां वरम्"॥१॥(५।५)
"ऊचुस्ते विश्वकर्म्माणं शिल्पिनां वरमव्ययम्॥

अस्माकमपि तावत् त्वं गृहं कुरु महामते" ॥२ ॥ (५ ।२०)
"विश्वकर्मा ततस्तेषां निवासं निर्दिदेश ह ॥
दक्षिणस्योदधेस्तीरे त्रिकूटो नाम पर्वतः ॥३
सुवेल इति चाप्यन्यो द्वितीयो राक्षसेश्वर ॥
शिखरे तस्य शैलस्य मध्यमेऽम्बुदसंनिभे ॥४ ॥
त्रिंशद्योजनविस्तीर्णा शतयोजनमायता ॥
मया लङ्केति नगरी शक्राज्ञप्तेन निर्मिता ॥५ ॥
तस्यां वसत दुर्धर्षा यूयं राक्षसपुङ्गवाः ।
विश्वकर्मवचः श्रुत्वा गत्वा तामवसन् पुरीम्" ॥६ ॥(५ ।२८)
"लङ्कानामपुरी दुर्गा त्रिकूटशिखरे स्थिता ।
तत्र स्थिताः स्म बाधन्ते सर्वान् देवान्निशाचराः" ॥७ ॥(६ ।१५)
"इति माली सुमाली च माल्यवांश्चैव राक्षसाः ॥
बाधन्ते समरोद्धर्षा ये च तेषां पुरःसराः" ॥८ ॥(६ ।७)
'ये त्वया निहतास्ते तु पौलस्त्या नाम राक्षसाः ।
सुमाली माल्यवान् माली ये च तेषां पुरःसराः ॥९ ॥
सर्व एते महाभागा रावणाद् बलवत्तराः" ।(८ ।२४)
अशक्नुवन्तस्ते विष्णुं प्रतियोद्धुं बलार्दिताः ।
त्यक्त्वा लङ्कां गता वस्तुं पातालं सहपत्नयः ॥१० ॥(८ ।२२)
सुमालिनं समासाद्य राक्षसं रघुसत्तम ॥
स्थिताः प्रख्यातवीर्य्यास्ते वंशे सालकटंकटे ॥११ ॥(८ ।२३) इत्यादि ॥

अथ माल्यवत्प्रभृतिषु सालकटङ्कटाख्येषु पातालं गतेषु सत्सु लङ्कामेतां कुबेरः समागत्य शशास। कालेन तु केनचित् माल्यवद्भ्रातुः सुमालिनः कन्यायां कैकस्यां पुलस्त्यान्महर्षे रावणकुम्भकर्णशूर्पणखाविभीषणा उदपद्यन्त। तद्बलदर्पितः सुमाली स्वदौहित्राय रावणाय लङ्कां कुबेराद् ग्रहीतुं प्रेरयामास। स रावणो विनैव युद्धं कुबेराल्लङ्कां गृहीत्वा तत्र राजाऽभवत्॥ तदवधि पौलस्त्या राक्षसाः प्राधान्येन लङ्कामधिष्ठाय सालकटङ्कटानपि राक्षसान् स्वायत्तान् पालयामासुः। तथा चैतस्या लङ्कानगर्य्यास्त्रेधा कक्षाविभाग आसीत्। तत्र मध्यमे लङ्कार्धे पौलस्त्यानां रावणकुम्भकर्णविभीषणप्रमुखानामधिपतीनां राजप्रासादास्त्रिकूटाचले सन्निविष्टा अभूवन्। उत्तरे तु लङ्कार्धे रावणजातीयाः पौलस्त्या नाम राक्षसा वसन्ति स्म। अथ दक्षिणे लङ्कार्धे सालकटङ्कटा माल्यवत्सुमालिसुमालिप्रमुखा राक्षसा न्यूषुः। सेयमेकैव लङ्का त्रिधा विभक्तासीत्। तत्र मध्यमो भागो लङ्कायाः समुद्रगर्भे निमग्नः कालेनोच्छिन्नोऽभूदिति नेदानीमुपलभ्यते। उत्तरप्रान्तस्तु भग्नावशिष्टः कश्चिद्भागो रक्षोद्वीपनामा तदपभ्रंशेन लक्केदीव इत्युच्यते। एवमस्या दक्षिणः कश्चन

मालेयाध्युषितो भागो भग्नावशेषो मालिद्वीपस्तदपभ्रंशेन मालवदीवनाम्नाभिधीयते ॥ इति तृतीयम् ॥३ ॥

(४) अपि चास्मिन् लक्कदीवादिमालदीवान्तोपद्वीपे निरक्षगर्भत्वमप्युपपद्यते। तथा हि पुरायुगे तावदियं लङ्कानगरी निरक्षोपह्वरस्थे कस्मिंश्चित् सुवेलपर्वतत्रिकूटपर्वताभ्यामुपसंपन्ने द्वीपे त्रिकूटाद्रिमध्यमशिखरोपरि सन्निविष्टाऽऽसीत्। सा च पूर्वापरतो विंशत्यधिकशतक्रोशैर्विस्तीर्णा दक्षिणोत्तरतस्तु चतुश्शतक्रोशदीर्घासीदिति रामायणवचनादवगम्यते।

त्रिंशद्योजनविस्तीर्णा शतयोजनमायतेति तत्रोक्तेः। तेन त्रिकूटैकशिखरस्थाया नगरय्यर्याश्चतुःशतक्रोशमितत्वे तदुपलक्षितैतद्द्वीपस्य ततोप्यधिकदीर्घत्वं संभाव्यते। त्रिकूटादुत्तरतः सुवेलशैलाभिव्याप्त्या चतुर्दिक्षु समुद्रकूलेषूपत्यकाप्रदेशाभिव्याप्त्या चैतस्या नगर्य्या बहिर्द्धा परिसरस्थलानमाधिक्यात्। तथा चावश्यं मालदीवादप्यस्माद्दक्षिणतो निरक्षपर्य्याप्ता लङ्काद्वीपस्य दक्षिणपरिसरप्रदेशाः पुरात्वे आसन्निति गम्यते। तथा च नगरीविशेषवाचिनो लङ्काशब्दस्य तदुपलक्षित राष्ट्रेपि मिथिलादिशब्दवल्लोकव्यवहारसिद्धतया द्वीपाभिप्रायेणापि प्रयुज्यमानत्वाल्लङ्काया निरक्षत्वोपपत्तिः ॥इति चतुर्थम् ॥४ ॥

(५) अथेयमुज्जयिनी नगरी ग्रीनवीचमध्यरेखातः साधिकपञ्चसप्तति- (७५ ।४३) मिते पूर्वदेशान्तरे सन्निविशते। लङ्कापीयं पुरात्वे तावत्येव पूर्वदेशान्तरे संनिविष्टासीदिति लङ्काया उज्जयिन्याश्च दक्षिणोत्तरतः समसूत्रत्वमापतति। समसूत्रत्वाच्च भारतवर्षीयार्य्यनिदर्शिता भूमध्यरेखा तदुभयस्पर्शिन्युपपद्यते। तेन देशान्तरतोऽपि लक्कदीवमालदीवयोरेव लङ्कात्वं सिध्यतीति पञ्चमम् ॥५ ॥

(६) अपि च सिंहलद्वीपे सोमानाम्न्या रजक्या निवासस्थानमासीदिति सोमवत्यमावास्योपाख्यानादवगम्यते। पुराकालादेव तु दक्षिणापथस्थानां द्रविडादीनां सिंहलद्वीपे भूयांसो वाणिज्यव्यापाराः प्रचलन्ति स्म। बहूनां च दाक्षिणात्यानां राज्ञां सिंहलद्वीपे युद्धानि भवन्ति स्मेति प्रचलितकतिपयेतिहासपिटकाद्विज्ञायते। विजयश्रीविक्रमराजादयो बहवः सूर्य्यवंश्या राजानस्तत्र राज्यं कुर्वन्ति स्म। कुमारदासश्चात्र प्रसिद्धो राजसीत्। तदित्थं मनुष्याणामेवात्र सिंहलद्वीपे पुराकालादारभ्येदानीं यावत् संनिवेशो यातायातं चाख्यायते। न तु राक्षसानामुपनिवेशः पुराकालादिदानीं यावदिह कुत्रापि स्मर्य्यते। लङ्काद्वीपे तु राक्षसानामेवाऽसीत् पुरात्वे निवासस्थानमिति भेदाः। तस्मान्नायं सिंहलद्वीपः कदापि लङ्कासीदिति निश्चिनुमः। अथैतयोस्तु लक्कदीवमालदीवयोरद्यापि मनुष्यमांसभक्षकत्वं बहुषु दृश्यते इति राक्षसवृत्तिप्राणिनामिहोपनिवेशादनयोर्लङ्कात्वं संभाव्यते इति षष्ठम् ॥६ ॥

**तथा च सिध्यत्यन्यः सिंहलद्वीपोऽन्यश्च लङ्काद्वीप इति युक्तं भागवतादिषु सिंहल-लङ्कयोः पार्थक्येनाभिधानम्। अयुक्तं च सिंहलस्य लङ्काभिधानम्।**

**इति द्वादशी विप्रतिपत्तिः ॥१२॥**

**इति भारतपरिचये लङ्काप्रसङ्गः समाप्तः ॥५॥**

(१२) तथा लंका के भग्नावशेष के जो चिह्न आज भी उपलब्ध हैं, वे हैं — सिंहलद्वीप से पश्चिम की ओर कुछ ही दूरी पर लक्केदीव नाम का उपद्वीप है, वही प्राचीन काल में लंका द्वीप था, ऐसा हम दृढ़ निश्चयपूर्वक कहते हैं। यह लक्केदीव ही लंकाद्वीप है, इस सम्बन्ध में छः ठोस प्रमाण प्रस्तुत हैं:—

(१) इस सम्बन्ध में पहला प्रमाण है कि हम लक्केदीव अथवा लक्का तथा लंका शब्दों में परस्पर नाम का सादृश्य देखते हैं। अतः अवश्य ही लंकाद्वीप अथवा रक्षोद्वीप शब्द का अपभ्रंश रूप (लक्कादीव) हो सकता है ॥१॥

(२) और जो लक्केदीव प्रदेश से दक्षिण की ओर निरक्ष देश के समीप मालदीव नाम का स्थान है, वह अवश्य ही मालेयद्वीप अथवा मालिद्वीप प्रतीत होता है। मालि नाम के राक्षस विशेष का निवासस्थान 'मालिद्वीप' प्रतीत होता है। मालि राक्षस के चार पुत्र अनल, अनिल, हर और संपाति नाम के थे, वे ही मालेय कहे जाते थे। वे विभीषण के मामा तथा मंत्री भी थे। रामायण में लिखा है—

"अनल, अनिल, हर और संपाति नाम के विभीषण के आमात्य तथा मालेय नाम के राक्षस थे॥" (वा.रामा.उ. ५/४३)

उनके निवासस्थान मालिद्वीप कहे गये हैं। वर्तमान में वही यह मालदीव नाम का मालिद्वीप आज भी लंकाद्वीप से अलग होते हुए भी प्राचीनकाल में निश्चित रूप से लंका का ही एक दक्षिण प्रान्त था। लंकाधिपति माल्यवान् का छोटा भाई तथा सेनापति, जो मालि नाम से प्रसिद्ध हुआ है, उसका निवासस्थान लंका से अधिक दूर नहीं हो सकता है तथा लंकावासी होने के कारण प्रसिद्ध मालि राक्षस का निवासस्थान मालिद्वीप हुआ तथा इसी कारण इसके समीप स्थित लक्केदीव को ही लंका मानना उचित प्रतीत होता है। यह द्वितीय प्रमाण है ॥२॥

(३) प्राचीनकाल में लंकाद्वीप और मालिद्वीप एक ही थे, क्योंकि आज उपलब्ध लक्केदीव जो निरक्ष बिन्दु पर स्थित है, उसके दक्षिण की ओर कुछ ही दूरी पर लंकाद्वीप स्थित था, अतः आज लक्केदीव और मालिदीव के पृथक् रूप से उपलब्ध होने पर भी प्राचीन काल में लंका के ही प्रान्त विशेष के रूप में माने जा सकते हैं। इसी प्रकार इस लंकाद्वीप में प्राचीनकाल में सालकटंकट वंश के राक्षस निवास करते थे। उन्हीं का वंशज माल्यवान् राक्षस राजा था। माल्यवान् का छोटा भाई सुमाली जो प्रधानमंत्री था तथा सबसे छोटा भाई माली प्रधान सेनापति था। इस प्रकार से ये तीनों ही भाई सुकेश के पुत्र, विद्युत्केश के पौत्र तथा प्रहेति के प्रपौत्र थे, जो इस लंका के प्रमुख शासक थे। ये तीनों ही अपने शौर्य के अहंकार में दुर्मदान्ध थे, जिसके कारण पीड़ित प्रजा की रक्षा करने के लिए भगवान् विष्णु ने इन तीनों को ही राज्यच्युत करके लंका से निष्कासित कर दिया था। लंका से निकाले जाने के पश्चात् ये तीनों नीचे पाताल में जाकर सपरिवार वहीं निवास करने लगे। यह सम्पूर्ण आख्यान उत्तर रामायण में कहा गया है।:—

"हे रघुनन्दन ! तदनन्तर समय आने पर सुकेश ने माल्यवान्, सुमाली और माली नाम के तीन पुत्रों को जन्म दिया, जिनमें माली बलवानों में श्रेष्ठ था ॥१ ॥

वे शिल्पियों में सर्वश्रेष्ठ विश्वकर्मा से बोले- हे महामते ! आप हमारे लिए भी एक विशाल भवन का निर्माण कीजिए ॥२ ॥

यह सुनकर विश्वकर्मा ने एक ऐसे ही निवासस्थान का पता बताया और कहा कि राक्षसेश्वर ! दक्षिण समुद्र के तट पर एक त्रिकूट नाम का और दूसरा सुवेल नाम का पर्वत विख्यात है ॥ उस त्रिकूट पर्वत के मंझले शिखर पर जो हरा-भरा होने के कारण मेघ के समान नीला दिखाई देता है, वहाँ मैंने इन्द्र की आज्ञा से तीन सौ योजन चौड़ी और सौ योजन लम्बी लंका नाम की नगरी का निर्माण किया है ॥३-४-५ ॥

हे दुर्घर्ष राक्षसश्रेष्ठों ! तुम उस लंका नगरी में जाकर निवास करो। विश्वकर्मा के वचनों को सुनकर ये श्रेष्ठ राक्षस उस पुरी में निवास करने लगे ॥६ ॥

त्रिकूट नाम के पर्वत पर जो लंका नाम की नगरी है, उस दुर्गम नगरी में रहकर वे राक्षस समस्त देवताओं को क्लेश पहुंचाते रहते थे ॥७ ॥

माली, सुमाली और माल्यवान् ये तीनों ही युद्ध में अग्रणी राक्षस और उनके अग्रगामी सैनिक हमें बड़ा कष्ट दे रहे हैं ॥८ ॥

हे राम ! आपने पुलस्त्य वंश के जिन जिन राक्षसों को मारा है, जिनमें सुमाली, माल्यवान्, और माली अधिक बलशाली थे, ये सभी महाभाग रावण से अधिक बलशाली थे ॥९ ॥

वे किसी प्रकार भी भगवान् विष्णु का सामना नहीं कर सके और सदा ही उनके बल से पीड़ित होते रहे। अतः समस्त निशाचर लंका छोड़कर अपनी पत्नियों के साथ पाताल में चले गये ॥१० ॥

हे रघुश्रेष्ठ ! वे विख्यात, पराक्रमी निशाचर सालकटंकट वंश में विद्यमान राक्षस सुमाली का आश्रय लेकर रहने लगे ॥११ ॥

तदनन्तर सालकटंकट नाम से प्रसिद्ध माल्यवान् आदि राक्षसों के पाताल में चले जाने के पश्चात् लंका पर कुबेर ने आकर शासन किया। कुछ समय व्यतीत हो जाने के पश्चात माल्यवान् के भाई सुमाली की पुत्री कैकशी का पुलस्त्य महर्षि से विवाह होने पर रावण, कुम्भकर्ण, शूर्पणखा और विभीषण उत्पन्न हुए। उनके पराक्रम से गर्वित होते हुए सुमाली ने अपने दौहित्र रावण को कुबेर से लंका वापस लेने के लिए प्रेरित किया। तब रावण ने बिना युद्ध किये ही कुबेर से लंका छीन ली और वहाँ का राजा बन गया।तभी से लंका में पुलस्त्यवंशीय राक्षसों ने शासन करके सालकटंकट आदि राक्षसों की भी अपने राज्य के अन्तर्गत पालना की। तब इस लंका नगरी को तीन भागों में विभक्त किया गया, उनमें बीच में लंका के अर्द्धभाग में त्रिकूट पर्वत पर रावण, कुम्भकर्ण, शूर्पणखा और विभीषण के राजमहल बने हुए थे। उत्तर में लंका के अर्ध भाग में रावण की जाति के ही पुलस्त्यवंशीय राक्षस निवास करते थे तथा लंका के दक्षिणार्धभाग में सालकटंकट जाति के राक्षस जिनमें माल्यवान्, माली और सुमाली इत्यादि प्रमुख थे, ऐसे राक्षस निवास करने लगे। इस प्रकार यह एक लंका ही तीन भागों में विभक्त हो गई। उनमें से मध्य भाग समय व्यतीत हो जाने पर समुद्र में डूब कर छिन्न-भिन्न हो गया, जो इस समय उपलब्ध नहीं है। इसी लंका का उत्तरी भाग नष्ट-भ्रष्ट होकर अवशेष के रूप में रक्षोद्वीप नाम से कहा जाने लगा, जिसका

अपभ्रंश लक्केदीव कहा जाता है। इसी प्रकार मालेय नाम के राजा का निवास स्थान लंका के दक्षिण भाग का भग्नावशेष भाग मालिद्वीप कहा जाने लगा, जिसका अपभ्रंश रूप मालदीव कहा जाता है ॥३ ॥

**तीसरा प्रमाण समाप्त हुआ ॥३ ॥**

(४) तथा इन्हीं लक्केदीव और मालदीव नामक उपद्वीपों में ही निरक्ष भाग (० डिग्री) उचित बैठता है, तथा प्राचीन काल में यह लंका नगरी अक्षांशरहित स्थान के समीप में किसी सुवेल और त्रिकूट पर्वतों से बने द्वीप में त्रिकूट पर्वत के मध्य शिखर पर स्थित थी। वाल्मीकि रामायण से स्पष्ट होता है कि वह लंका नगरी पूर्व से पश्चिम तक १२० कोस चौड़ी और दक्षिण से उत्तर तक ४०० कोस लम्बी विस्तारयुक्त थी।

वहाँ कहा गया है कि यह लंका तीस योजन चौड़ी और सौ योजन लम्बी थी। इससे प्रतीत होता है कि त्रिकूट पर्वत के एक शिखर पर स्थित यह लंका नगरी ही चार सौ कोस की बताई गई है। इससे स्पष्ट होता है कि यह द्वीप तो इससे भी अधिक बड़ा हो सकता है, क्योंकि त्रिकूट पर्वत से उत्तर की ओर सुवेल पर्वत की चारों दिशाओं में समुद्रतट पर घाटियों से घिरी हुई इस नगरी के बाहर की ओर बहुत बड़ा मैदान था। अतः प्राचीनकाल में अवश्य ही मालदीव से भी दक्षिण की ओर सम्पूर्ण निरक्ष पर्याप्त लंकाद्वीप के आस पास के दक्षिण की ओर फैले हुए प्रदेश थे, ऐसा प्रतीत होता है। जैसे मिथिला इत्यादि नगरी के नाम से सम्पूर्ण राष्ट्र (जनपद) प्रसिद्ध हो गया वैसे ही लंका नाम की नगरी के नाम से उपलक्षित सम्पूर्ण द्वीप को ही लंका शब्द से व्यवहृत किया जाने लगा और इसीलिए सम्पूर्ण लंकाद्वीप को ही निरक्ष देश कहा जाना उचित ही है॥

**चतुर्थ प्रमाण समाप्त हुआ ॥४ ॥**

(५) यह उज्जयिनी नगरी ग्रीनवीच भूमध्य रेखा से पचहत्तर डिग्री अंश से अधिक पूर्व देशान्तर पर स्थित थी। पुराकाल में लंका भी इतने ही पूर्व देशान्तर पर स्थित थी। इस प्रकार लंका और उज्जयिनी की देशान्तर रेखाएँ दक्षिण और उत्तर में समान सूत्र पर ही स्थित हैं। अतः समान सूत्ररेखा पर स्थित होने के कारण भारतीय आर्यों द्वारा निर्दिष्ट भू-मध्य रेखा इन नगरियों ( लंका और उज्जयिनी) का स्पर्श करती हुई विद्यमान है। इस प्रकार देशान्तर रेखा के अनुसार भी लक्केदीव और मालदीव दोनों ही लंकाद्वीप थे, ऐसा सिद्ध होता है ॥५ ॥

**पाँचवां प्रमाण समाप्त हुआ ॥५ ॥**

(६) सोमवती अमावस्या के उपाख्यान से स्पष्ट होता है कि सिंहलद्वीप में सोमा नाम की धोबिन का निवासस्थान था। प्राचीन काल से ही दक्षिण प्रान्त में स्थित द्रविड़ों का सिंहल द्वीप में निरन्तर व्यापार-व्यवहार होता था। कुछ इतिहासग्रन्थों से प्रतीत होता है कि बहुत से दक्षिण के राजाओं के सिंहलद्वीप में युद्ध भी हुए थे। विजय श्री विक्रम नामक प्रसिद्ध राजा थे राज इत्यादि सूर्यवंशीय राजा वहाँ राज्य करते थे। यहाँ एक कुमार अनेक दास इस सिंहलद्वीप में मनुष्यों का ही निरन्तर यातायात रहा है, ऐसा बताया गया है। प्राचीन काल से लेकर अब तक कहीं भी इस सिंहलद्वीप में राक्षसों के निवास-स्थान होने का वर्णन नहीं मिलता है। परन्तु सिंहल और लंका में यही अन्तर है कि लंका में तो प्राचीनकाल से ही राक्षसों का निवास रहा है। अतः निश्चयपूर्वक कहते हैं कि यह सिंहलद्वीप कभी

लंका नहीं था तथा लक्केदीव और मालदीव में आज भी मनुष्य के मांस का भक्षण करने वाले लोग अनेक स्थानों पर तथा अनेक बार देखे जाते हैं। अतः राक्षसों की जैसी प्रवृत्ति के लोगों का निवासस्थान होने के कारण ये दोनों द्वीप ही लंकाद्वीप प्रतीत होते हैं ॥६ ॥

**छठा प्रमाण समाप्त हुआ ॥६ ॥**

और भी सिद्ध होता है कि भागवतादि महापुराणों में सिंहल और लंका को अलग-अलग नामों से कहा गया है। इसलिए सिंहल को लंका नाम से कहना सर्वथा अनुचित है ॥

**इस प्रकार बारहवीं विसंगति समाप्त हुई ॥१२ ॥**

**भारतपरिचयखण्ड में लंका-प्रसंग समाप्त हुआ ॥५ ॥**

# भारतीयभाषाप्रसङ्गः ॥६ ॥

## दैवीब्राह्मीभेदाद् भारत्या भाषाया द्वैविध्यम्

१— छन्दोभाषा संस्कृतभाषाऽथ च नागरी भाषा।
इत्थं भारतवर्षे कालक्रमतस्त्रिधा भाषा ॥१ ॥

## छन्दोभाषा।

२— भारतवर्षे द्विविधा भाषाऽऽसीत् पाणिनेः समये।
छन्दोभाषा दैवी ब्राह्मीनाम्नी तु भारती भाषा ॥२ ॥
दैवीभाषा स्वर्ग्या देवेषु प्रचलिताऽभवत् स्वर्गे।
देवानामुच्छेदादुच्छिन्नाऽप्यस्ति शास्त्रमात्रस्था ॥३ ॥

## छन्दोभाषायाः सर्वभाषामूलत्वम्।

छन्दोभाषा त्वेषा जननी प्रतिभाति विश्वभाषाणाम्।
संस्कृतभाषा चासुरभाषा द्वे ज्येष्ठकन्ये स्तः ॥४ ॥
संप्रति भाषा बह्व्यः संस्कृतभाषाविकारतो जाताः।
यूरोपसर्वभाषा आसुरभाषाप्रसूताः स्युः ॥५ ॥
जेन्दावस्ताभाषा त्वासुरभाषा प्रदृश्यते प्रथमा।
लेटिनभाषा त्वपरा संभाव्यन्ते ततोऽप्यन्याः ॥६ ॥

## छन्दोभाषाया एव इण्डोयूरोपियन्भाषात्वम्।

यत्त्विह वदन्ति लोका इण्डोयूरोपियन्नाम्ना।
आसीद् काचिद् भाषा सा जननी विश्वभाषाणाम् ॥७ ॥
मन्ये सा हि च्छन्दोभाषैव तु मूलभाषाद्या।
जेन्दावस्ता छन्दोऽभ्यस्ता सच्छन्द आम्नायः ॥८ ॥

## भारती भाषा।

३— *अमरस्य कोशकर्तुः समये सा भारती भाषा।
ब्राह्मी नाम्ना लोके प्रथिताऽऽसीत् स हि तथैवाह ॥९ ॥
भारतवर्षमनुष्याः संस्कारैः संस्कृता अभवन्।
भाषा च भारतीयं पाणिनिना संस्कृताऽक्रियत ॥१० ॥

---

* ब्राह्मी तु भारती भाषा—इति। यत्त्वमरटीकाकारैर्ब्राह्मीभारतीभाषाशब्दानां सामान्येन वाक्पर्य्यायवाचित्वं प्रदर्श्यते तदज्ञानात्। भाषाशब्दस्य वाक्पर्य्यायत्वानौचित्यात्।

### प्राच्योदीच्यभेदाद् ब्राह्मीभाषाद्वैविध्यम्।

ब्राह्मी तु भारतीयं भाषाऽऽसीत् प्रचरिता तदा लोके।
पृथगिव सोदीच्यानां प्राच्यानां चाल्पशो भिन्ना ॥११॥
सा भारती तु भाषा संस्कारभ्रंशतो विकारेण।
रूपान्तरतामागाद् द्विजातिधर्मा इवेह कालेन ॥१२॥
दैवी छन्दोभाषा यथाऽभवद् ग्रन्थमात्रस्था।
तद्वद् ब्राह्मी भाषाऽप्येषाऽभूद् ग्रन्थमात्रस्था ॥१३॥

### नागरी भाषा

४— संप्रति भारतभाषा प्रवर्तते नागरीनाम्ना।
वैदेशिकसचिवास्त्विह तामाहुर्हैन्दवीं हिन्दीम् ॥१४॥

इति भारतीयभाषाप्रसङ्गः समाप्तः ॥६॥

# भारतीयभाषा-प्रसंग

## दैवी और ब्राह्मी भेद से भारतीय भाषा का दो प्रकार का होना

भारतवर्ष में काल-क्रम के अनुसार तीन प्रकार की भाषायें रही हैं। वे हैं — छन्दोभाषा (वैदिक भाषा), लौकिक भाषा (संस्कृत) और देवनागरी भाषा ॥१॥

## छन्दोभाषा

पाणिनि के समय भारतवर्ष में दो प्रकार की भाषायें रही हैं, जिनमें वैदिक भाषा दिव्य भाषा थी तथा भारत की प्रचलित भाषा ब्राह्मी थी ॥२॥

स्वर्ग की भाषा स्वर्ग के देवताओं में प्रचलित थी। देवताओं के उच्छेद को प्राप्त हो जाने पर वह भाषा अधःपतन को प्राप्त होने पर भी शास्त्रों के आधार पर स्थित है ॥३॥

## छन्दोभाषा का समस्त भाषाओं का मूल आधार होना

यह छन्दोभाषा ही समस्त विश्व की भाषाओं की जन्मदात्री है, जिसकी संस्कृत भाषा और असुर भाषा दो बड़ी पुत्रियाँ है ॥४॥

वर्तमान समय में तो संस्कृत से निकल कर अनेक भाषायें बन गई हैं और यूरोप की समस्त भाषायें आसुर भाषा से उत्पन्न हुई हैं ॥५॥

"जेन्दावास्ता" भाषा आसुर भाषाओं में सबसे प्रथम भाषा प्रतीत होती है तथा दूसरी आसुर भाषा हो सकती है और उससे अन्य अनेक भाषायें उत्पन्न हुईं ॥६॥

## छन्दोभाषा का ही इण्डोयूरोपियन भाषा होना

जिस भाषा को लोग इण्डोयूरोपियन भाषा के नाम से कहते हैं, वही कोई सी भाषा विश्व-भाषाओं की जननी है ॥७ ॥

मैं जानता हूँ कि वह मूल और आदि भाषा छन्दोभाषा ही थी। छन्दोभ्यस्ता और इसी प्रकार जेन्दावस्ता भाषा में परम्परागत छन्दोमयी रचना हुई है ॥८ ॥

## भारती भाषा

*अमरकोशकार के समय भारती भाषा ही ब्राह्मी भाषा के नाम से लोक में प्रसिद्ध थी। इसीलिए उन्होंने ऐसा कहा है ॥९ ॥

भारतवर्ष के लोग संस्कारों से संस्कृत (शुद्ध) हुए हैं और यह भारती भाषा मुनि पाणिनि द्वारा संस्कारित की गई है ॥१० ॥

## पूर्वी और उत्तरी भेद से ब्राह्मी भाषा का दो प्रकार का होना

उस काल में यह भारती ब्राह्मी भाषा लोकव्यवहार में प्रचलित थी। परन्तु उत्तर और पूर्व के लोगों में यह आंशिक रूप से भिन्न थी ॥११ ॥

यह भारती भाषा संस्कारों से भ्रष्ट होने पर विकारयुक्त होने के कारण उसी प्रकार रूपान्तर को प्राप्त हो गई जिस प्रकार ब्राह्मणधर्म का स्वरूप परिवर्तित हो गया है ॥१२ ॥

जिस प्रकार दैवी भाषा (छन्दोभाषा) मात्र ग्रन्थों में ही सीमित रह गई है उसी प्रकार ब्राह्मी भाषा भी अब मात्र ग्रन्थों में ही प्रयुक्त होकर स्थित है ॥१३ ॥

## नागरी भाषा

वर्तमान में भारतीय भाषा नागरी नाम से प्रचलित है। विदेशी महानुभाव तो इस हिन्दी भाषा को हिन्दुओं की भाषा कहते हैं ॥१४ ॥

**इस प्रकार भारतीयभाषा-प्रसंग समाप्त हुआ ॥६ ॥**

---

* "ब्राह्मी तु भारती भाषा" अमरकोश के टीकाकारों ने इस उक्ति के आधार पर ब्राह्मी, भारती और भाषा इन तीनों को सामान्य रूप से वाणी का पर्याय बताया है। यह अज्ञानता है, क्योंकि भाषा शब्द को वाणी का पर्याय मानना अनुचित है ॥

# मातृकाप्रसङ्गः ॥७॥ लिपिप्रसङ्गः ॥८॥

## (वर्णमातृका)

१— पथ्यास्वस्तिरिहासीद् देवयुगेऽक्षरसमाम्नायः।
सप्तनवतिरिह वर्णाश्छन्दोभाषानुगा उक्ताः ॥१॥
यो ब्रह्मराशिरुक्तो वर्णसमाम्नाय उत्तरे तु युगे।
स चतुःषष्ट्या वर्णैः संस्कृतभाषां प्रवर्तयति ॥२॥
"त्रिषष्टिर्वा चतुःषष्टिर्वर्णाः संभवतो मताः।"
प्राकृते संस्कृते वापि स्वयं प्रोक्ताः स्वयंभुवा॥
इत्थं पाणिनिरवदद् बहुपूर्वं त्वेष भारते जज्ञे।
पथ्यास्वस्तिरिति प्राग् वेदयुगे वर्णमातृकासंज्ञा ॥३॥
मन्ये ततः स्वयंभूरक्षरमालामिमां ब्राह्मीम्।
वेदाभिज्ञानार्थं विनिर्ममे सर्वतः पूर्वम्॥
या वर्णमातृकेयं पञ्चाशद्वर्णतः कृताऽद्यास्ति।
कातंत्रकल्पिता सा वर्तयते नागरीं भाषाम् ॥४॥

इति भारतपरिचये वर्णमातृकाप्रसङ्गः ॥७॥

# मातृका-प्रसंग ॥७॥ लिपिप्रसङ्ग ॥८॥

## वर्णमातृका (वर्णमाला)

देवकाल में परम्परागत अक्षरों के संग्रह के लिए "पथ्यास्वस्ति" नामक वर्णमाला थी, जिसमें छन्दोभाषा के विद्वानों के अनुसार सत्तानवें (९७) वर्ण थे ॥१॥ वेदोत्तर काल में जो ब्रह्मराशि नामका वर्णों का संग्रह कहा गया है, उसमें चौसठ वर्णों से संस्कृत भाषा को उत्पन्न किया है ॥२॥

मुनि पाणिनि कहते हैं कि इस प्राकृत भाषा अथवा संस्कृत भाषा में तरेसठ अथवा चौसठ वर्ण हैं, जो स्वयं ब्रह्मा के मुख से निःसृत हैं।

इस प्रकार भारतवर्ष में उत्पन्न पाणिनि ने बहुत पहले ही कह दिया था कि वेदयुग में "पथ्यास्वस्ति" नाम की वर्णमाला थी ॥३॥

हमारा मानना है कि उसी "पथ्यास्वस्ति" वर्णमाला से ही स्वयंभू ब्रह्मा ने वेदार्थज्ञान के लिए सर्वप्रथम ब्राह्मी वर्णमाला की रचना की तथा आज जो पचास वर्णों की देवनागरी वर्णमाला है वह "मुनि कातन्त्र" द्वारा बनाई हुई है ॥४॥

**भारतपरिचय में वर्णमातृका-प्रसंग समाप्त ॥७॥**

## भारतीयब्राह्मीलिपेरद्य प्रचारलोपः।

लिपिरपि खल्वार्याणां ब्राह्मी लिपिरेव सर्वतः पूर्वम्।
उदभूद् ब्राह्मी भाषा चेत्युक्तं भारते शान्तौ ॥५॥
"इत्येते चतुरो वर्णा येषां ब्राह्मी सरस्वती।
विहिता ब्रह्मणा पूर्वं लोभात् त्वज्ञानतां गताः ॥"(महाभा.शान्ति.१८८।१५)
ब्राह्मी भाषा संस्कृतभाषेयं ब्राह्मणैरल्पैः।
विज्ञायते न सर्वैर्ब्राह्मी तु लिपिर्न लिख्यते ह्यधुना ॥६॥

## (१) आजकल भारतीय ब्राह्मी लिपि के प्रचार का लोप हो जाना

महाभारत के शान्ति पर्व में लिखा है कि आर्यों की सर्वप्रथम लिपि ब्राह्मी लिपि ही थी, जिससे ब्राह्मी भाषा उत्पन्न हुई ॥५॥

इस प्रकार ये चारों वर्ण, जिनकी भाषा ब्राह्मी भाषा थी, जो ब्रह्मा द्वारा सर्वप्रथम बनाई गई थी, किन्तु वह लोभ के कारण अज्ञानता को प्राप्त हो गई अथवा लुप्त हो गई ॥(महा.भा.शांति. १८८/१५)

यह ब्राह्मी भाषा संस्कृत भाषा है, इसे कुछ थोड़े से ब्राह्मण लोग ही जानते हैं, सभी लोग नहीं जानते, तथा ब्राह्मी लिपि तो आजकल लिखी ही नहीं जाती है ॥६॥

## वेदमन्त्रनिर्माणकाले लिपिसामान्याभावमतखण्डनाय श्रुतिशब्द-व्यपदेशस्य मौलिकरहस्योपपादनम्।

२— ऋग्वेदश्रुतिनिर्मितिकाले काचिल्लिपिर्नासीत्।
अत एव कण्ठपाठश्रवणाच्छ्रुतयः श्रुता वेदाः ॥७॥
इत्थं ब्रुवते केचित् पाश्चात्याः कल्पनारसिकाः।
अनभिज्ञास्ते नूनं भारतवैदिकरहस्यविज्ञाने ॥८॥
विबुधैस्तु भारतीयैः संकेतित एष यत्रार्थे।
श्रुतिशब्दः प्राक् कालात् तं संकेतं प्रवक्ष्यामि ॥९॥
सत्यानां धर्माणां ज्ञाने हेतुः प्रमाणमित्युक्तः।
प्रत्यक्षं ह्यनुमानं शास्त्रं चेति त्रिधा तत्स्यात् ॥१०॥
दृष्टिः श्रुतिः स्मृतिर्वा निबन्ध इति हेतवो ज्ञाने।
दृष्टेः प्रत्यक्षत्वं शास्त्रत्वं तु श्रुतिस्मृत्योः ॥११॥
चक्षुषि सत्यं निहितं चक्षुर्गृहणात्यदोषमनुपाधि।
एकं तदेव मुख्यं प्रमाणमन्यत्तु तदपेक्षम् ॥१२॥
वाक्यानपेक्षवाक्यं श्रुतिरिति मीमांसया सिद्धम्।
दृष्टिः श्रुतिरेकोर्थो वेदाः प्रत्यक्षमित्याहुः ॥१३॥
द्रष्टुर्वाक्यं श्रुतिरिति संकेतो दृष्टिमूला सा।

दृष्टा दृष्टं ब्रूते श्रृणुते श्रोता च दृष्टमेवार्थम् ॥१४॥
द्रष्टिः स्वतःप्रमाणं द्रष्टुर्वाक्यं स्वतःप्रमाणं स्यात्।
प्राथमिकं तज्ज्ञानं न ज्ञानाज्ज्ञानमवतीर्णम् ॥१५॥
श्रोतुर्वाक्यं स्मृतिरिति संकेतो नात्र वक्ताऽयम्।
स्वीयां दृष्टिं ब्रूते परानुभूतं गिराऽभिनयेत् ॥१६॥
स्मृतिरिति मतमनुमानं तल्लिङ्गज्ञानतो ज्ञानम्।
नाप्तः स्वयं स वक्ता श्रुतवानाप्तात् स्मृतः सोऽर्थः ॥१७॥
परपुरुषीयप्रत्ययने योऽस्य प्रत्ययस्तस्मात्।
परतःप्रमाणमेतद्वाक्यं वाक्यान्तरापेक्षम् ॥१८॥
द्रष्टुवाक्यं यावन्नोपष्टम्भकतयाऽयमाश्रयते।
न च तावत्स्वं वाक्यं शक्नोत्येष प्रमाणयितुम् ॥१९॥
इत्थं शास्त्रं द्विविधं स्वतःप्रमाणं परप्रमाणं च।
नातः परं तृतीयं शास्त्रं संभाव्यते किमपि ॥२०॥
परतःप्रमाणशास्त्रे यत्र द्वैविध्यमापतति।
विप्रतिपत्तावन्योऽनुमानमत्र प्रवर्तयति ॥२१॥
अनुमानाद् यद्युभयोर्विरुद्धवाचोः स तात्पर्यम्।
पृथगिव नीत्वा सत्यं गृहणीयात्स हि निबन्धः स्यात् ॥२२॥
अपि च निबन्धं शास्त्रं मन्यन्ते तस्य शास्त्रत्वम्।
शास्त्रानुबन्धतः स्यादुपचारात् सोस्ति तर्कस्तु ॥२३॥
सर्वमपीदं वाङ्मयमित्थं त्रेधा प्रमाणं स्यात्।
यत् पुनरेभ्यो भिन्नं तदप्रमाणं प्रलापः सः ॥२४॥
न तु केवलमिदमित्थं भारत एव प्रमाणमुपपाद्यम्।
देशेषु किन्त्वशेषेष्वशेषभाषास्विदं तुल्यम् ॥२५॥
किन्त्विह भारतवर्षे तदिदं मीमांसितं तस्मात्।
संकेताय नियुक्ताः श्रुतिस्मृतिप्रभृतयः शब्दाः ॥२६॥
इति पूर्वेषां विदुषां संकेतं ये न जानन्ति।
भ्रान्तं श्रुतिशब्दार्थं प्रकल्प्य ते भ्रामयन्त्यन्यान् ॥२७॥
इह भारतीयविद्यारहस्यशिक्षामनासाद्य।
भारतशास्त्रपदानां विक्षेपणमित्थमन्याय्यम् ॥२८॥
न ह्येष श्रुतिशब्दो मन्त्रार्थे मन्त्रसंहितासूक्तः।
लिपिकाले त्वविशेषान्मन्त्रे च ब्राह्मणे चोक्तः ॥२९॥
श्रवणाच्छ्रुतिरभविष्यच्छ्रुतिशब्दस्तर्ह्यवश्यमभविष्यत्।
ऋग्वेदेऽप्युल्लिखितः किंतु न लिपिशब्दवत्स तत्रास्ति ॥३०॥

श्रवणाद्यदि श्रुतिः स्याच्छ्रुतिशब्दस्तर्हि न प्रयुक्तः स्यात्।
लिपिकालोत्पन्नेषु ग्रन्थेषु ब्राह्मणाख्येषु ॥३१ ॥

## (२) वैदिक मंत्रों के निर्माणकाल में लिपि का सामान्यतः अभाव था, इस मत के खण्डन के लिए श्रुति शब्द के व्यवहार के मौलिक अर्थ का प्रस्तुतिकरण

ऋग्वेदश्रुति-निर्माण के समय कोई लिपि नहीं थी, इसलिए मात्र कण्ठ से उच्चारण किये हुये को कानों से सुने हुए होने के कारण ही वेदों को श्रुति कहा जाता है। ।७ ॥

इस प्रकार कुछ पाश्चात्य विद्वान् कहते हैं, जो मात्र कल्पना-प्रिय हैं और भारतीय वैदिक ज्ञान के रहस्य से पूर्णतः अनभिज्ञ हैं ॥८ ॥

प्राचीनकाल से ही भारतीय विद्वानों द्वारा यह "श्रुति" शब्द जिस अर्थ में निर्धारित किया गया है, मैं उस संकेत के संबंध में कहता हूँ ॥९ ॥

सत्य धर्मों के ज्ञान में जो हेतु हैं वह प्रमाण है और ये प्रमाण प्रत्यक्ष, अनुमान और शास्त्र तीन प्रकार के हैं ॥१० ॥

ज्ञान के विषय में तीन कारण प्रमुख माने गये हैं। वे हैं-दृष्टि, श्रुति और स्मृति अथवा निबन्ध। नेत्रों से देखा गया तथ्य प्रत्यक्ष प्रमाण है और श्रुति तथा स्मृति प्रमाण शास्त्र ज्ञान है ॥११ ॥

नेत्रों में केवल सत्य ही धारणा किया जा सकता है, क्योंकि नेत्र केवल प्रत्यक्ष, दोष-रहित और आडम्बर-रहित तथ्य को ही स्वीकार करते हैं। इसलिए यह प्रत्यक्ष प्रमाण ही एक मात्र प्रमुख प्रमाण है, अन्य प्रमाणों को भी इसी प्रमाण की आवश्यकता होती है ॥१२ ॥

मीमांसा से सिद्ध होता है कि "प्रत्यक्षद्रष्टा के वचन में किसी अन्य प्रामाणिक वचन की आवश्यकता नहीं होती है।" द्रष्टा का वचन भी श्रुति है। वेद प्रत्यक्ष शास्त्र है अर्थात् प्रत्यक्ष मंत्रद्रष्टा के वचन हैं ॥१३ ॥

द्रष्टा के वाक्य ही श्रुति (श्रवण योग्य) हैं। इस आधार पर श्रुति के मूल में दृष्टि ही प्रमुख है द्रष्टा जो कुछ प्रत्यक्ष देखता है, श्रोता उसी प्रत्यक्ष-द्रष्टा के मुख से श्रवण करता है। अतः वह श्रुति-ज्ञान भी मूलतः दृष्ट-ज्ञान ही है ॥१४ ॥

दृष्टि स्वतः प्रमाण है (वह वस्तुस्थिति को प्रत्यक्ष देखती है), अतः द्रष्टा के वाक्य भी स्वतः प्रमाण हैं, जिसे अन्य किसी प्रमाण की आवश्यकता नहीं है। द्रष्टा का ज्ञान सर्वप्रथम अथवा मूल ज्ञान होता है न कि किसी अन्य ज्ञान के आधार पर प्राप्त किया गया ज्ञान होता है ॥१५ ॥

श्रोता का वाक्य "स्मृति" है, इस नियम के आधार पर स्मृति में वक्ता अपने द्वारा दृष्ट ज्ञान को नहीं कहता अपितु दूसरे के द्वारा कथित वाक्य का अपनी वाणी के द्वारा अनुगमन करता है ॥१६ ॥

स्मृति केवल अनुमान मात्र है, जिसमें लिङ्ग ज्ञान से ज्ञान प्राप्त होता है, (यथा-धुआँ से पर्वत पर अग्नि का अनुमान होता है) यहाँ, वक्ता स्वयं दृष्ट-ज्ञान से युक्त नहीं है, अपितु आप्त पुरुषों के वचन का श्रवण करने वाला है ॥१७॥

दृष्टि ज्ञान रखने वाले पुरुष के विश्वास पर जो हमारा विश्वास होता है, वह वाक्य परतः प्रमाण है और वाक्यान्तर की अपेक्षा रखता है॥ ऐसा व्यक्ति द्रष्टा के वाक्य को प्रधानता से ग्रहण नहीं करता है तब तक वह अपने वाक्य को प्रमाणित नहीं कर सकता है ॥१८-१९॥

इस प्रकार शास्त्र दो प्रकार के हैं —स्वतः प्रमाण और परतः प्रमाण। इन दोनों के अतिरिक्त अन्य कोई तीसरा शास्त्र नहीं है ॥२०॥

परतः प्रमाण शास्त्र में जहाँ कोई द्वैविध्य आ जाता है, ऐसे विवाद-ग्रस्त स्थान पर तीसरे अनुमान प्रमाण की प्रवृत्ति होती है ॥२१॥

अनुमान प्रमाण से दोनों विरुद्ध वाणियों से पृथक् तात्पर्य निकालता हो तो उसमें सत्य का ग्रहण किया जाता है वही निबन्ध समझना चाहिये ॥२२॥

यदि निबन्ध को शास्त्र मानते हैं तो उसका शास्त्रत्व अनुमान के द्वारा शास्त्र के अनुबन्ध से जाना जाता है। और वह उपचार से (अनुमान) तर्क ज्ञान है ॥२३॥

इस प्रकार सम्पूर्ण वाङ्मय अथवा शास्त्र इन्हीं तीन प्रमाणों के आधार पर स्थित है। इन तीनों प्रमाणों के अतिरिक्त यदि कोई प्रमाण है, तो वह अनर्गल प्रलाप (तथ्यहीन बातचीत) ही होगा ॥२४॥

न केवल भारतवर्ष में ही ये तीन प्रमाण उचित माने गये हैं अपितु अन्य समस्त देशों में और समस्त भाषाओं में इनको उचित माना गया है ॥२५॥

किन्तु भारतवर्ष में ही इस संबंध में गहन विचार हुआ है, अनुसन्धान हुआ है इसलिए मात्र प्रतीक रूप से इनके लिए श्रुति, स्मृति इत्यादि शब्द निर्धारित कर दिये गये हैं ॥२६॥

इस प्रकार प्राचीन विद्वानों के इन संकेत अथवा प्रतीकात्मक शब्दों के संबंध में कुछ नहीं जानते हैं, वे श्रुति शब्द के भ्रामक अर्थ की कल्पना करके दूसरों को भी भ्रम में डालते हैं ॥२७॥

इस भारतीय विद्या के वास्तविक रहस्यज्ञान को बिना समझे भारतीय शास्त्र में प्रयुक्त शब्दों का विक्षेपण इनके प्रति घोर अन्याय करना है ॥२८॥

यह श्रुति शब्द मंत्रसंहिताओं में मंत्र के अर्थ में नहीं बताया गया है अपितु लिपिकाल में मंत्र और ब्राह्मण दोनों के लिए श्रुति शब्द समान रूप से प्रयुक्त हुआ है ॥२९॥

श्रवण से यदि श्रुति शब्द निष्पन्न होता है तो ऋग्वेद में भी अवश्य श्रुति शब्द का उल्लेख किया गया होता परन्तु वहाँ लिपि शब्द के समान इसका उल्लेख नहीं है।।३०॥

यदि श्रवणपरम्परा से ही श्रुति शब्द निष्पन्न हुआ है तो लिपिकाल में विरचित ब्राह्मण ग्रन्थों में तो श्रुति शब्द का प्रयोग नहीं हुआ होता ॥३१॥

मंत्रनिर्माणकाले लिपिसत्त्वे वैदिकं प्रथमं प्रमाणम् ॥१ ॥

३— अपि च ब्रुवते केचिद् लिपिरभविष्यत्तु वेदसमये चेद्।
लिपिलेखनीमसीनामप्यभविष्यत् क्वचनोल्लेखः ॥३२ ॥
तत्र ब्रूमो लिप्युल्लेखार्थो न प्रसङ्ग आयातः।
तेन स तत्र न दृष्टो न तु हेतुर्लिप्यभावे सः ॥३३ ॥
श्रुतिशब्दोऽपि तु मंत्रे मंत्रपरत्वेन न क्वचिद्दृष्टः।
अथ मन्यसे तु मंत्रे श्रुतिशब्दं तद्वदिह विद्यात् ॥३४ ॥
अथवा दृश्यत एव तु वेदे लिखनार्थशब्दोऽपि।
लेखन्याश्च लिपेरपि सत्त्वं शक्यं ततो ज्ञातुम् ॥३५ ॥
यजुषश्च संहितायाः पञ्चदशेऽध्याय आम्नातम्।
छन्दः क्षुरोभ्रज इति क्षुरधातुर्विलिखने दृष्टः ॥३६ ॥
"अक्षरपंक्तिश्छन्दः, पदपंक्तिश्छन्दो विष्टारपंक्तिश्छन्दः।
क्षुरोभ्रजश्छन्दः ॥३७ ॥ (इति यजुःसंहिता १५ ।४)
कस्याञ्चिच्छाखायां तु—'क्षुरश्छन्दः, भ्रजश्छन्दः—" इति
पृथक्त्वेनाम्नायते ॥

तत्राप्यक्षरपदयोः साहचर्य्यादिह लोहनिर्मिता पूर्वयुगीया लेखन्येव क्षुरः संभाव्यते। पुरायुगे सूक्ष्मखनित्रेणैव सूच्याकारेणाक्षरलिपेः क्रियायाः संभाव्यमानत्वात्। भ्रज इति पत्रोल्लिखिता प्रकाशमाना वागेव स्यात्।

अक्षरपंक्तिर्वर्णैः पदपङ्क्तिः स्यात् पदैर्यथा वाक्यैः।
विष्टारपंक्तिरेवं क्षुरोभ्रजो लिपिकृतं मन्ये ॥३८ ॥
क्षुरसा लेखन्या या लिखनाद् भ्राजेत दृश्येत।
लिपिरेव सा तु वाक् स्याच्छन्दस्तच्च क्षुरोभ्रजो नाम ॥३९ ॥
छन्दः सर्वं वाङ्मयमक्षरपदवाक्यसाहचर्य्याच्च।
अक्षरलिखनादन्यद् विलिखनमिह नोपपद्येत ॥४० ॥

## (३) मंत्रनिर्माणकाल में लिपि की विद्यमानता के लिए पहला वैदिक प्रमाण

कुछ लोगों का कहना है कि यदि वैदिक काल में लिपि रही होती तो अवश्य ही वेदों में कहीं न कहीं लेखनसामग्री यथा लेखनी, स्याही इत्यादि का भी उल्लेख किया गया होता ॥३२ ॥

इस संबंध में हमारा कहना है कि वेदों में कहीं लिपि का कोई प्रसंग नहीं आया, इसलिए इस सामग्री का वहाँ कोई उल्लेख नहीं हुआ। इससे यह तात्पर्य नहीं है कि लेखनसामग्री के उल्लेख के कारण ही वहाँ लिपि का अभाव था ॥३३ ॥

ऐसा कहीं भी दिखाई नहीं देता है कि श्रुति शब्द का किसी मंत्र में मंत्रपरक उल्लेख हुआ हो, और यदि मंत्र में श्रुति शब्द को मंत्रपरक मानते हैं तो यहाँ भी मानना चाहिये ॥३४ ॥

अथवा वेदों में लेखन के अर्थ को प्रकट करने वाले शब्दों की विद्यमानता देखी भी गई है तथा लेखनी शब्द से लिपि की सत्ता का ज्ञान भी स्वतः हो सकता है ॥३५ ॥

यजुर्वेद संहिता के पन्द्रहवें अध्याय में स्पष्ट लिखा है कि "क्षुर" अर्थात् लोहनिर्मित लेखनी से प्रकाशमान (पत्रोल्लिखित) छन्द है। (इस प्रकार क्षुर शब्द धातु की लेखनी के लिए प्रयुक्त हुआ है) अतः धातु की लेखनी से लिखना स्पष्ट प्रतीत होता है ॥३६ ॥

यजुर्वेद में लिखा है—"अक्षरों का संग्रह वेद है, शब्दसमूह वेद है, वाक्यसमूह वेद है, क्योंकि यजुर्वेद में लिखा है—क्षुर से प्रकाशमान ही छन्द है ॥३७ ॥ (यजु. १५/४)

यजुर्वेद की ही किसी अन्य शाखा में तो इस प्रकार लिखा है — क्षुर (लेखनी) वेद है, भ्रज ही छन्द है। इस प्रकार लेखनी और पत्र के संबंध में पृथक् रूप से लिखा है। यहाँ भी अक्षर और पद के साहचर्यवर्णन से स्पष्ट होता है कि प्राचीनकाल में लोह-निर्मित लेखनी को ही "क्षुर" कहा जाता होगा। इस प्रकार लोह-निर्मित लेखनी से प्रतीत होता है कि प्राचीन काल में सूक्ष्म खुदाई की विधि से सुई की नोंक के समान सूक्ष्म आकृति के अक्षरों की लिपि की सत्ता की संभावना हो सकती है। "भ्रज" शब्द से तात्पर्य पत्र पर लिखी हुई प्रकाशमान वाणी ही है।

जिस प्रकार वर्णों से अक्षरपंक्ति होती है, पदों से पदपंक्ति और वाक्यों का समूह विष्टारपंक्ति है उसी प्रकार क्षुर से प्रकाशमान तो लिपिकृत ही हो सकता है ॥३८ ॥

सारा वाङ्मय छन्द है। अक्षर, पद और वाक्य के साहचर्य से सम्पूर्ण वाङ्मय ही छन्द है। अक्षर से तात्पर्य लिखने से ही है और कोई लेखन संगत नहीं होता है ॥४० ॥

**मन्त्रनिर्माणकाले लिपिसत्त्वे वैदिकं द्वितीयं प्रमाणम् ॥२ ॥**

**४— अन्यच्च तत्र काले लिपिसत्त्वेऽस्ति प्रमाणमत्रैव।**
**विद्यासूक्ते वक्ति हि वृहस्पतिर्दर्शनं वाचाम् ॥४१ ॥**
**"उत त्वः पश्यन्न ददर्श वाचमुत त्वः श्रृण्वन्न श्रृणोत्येनाम्।**
**उतो त्वस्मै तन्वं वि सस्रे जायेव पत्य उशती सुवासाः" ॥४२ ॥**
**(ऋ.सं. १० ।७१ ।४)**

**वाचामुच्चरितानां श्रवणं नु यथा तथैव लिखितानाम्।**
**वाचां ग्रन्थमयीनां दर्शनमुपपद्यतेऽर्थबोधाय ॥४३ ॥**
**मूर्तिं विना च वाचं दर्शनमुपपद्यते क्वापि।**
**तस्माल्लिपिरिह वाचं मूर्तिरवश्यं तदाप्यासीत् ॥४४ ।**
**लिपिसंकेताविज्ञः पश्यन्न च तां ददर्श वाक्त्वेन।**
**श्रृण्वन्न श्रृणोत्येतां वेत्ति न यस्त्वर्थसंकेतम् ॥४५ ॥**

**वैदिकं द्वितीयं प्रमाणम् ॥इति ॥**

## (४) मंत्रनिर्माण-काल में लिपि की सत्ता में द्वितीय वैदिक प्रमाण

वैदिक काल में भी लिपि थी इसके लिए वेद में ही प्रमाण मिलता है। जैसा कि विद्यासूक्त में बृहस्पति ने वाणी का दर्शन किया है, ऐसा उल्लेख मिलता है ॥४१ ॥

जैसा कि ऋग्वेद संहिता में लिखा है "एक तो वाणी को देखता हुआ भी अज्ञानतावश नहीं देखता है और दूसरा इस वाणी को सुनकर भी नहीं सुनता है। वह वाणी अपने ज्ञान रूप को स्वयं किसी के पास इस प्रकार प्रकट करती है, जैसे पति के सुख के लिए सुन्दर स्त्री अपना सुन्दर रूप पति के सामने स्वयं प्रकट करती है ॥४२(१०/७१) ॥

उच्चारित वाणी का जिस प्रकार श्रवण होता है उसी प्रकार ग्रन्थलिखित वाणी का अर्थज्ञान के लिए दर्शन होता है ॥४३ ॥

आकृति के बिना वाणी का कहीं दर्शन ही नहीं हो सकता है। अतः उस काल में वाणी की मूर्ति रूपी लिपि अवश्य ही विद्यमान थी ॥४४ ॥

लिपि-संकेत को न जानने वाला उसको देखकर भी उसे वाणी के संकेत के रूप में नहीं देख सकता और अर्थसंकेत को न जानने वाला सुनकर भी नहीं सुनता है। ।४५ ॥

**द्वितीय वैदिक प्रमाण समाप्त**

## वैदिकं तृतीयं प्रमाण ॥३ ॥

५— अपि च पुरा देवयुगे सत्त्वे कस्याश्चिदेव देवलिपेः।
मन्त्रकृतामाचारं वीक्षे नूनं प्रमाणतया ॥४६ ॥
कुत्सनृपो गन्धर्वो हतराज्यो दस्युभिः पुराकाले।
विकलश्चिन्तामापत् तं प्रति घोरः प्रगाथ इत्याहुः ।४७ ॥
*मा चिदन्यद्वि शंसत सखायो मा रिषण्यत।
इन्द्रमित्स्तोता वृषणं सचा सुते मुहुरुक्था च शंसत ॥४८ ॥(८.।१ ।१)
प्रास्मै गायत्रमर्चत वावातुर्यः पुरन्दरः ॥४९ ॥(८ ।१ ।८)
याभिः काण्वस्योप बर्हिरासदं यासद्वज्री भिनत् पुरः।
इत्यादिष्टः कुत्सः शक्रमुपेत्येन्द्रसखकाण्वः।
गीतान्याह्वानार्थं न्यवेदयद् भद्रसूक्तानि ॥५० ॥
आ याहि कृणवाम त इन्द्र ब्रह्माणि वर्द्धना।
येभिः शविष्ठ चाकनो भद्रमिह श्रवस्यते ॥
भद्रा इन्द्रस्य रातयः ॥५१ ॥(८ ।६२ ।४)

---

* प्रगाथः काण्व आह—हे सखायः (कुत्सप्रभृतयः) अन्यत् किञ्चिदपि मा प्रस्तावयत। मा चानेन राज्यहरणादिदुःखेनातितरां चिन्ताविह्वलितान्तरा भवत। स चासह संघीभूय सर्वे सोमोऽभिषुते सर्वकामप्रवर्षकं भगवन्तमिन्द्रमेवाश्रयत। उक्था = उक्थैर्वाक्यैश्च तमेवैकं मुहुः प्रार्थयत ॥(८ ।१ ।१) अपि च — अस्मै इन्द्राय गायत्रं प्राणत्राणहेतुभूतं प्रार्थनापत्रं प्रार्चत विशिष्यार्पयत।

यच्चिद्धि त्वा जना इमे नाना हवन्त ऊतये।
अस्माकं ब्रह्मेदमिन्द्र भूतु तेऽहा विश्वा च वर्द्धनम्॥५२॥(८।१।३)
एन्द्र याहि मत्स्व चित्रेण देव राधसा॥
सरो न प्रास्युदरं सपीतिभिरा सोमेभिरुरु स्फिरम्॥५३॥(८।१।२३)
एन्द्र याहि हरिभरुप कण्वस्य सुष्टुतिम्।
दिवो अमुष्य शासतो दिवं यय दिवावसो॥५४॥(८।३४।१)
कण्वानां तु न चैषां स्वर्गे गमनं श्रुतं तदा काले।
लिखितं विना नु भारतभूस्थैः शक्यं स आहवः कर्तुम्॥५५॥
तस्मादवश्यमेते विलिख्य कण्वा इमानि सूक्तानि।
इन्द्रस्यागमनार्थं कुत्सकरात् प्रेषयामासुः॥५६॥
मन्यामहे ततः प्राग् वैदिकमन्त्रावतारकालेपि।
आसील्लिपिप्रचारो विबुधैरुद्भावितः कुशलैः॥५७॥

## (५) तृतीय वैदिक प्रमाण

और प्राचीन देवकाल में किसी भी दैवी लिपि की विद्यमानता होने से ही मंत्र निर्माण करने वालों के आचरण का हमें ज्ञान होता है॥४६॥

प्राचीन काल में कुत्सनरेश गन्धर्व एक बार दैत्यों द्वारा राज्य छीन जाने पर अत्यन्त विकल हो गया। तब चिन्ताग्रस्त गन्धर्व राजा को घोर प्रगाथ ने इस प्रकार कहा ॥४७॥

*घोर प्रगाथ कहते हैं— हे मित्रो! तुम किसी अन्य देव की स्तुति मत करो। किसी दूसरे देव की स्तुति करके दुःखी मत होओ। सोम रस के सवन-याग में बलशाली इन्द्र की एक साथ मिलकर स्तुति करो। इन्द्र के स्तोत्रों को बार-बार बोलो॥४८॥(८/१/१)

जो शत्रुओं की नगरी के दुर्गों का विध्वंसक इन्द्र है, उसके लिए गायत्री छन्द में बनी हुई स्तुति गाओ। जिन स्तुतियों से प्रेरित होकर इन्द्र कण्व पुत्रों के यज्ञ के आसन के पास जावे तथा हाथ में वज्रधारण करके शत्रु के नगरो को तोड़े॥४९॥(८।१।८)

इस प्रकार आदेश प्राप्त कुत्स ने इन्द्र के पास जाकर इन्द्र के मित्र कण्वपुत्रों द्वारा भेजे गये आह्वानार्थ भद्र सूक्त निवेदित कर दिये॥५०॥

हे इन्द्र !आओ, हम तुम्हारे उत्साहवर्धक स्तोत्रों का गान करेंगे। हे बलवान् इन्द्र! जिनके द्वारा यहाँ यश की इच्छा करने वाले का कल्याण करना चाहता है। इन्द्र के धन कल्याणकारी हैं॥५१॥ (८/६२/४)

---

* कण्व के पुत्र प्रगाथ बोले — कुत्सादि हे मित्रो! और कुछ मत कहो। राज्यहरणादि दुःखों से अधिक प्रभावित मत होओ। सभी लोग एक साथ एकत्रित होकर सोम का सवन करने के लिए, सभी कामनाओं को देने वाले भगवान् इन्द्र का ही आश्रय ग्रहण करो। उक्था वाक्यों से उसी की प्रार्थना करो। इस इन्द्र के लिए प्राण-रक्षा के हेतुभूत गायत्र नाम के प्रार्थनापत्र को विशेष रूप से अर्पित करो।

हे इन्द्र ! ये प्रजायें स्तुति करती हैं। अपनी रक्षा के लिए तुझे अनेक प्रकार से बुलाती हैं तब भी प्रतिदिन हमारी स्तुति ही तुम्हारी महिमा को बढ़ाने वाली हो ॥५२ ॥(८/१/३)

हे इन्द्र ! तुम आओ और हमें इच्छित धन देकर आनन्दित करो। सुनहरे रंग के सोम रस से तुम विशाल और सुनहरे रंग के विशाल सोमरस के तालाब को पूर्ण कर दो ॥५३ ॥(८/१/२३)

हे इन्द्र ! तुम अपने घोड़ों से कण्व की स्तुति के पास आओ। हे द्युलोकवासी इन्द्र इस द्युलोक का शासन करने वाले तुम फिर द्युलोक को जाओ ॥५४ ॥ (८/३४/१)

उस काल में इन कण्वों का स्वर्ग गमन नहीं सुना गया। भारत-भूमि पर रहने वाले इन कण्वों द्वारा बिना लिखे यह आह्वान किया जाना सम्भव नहीं था ॥५५ ॥

इसी कारण इन कण्वों ने अवश्य ही इन सूक्तों को लिखखर कुत्सराज: के हाथों इन्द्रागमन के लिए भेजा ॥५६ ॥

इसलिए हम मानते हैं कि वैदिक मंत्रों के निर्माण-काल से भी पूर्वकाल में कुशल विद्वानों द्वारा उद्भावित लिपि का प्रचार था ॥५७ ॥

## मन्त्रनिर्माणकाले लिपिसत्त्वे चतुर्थं प्रमाणम् ॥४ ॥

६— ऋज्राश्वो नामासीत् पश्चिमभारत ऋषिः कश्चित्।
जरदस्त्रस्तस्याभूद्दौहित्रो ब्राह्मणद्वेषी ॥५८ ॥
ब्राह्मणविद्वेषात् स हि तेषां ब्राह्मीं लिपिं त्यक्त्वा।
विपरीतां तु खरोष्ठीं लिपिमन्यां कल्पयामास ॥५९ ॥
ब्राह्मी वामाद्दक्षिणमेति खरोष्ठी तु दक्षिणाद्वामम्।
शाकद्वीपेऽन्यत्र च लिपिः खरोष्ठी प्रचलिताभूत् ॥६० ॥
अस्याः पुनः खरोष्ठ्या विकारतोऽनेकलिपयः स्युः।
विपरीताचरणादथ जरदस्त्रमतानुगा मगाः ख्याताः ॥६१ ॥
शाकद्वीपिमगा इह पणिभिः सह भारतेऽभ्येत्य ॥
कीकटदेशे न्यूषुस्तं देशं मगधमाचख्युः ॥६२ ॥
तेषां प्रसङ्गतस्त्विह लिपिः खरोष्ठी समागता मगधे ॥
ब्राह्मी लिपिरासीत् प्राक् तेन द्विविधा लिपिः प्रचरिताऽत्र ॥६३ ॥
ब्राह्म्या बह्वयो विकृतय आसन् खरोष्ठ्याश्च।
ता अपि वामाद्दक्षिणमथ वामं दक्षिणादायन् ॥६४ ॥
मगधे पाटलिपुत्रे बभूव सम्राडशोकः प्राक्।
स लिपी उभयविधे अपि निजराष्ट्रे वर्तयमास ॥६५ ॥
इत्थं द्विविधो लेखो वामावर्ती च दक्षिणावर्ती।
अद्यावधि प्रचरितो लोके सर्वत्र दृश्यते प्रायः ॥६६ ॥
वामावर्तिन्यास्त्विह जरदस्त्रो जन्मदो लिप्याः।

ब्राह्मीलिपेर्विरोधादेष च भिन्नक्रमं लिपौ चक्रे ॥६७॥
तेन स्पष्टं सिध्यति जरदस्त्रस्यास्य जन्मतः पूर्वम्।
ब्राह्मी लिपिः प्रचरिता सर्वत्रासीत् पुराकालात् ॥६८॥

## (६) मंत्रनिर्माण-काल में लिपि की विद्यमानता में चतुर्थ प्रमाण

पश्चिम भारत में ऋज्राश्व नाम का कोई ऋषि था। जरदस्त्र नाम का जिसका दौहित्र था, वह ब्राह्मणों से द्वेष रखता था ॥५८॥

ब्राह्मणों से द्वेष रखने के कारण उसने ब्राह्मणों से सम्बद्ध ब्राह्मी लिपि को छोड़कर, विपरीत (उल्टे) क्रम से लिखी जाने वाली खरोष्ठी नाम की लिपि कल्पित की ॥५९॥

ब्राह्मी लिपि बाँई ओर से दाहिनी ओर लिखी जाती है, जबकि खरोष्ठी लिपि दाहिनी ओर से बांई ओर लिखी गई। यह लिपि शाकद्वीप तथा अन्य देशों में प्रचलित हुई ॥६०॥

इस खरोष्ठी लिपि के विकार से अनेक लिपियाँ उत्पन्न हुईं। जरदस्त्र के अनुयायी लोगों का आचरण लिपि के समान ही विपरीत था। अतः विपरीत आचरण के कारण वे लोग "मग" कहलाये ॥६१॥

शाकद्वीप के रहने वाले मग जाति के लोग यहाँ के पणियों के साथ भारतवर्ष आये और "कीकट देश" में निवास करने लगे। इसीलिए वह स्थान "मगध" कहलाया ॥६२॥

उन्हीं मग जाति के लोगों के साहचर्य्य से मगध में भी खरोष्ठी लिपि व्यवहार में आने लगी। वहाँ पहले से ब्राह्मी लिपि चलती थी। इस प्रकार वहाँ दोनों प्रकार की लिपियों का प्रचार हुआ ॥६३॥

ब्राह्मी लिपि तथा खरोष्ठी दोनों ही लिपियों में अनेक प्रकार की परस्पर विकृतियाँ आ गईं। ब्राह्मी लिपि भी विकार स्वरूप दाहिनी ओर से बांई ओर तथा खरोष्ठी, भी बांई ओर से दाहिनी ओर लिखी जाने लगी ॥६४॥

प्राचीनकाल में मगध के पाटलिपुत्र नगर में अशोक सम्राट् हुए, जिन्होंने ब्राह्मी और खरोष्ठी दोनों ही लिपियों का अपने राज्य में प्रचलन कराया ॥६५॥

इस प्रकार बाँई ओर से चलने वाली तथा दाहिनी ओर से चलने वाली दोनों ही लिपियाँ लोगों में आज तक प्रायः समस्त स्थानों पर देखी जाती हैं ॥६६॥

बाँई ओर चलने वाली लिपि का जन्मदाता जरदस्त्र था, ब्राह्मी लिपि के विरोध से इसने इस लिपि में विपरीत क्रम प्रारम्भ किया ॥६७॥

इस प्रकार स्पष्ट रूप से प्रतीत होता है कि जरदस्त्र के जन्म से पूर्व प्राचीनकाल से ही सर्वत्र ब्राह्मी लिपि प्रचलित थी ॥६८॥

### पञ्चमं प्रामाणम् ॥५॥

७— परिपूर्णसभ्यतायां वृत्तायां निर्म्मिता इमाः श्रुतयः।
वैज्ञानिकता ह्येषां दृश्यत इह सभ्यतामूलम् ॥६९॥
राजप्रजाविभागः सामाजिकता च धर्मनीतिश्च।

कार्य्याकार्य्यविभागो दृश्यत इह सभ्यताचिह्नम् ॥७० ॥
कालेऽनादौ लक्षाधिकेषु वर्षेष्वतीतेषु।
वेदा इमेऽवतीर्णा बहुषु च शास्त्रेष्वतीतेषु ॥७१ ॥
पूर्वे साध्या देवाः पूर्व्या धर्माश्च पूर्वजा गाथाः।
पूर्वाण्याख्यानान्यपि बहुधोल्लिख्यन्त इह वेदे ॥७२ ॥
तस्मादेभ्यो वेदग्रन्थेभ्योऽपि च पुरातने काले।
उन्नत्यवनतिपर्य्यायधारा लोकेऽवगम्यन्ते ॥७३ ॥
एतद्वेदात् प्रागपि बह्व्यो विद्या अनेकधा भाषाः।
नाना लिपयो जाताः संभाव्यन्ते विलुप्ताश्च ॥७४ ॥
प्रकृतिक्रमानभिज्ञाः सहस्रषट्कान्तरार्थमात्रदृशः।
कालविलुप्तानर्थान्नाभ्युपगच्छन्त्यदर्शनाद्धेतोः ॥७५ ॥
अद्यत्वे त्विह वाङ्मयमुपलब्धं यावदेवास्ति।
सर्वस्मादपि तस्माद्वेदः प्राचीन इति सत्यम् ॥७६ ॥
वेदात्प्रागपि विद्या भाषा लिपयोऽनुवृत्ताश्चेत्।
ध्रुवमत्र वेदकालेऽप्येता आसन्निति ब्रूमः ॥७७ ॥

## (७) पाँचवा प्रमाण

इन वेदों की रचना सभ्यता से परिपूर्ण एवं परिपक्वावस्था में हुई थी। वेदों की वैज्ञानिकता से वेदों के काल की सभ्यता के मूल का स्पष्टीकरण होता है ॥६९ ॥

वेदों में वर्णित राजा और प्रजा के विभाग, सामाजिकता, धर्म, नीति तथा कार्य-अकार्य विभाग से उस काल की सभ्यता के चिह्न स्पष्ट दिखाई देते हैं ॥७० ॥

लाखों वर्ष पहले अनादिकाल में अनेक शास्त्रों के निर्माण के पश्चात् ही इन वेदों का अवतरण हुआ ॥७१ ॥

इन वेदों में अनेक बार वेदों से पूर्व काल के साध्य देव, पूर्व वैदिक कालीन धर्म, पूर्वजों की गाथाएं, पूर्व वैदिककाल के आख्यान इत्यादि का वर्णन मिलता है ॥७२ ॥

इसलिए इन वेदग्रन्थों से भी प्राचीनकाल में हुई उन्नति और अवनति के पर्याय विचार की धारा लोक में जानी जाती है ॥७३ ॥

इससे स्पष्ट है कि वेदों के पहले भी अनेक प्रकार की विधायें तथा अनेक प्रकार की भाषायें थीं, जो अनेक लिपियों से उत्पन्न हुई होगीं और लुप्त हो गईं, ऐसा सम्भव है ॥७४ ॥

प्रकृतिक्रम को न जानने वाले, और छः हजार वर्ष मात्र के समय को देखने वाले वे लोग काल-क्रम से विलुप्त हुए अर्थों को उपलब्ध न होने से जानते नहीं हैं ॥७५ ॥

यह नितान्त सत्य है कि जितना भी वाङ्मय आज उपलब्ध है, उनमें से सर्वाधिक प्राचीन साहित्य वेद ही है ॥७६ ॥

इसलिए हम कहते हैं कि यदि वैदिक काल से पूर्व भी भाषा, लिपि और विद्या प्रचलित थी तो अवश्य ही वेदों के समय में भी यह विद्यमान थी ॥७७ ॥

## षष्ठं प्रमाणम् ॥६ ॥

८— यास्कोऽप्याह निरुक्ते (१ ।६ ।५) धर्मान् दृष्ट्वर्षयः पुराऽनूचुः ।
श्रुत्वा मन्त्रग्रहणाक्षमा इमं ग्रन्थमामम्नुः ॥७८ ॥
विल्मो विभिन्नखण्डो विल्मग्रहणाय कल्पितो ग्रन्थः ।
लिपिमन्तरेण भिन्नो भिन्नः खण्डो न शक्यमभिनेतुम् ॥७९ ॥

## छठा प्रमाण

निरुक्त में महर्षि यास्क ने भी कहा है — "प्राचीन धर्मों को देखकर ही ऋषियों ने प्रवचन किया है। मंत्रग्रहण में समर्थ उन ऋषियों ने सुनकर ही इस ग्रन्थ की रचना की है ॥७८ ॥

विल्म विभिन्न खण्ड का होता है। इस विल्म को ग्रहण करने के लिए इस ग्रन्थ की रचना की गई है। अतः लिपि के बिना विल्म के विभिन्न खण्डों को समझना संभव नहीं है ॥७९ ॥

## सप्तमं प्रमाणम् ॥७ ॥

९— द्वैपायनश्च कृष्णो हिमवति बदरीवने निवसन् ।
वेदं व्यस्यन् मन्त्रान्संगृह्य तु संहिताश्चक्रे ॥८० ॥
मन्त्राणां संकलनं तेषां चानेकसंहितारचनम् ।
लिपिमन्तरेण कर्तुं न शक्यमेकेन पुरुषेण ॥८१ ॥

## सातवाँ प्रमाण

कृष्ण द्वैपायन वेदव्यास ने हिमालय के बदरीवन में निवास करते हुए मंत्रों का संग्रह करके वेदों का विभाजन करते हुए संहिताओं की रचना की ॥८० ॥

लिपि के बिना एक ही व्यक्ति के द्वारा उन मंत्रों का संकलन और अनेक संहिताओं की रचना करना संभव नहीं हो सकता ॥८१ ॥

## अष्टमं प्रमाणम् ॥८ ॥

१०— साहसिकः पुनरन्यस्त्वदूरदर्शीत्यदीर्घदर्शीति ।
मागधराजाशोकात् प्राग् लिपिसत्त्वं न भावयति ॥८२ ॥
हन्ताशोकस्य द्वाविंशतिशतकल्पवर्षाणि ॥(२२५०)
प्रययुः किन्त्विह रामः पञ्चसहस्राब्दतोऽभवत्पूर्वम् ॥८३ ॥
रामस्यापि च समये लिपिरासीदिति पुरा हनुमान् ।
नामाङ्किताङ्गुलीयकमदर्शयत् तत्र जानक्यै ॥८४ ॥
"वानरोऽहं महाभागे दूतो रामस्य धीमतः ।
रामनामाङ्कितं चेदं पश्य देव्यङ्गुलीयकम्" ॥८५ ॥ (वाल्मी.सु.३६ ।२)

चीनपरिव्राडासीदित्यङ्गस्तद्वचः प्रमाणं ये।
भारतविद्वच्छास्त्रं तु न प्रमाणं वदन्ति ते धन्याः ॥८६ ॥

## आठवाँ प्रमाण

दुस्साहसी, अदूरदर्शी तथा विचार-शक्ति से हीन लोग मागधराज अशोक के काल से पहले लिपि की सत्ता ही नहीं मानते हैं ॥८२ ॥

कष्ट की बात है कि मगधराज अशोक मात्र बाईस सौ वर्ष पूर्व हुए जबकि भगवान् राम पांच हजार वर्ष से भी पहले हुए थे ॥॥८३ ॥

भगवान् राम के समय भी लिपि थी, क्योंकि उस काल में भी भक्त हनुमान् ने जानकी को रामनामांकित अंगूठी दिखाई थी ॥८४ ॥

वाल्मीकि रामायण में लिखा है —"हे महाभागे ! मैं श्रीमान् भगवान् श्री राम का दूत वानर हूँ। हे देवी ! यह राम का नाम लिखी अंगूठी देखो ॥८५ ॥ (वाल्मी.सु. ३६/२)

ये अदूरदर्शी लोग धन्य हैं, जो चीनी परिव्राजक इत्सिंग के वचनों को प्रामाणिक मानते हैं, परन्तु भारतीय विद्वान् और भारतीय शास्त्रों को प्रमाण नहीं कहते हैं ॥८६ ॥

### मन्त्रनिर्माणकाले विद्यमानाया लिपेर्ब्राह्मीसंज्ञा।

११— इत्थं च वेदकाले लिपिसत्त्वे सन्ति हेतवः कतिचित्।
सा च लिपिर्ब्राह्मी वा दैवी वा नामतोन्या वा ॥८७ ॥

इति भारतपरिचये लिपिप्रसङ्गः समाप्तः ॥८ ॥

## मंत्रनिर्माण-काल में विद्यमान लिपि का ब्राह्मी लिपि ही होना

इस प्रकार इन अनेक कारणों से स्पष्ट है कि वेदकाल में लिपि विद्यमान थी। वह लिपि ब्राह्मी, दैवी अथवा किसी अन्य नाम से थी। परन्तु कोई लिपि अवश्य ही थी ॥८७ ॥

भारतपरिचय-खण्ड में लिपिप्रसंग समाप्त हुआ ॥८ ॥

# सभ्यताप्रसङ्गः ॥९ ॥

## देवयुगे भारतवर्षस्य परमोन्नतिः ।

अपि पूर्वस्मिन् काले परमोन्नतिशिखरमायाताः ।
एते तु भारतीया विश्वेषां शिक्षका अभवन् ॥१ ॥
एष गुरुः सर्वेषां देशानामुत्तमो देशः ।
अत एवास्य मनुः प्रागवर्णयद् गौरवं पूर्णम् ॥२ ॥
"एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः" (मनुः)
न तदात्वे यवनानां न रोमकाणां न चीनानाम् ।
ज्ञानं बलं च लक्ष्मीस्तथा यथा भारतीयानाम् ॥३ ॥
ज्ञानं तेषामधिकं तत इह विद्याश्चतुःषष्टिः ।
भारतवर्षे प्रथमं प्रादुर्भूता असामान्याः ॥४ ॥
बलमपि तेषामधिकं बहवस्त्विह चक्रवर्त्तिनोऽभूवन् ।
सप्तसमुद्रां पृथ्वीं मांधातैकः शशास तच्चोक्तम् ॥५ ॥
"यावत्सूर्य उदेति स्म यावच्च प्रतिष्ठति ।
सर्वं तद्यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते" ।(विष्णुपु.अ.२१श्लो.६५)
अमरीकाख्यो देशो देशो यो वाऽफरीकाख्यः ।
यूरोप एशिया तान् सर्वान् शास्ति स्म मान्धाता ॥६ ॥
पाताले गन्धर्वैर्वीरा नागाः प्रपीडिताः सन्तः ।
शरणमगुर्मान्धातुः स हि तेषां रक्षणं चक्रे ॥७ ॥
इक्ष्वाकुश्च ययातिः शशबिन्दुर्हैहयः सगरः ।
एवं क्व च रविवंश्यः क्व च शशिवंश्योऽभवत् सम्राड् ॥८ ॥
एषा सुवर्णभूमिर्गौरिषा दोग्धि भूयसीर्लक्ष्मीः ।
अन्नधनैः स्वान् बिभ्रत्यन्यान् देशान् बिभर्ति साऽद्यापि ॥९ ॥

इति भारतपरिचये सभ्यताप्रसङ्गः समाप्तः ॥९ ॥

# सभ्यता-प्रसंग ॥९ ॥

## देवयुग में भारतवर्ष की परमोन्नति

प्राचीन समय में ये भारतीय ज्ञान के अत्यन्त उन्नत शिखर पर पहुंच गये थे और सम्पूर्ण विश्व को ज्ञान देने वाले शिक्षक हो गये थे ॥१ ॥

यह देश अत्यन्त उत्तम देश था, जो समस्त देशों का गुरु था। इसलिए मनु ने इस देश के सम्पूर्ण गौरव का पहले ही वर्णन किया है ॥२ ॥

इस देश में उत्पन्न अग्रजन्मा ब्राह्मणों के पास इस पृथ्वी पर समस्त लोग अपने अपने चरित्र (व्यवहार-व्यवसाय-कार्य) की शिक्षा ग्रहण करें ॥३ ॥

उस काल में भारतीयों के पास जितना ज्ञान, बल और धन था, उतना यवनों, रोमवासियों और चीनवासियों में से किसी के पास भी नहीं था ॥३ ॥

इन भारतीयों का ज्ञान अधिक था इसी से यहाँ असामान्य चौसठ विद्यायें सर्वप्रथम प्रादुर्भूत हुईं ॥४ ॥

ये भारतीय अत्यधिक बलशाली थे, इनमें बहुत से राजा तो चक्रवर्ती हुये हैं और कहा गया है कि मान्धाता नाम के पराक्रमी राजा ने अकेले ही इस सात समुद्रों से घिरी हुई सम्पूर्ण पृथ्वी पर अकेले ही शासन किया था ॥५ ॥

विष्णु पुराण में लिखा है — जहाँ तक सूर्य उदय होता है और जहाँ तक अस्त होता है वहाँ तक का सारा क्षेत्र युवनाश्व के पुत्र मान्धाता का क्षेत्र कहा जाता है ॥६ ॥

अमरीका, अफ्रीका इत्यादि जो देश हैं तथा जो यूरोप और एशिया है, उन सब पर वह मान्धाता अकेला ही शासन करता था ॥६ ॥

पाताल लोक में गन्धर्वों द्वारा पीड़ित वीर नाग जाति के लोग मान्धाता की शरण में आये और उस मान्धाता ने ही उनकी रक्षा की ॥७ ॥

प्राचीन भारत में इक्ष्वाकु, हैहय, ययाति, शशबिन्दु और सगर नाम के सम्राट् हुए हैं। इनमें से कोई सूर्यवंशी और कोई चंद्रवंशी सम्राट् थे ॥८ ॥

यह भारत भूमि स्वर्ण-भूमि है, जो गोस्वरूप है जो पर्याप्त लक्ष्मी का दोहन करती है तथा आज भी अन्न-धन से अपना और अन्य देशों का पालन करती है ॥९ ॥

**भारत का परिचय-प्रकरण में सभ्यताखण्ड समाप्त हुआ**

# धर्मप्रसङ्गः ॥१० ॥

## भारतीयधर्माणां वैज्ञानिकत्वम् ।

अन्नाचारविचाराः वैज्ञानिकनियतिभावनाक्लृप्ताः ।
तेनेह लौकिका अपि धर्मा इह पारलौकिकाः सर्वे ॥१ ॥
सर्वेभ्योऽपि च देशान्तरीयधर्मेभ्य उत्कर्षः ।
धर्म्मेऽत्र भारतीये यदयं लोकद्वयौपयिकः ॥२ ॥
मतभेदा बहवोऽस्मिन्नैको मार्गोऽत्र सुस्थिरः कश्चित् ।
इति दोषं ब्रुवतेऽन्ये भारतवर्षीयधर्मेऽस्मिन् ॥३ ॥
अनभिज्ञास्ते भारतधर्म्मरहस्यादसूक्ष्मदृशः ।
नैषा नीतिर्नायं भारतधर्म्मो यदृच्छया क्लृप्तः ॥४ ॥
वैज्ञानिकस्तु धर्म्मः सर्वेषां नैकरूपः स्यात् ।
अपि देशकालपात्रप्रभेदतो भिन्नतौचित्यात् ॥५ ॥
नरकल्पितस्तु धर्म्मो नीतित्वात् संभवयत्येकः ।
वैज्ञानिको मनुष्यो न च स्वतन्त्रोऽभिनेतुमेकतया ॥६ ॥
वैज्ञानिको हि सूक्ष्मोपपत्तिको भारते धर्म्मः ।
तस्य तदेव महत्त्वं यदनेकत्वं रवीन्दुनियतत्वात् ॥७ ॥

# धर्म-प्रसंग ॥१० ॥

## (१) भारतीय धर्मों की वैज्ञानिकता

भारतीय धर्म के जितने भी आचार-व्यवहार हैं, वे वैज्ञानिक प्रकृति की भावना से युक्त हैं। अतः यहाँ के जो लौकिक धर्म हैं, वे भी पारलौकिक धर्म की प्रकृति के अनुसार ही हैं ॥१ ॥

इस भारतीय धर्म में अन्य समस्त देशान्तरीय धर्मों से यही उत्कृष्टता है कि यह धर्म दोनों लोकों के लिए उपयोगी धर्म है ॥२ ॥

अन्य कुछ लोग इसकी निन्दा करते हैं कि इस भारतीय धर्म में अनेक मतभेद हैं तथा कोई निश्चित मार्ग नहीं है ॥३ ॥

वे लोग भारतीय धर्म के रहस्य से अपरिचित हैं, उनकी दृष्टि अथवा रहस्यज्ञान-क्षमता मन्द है, क्योंकि यह भारतीय धर्म स्वेच्छा से बनाया हुआ धर्म नहीं है, और न ही यह कोई नीति मात्र ही है ॥४ ॥

जो धर्म वैज्ञानिक होता है वह देश, काल और पात्र के भेद से भिन्न भिन्न होता है। इसिलिए सँभी धर्मों के लोग एक समान व्यवहार के नहीं होते हैं ॥५ ॥

मनुष्य द्वारा कल्पित धर्म तो एक नियम मात्र होता है अत: उसको जैसा चाहो बनाया जा सकता है परन्तु वैज्ञानिक धर्माचरण करने वाला मनुष्य एक जैसा अनुकरण करने में समर्थ नहीं हो सकता है ॥६ ॥

यह भारतीय वैज्ञानिक धर्म सूर्य और चन्द्रमा द्वारा नियंत्रित होने के कारण सूक्ष्म रूप से निश्चित धर्म है। इसीलिए अनेकता ही इस धर्म की विशेषता है ॥७ ॥

## भारतीयधर्मस्वरूपम्।

यो धृतः सन् धारयते स धर्म्मः। स्वरूपसंपादको गुणो धर्म्मः। प्रजासंरक्षणे दीक्षितो राजा भवति। दीक्षितोऽधिकारं प्राप्तः। यावता प्रजां स्वदीक्षानुसारेण पालयेत् तावता स राजा स्यात्। दुष्टनिग्रहानुग्रहाभ्यां शान्तिसंरक्षणं पालनम्। स यद्येतन्न कुर्य्यात् न स तर्हि राजेत्युक्तः स्यात् स स्वरूपाद् विच्यवेत। मनुष्यत्वमस्यावशिष्यते न राजत्वम्। तस्माद्राजस्वरूपसंपादकमिदं कर्म्म धृतं सद् राजानं धारयति तेनायं राज्ञो धर्म्मः। अत एवाहुः—"धर्म्म एव हतो हन्ति धर्म्मो रक्षति रक्षितः।"

धर्म्मो द्विविधः— प्राकृतः संस्कृतश्च। यत्र मनुष्याणां हेयत्वोपादेयत्वयोः स्वायत्तत्वं नास्ति स प्रकृत्या सिद्धः सर्वो गुणः प्राकृतो धर्म्मः। यथा मनुष्यत्वादिः मैथिलत्व-सारस्वतत्वादिः। यावांस्तु गुणो मनुष्यैः स्वायत्ततयोपपाद्यते मनुष्येषु मनुष्यैराधीयते स संस्कारजन्यत्वात् संस्कृतो धर्म्मः। यथा राजत्वं प्राड्विवाकत्वं गुरुत्वं भृत्यत्वम्। एवमादयो गुणा अधिकारयोगादुत्पद्यन्ते। तस्मात्ते संस्कृता धर्माः।

### अष्टधा व्याक्रियन्ते हीमे धर्म्माः—

| | |
|---|---|
| १. दीक्षाव्रतम्। | ५. पुष्टिः। |
| २. संस्कारः। | ६. शान्तिः। |
| ३. आचारव्रतम्। | ७. स्वस्त्ययनम्। |
| ४. शुद्धिः। | ८. आनृशंस्यम्। |

ब्राह्मणक्षत्रियवैश्यानां जन्मना लब्धोऽधिकारो दीक्षा। कुलक्रमागतं कर्म्म वृत्तिः। अधिकारवृत्तिर्दीक्षाव्रतम्। तत्र ब्राह्मणं व्याख्यास्यामः।

१. स्वयं विज्ञानान्युपार्जयेत्। परेभ्यो विज्ञानान्युपदिशेत्। तत् तपः।

२. स्वयं यज्ञैर्यज्ञपुरुषं याजयेत्। परेभ्यो यज्ञैर्यज्ञपुरुषं याजयेत्।स यज्ञः।

३. राजभ्यो धनाढ्येभ्यश्च कररूपेण प्रतिगृहणीयात्। दीनेभ्यो जीवनं दद्यात्। तद्दानम् ॥

यथाऽयं क्षत्रियो राजा आधिभौतिकेभ्यो दुःखेभ्यो ब्राह्मणक्षत्रियवैश्यान् प्रजाः संरक्षति। संरक्षणशुल्कतया करं प्रतिगृहणाति। सत्यामावश्यकतायामधिकमपि

समये समये प्रतिगृह्णाति। दीनदरिद्रेभ्यस्तज्जीवनार्थं ददाति च। तथायं ब्राह्मणो ब्रह्मा आधिदैविकेभ्यो दुःखेभ्यो ब्राह्मणक्षत्रियवैश्यान् प्रजाः संरक्षति। संरक्षणशुल्कतया राजभ्योऽपि करं प्रतिगृह्णाति। सत्यामावश्यकतायामधिकमपि समये समये प्रतिगृह्णाति। यथा राज्ञः शासनसभामण्डलाधीनानि धिष्ण्यभवनानि भवन्ति तथामुष्य ब्रह्मणो देवयजनमण्डलाधीनाः पाकादियज्ञशालाः स्थापिता भवन्ति॥

भोजमहाभोजौ राजानौ। चक्रवर्तिसार्वभौमो सम्राजौ। इन्द्रमहेन्द्रौ स्वराजौ ब्रह्मविष्णू विराजाविति चतुःकक्षं क्षत्रं भवति। तथा द्विजो विप्रो देवो ब्रह्मेति चतुःकक्षं ब्रह्म भवति। ताविमौ ब्रह्मा मूर्धाभिषिक्तश्च लोकानां दीक्षापालौ भवतः। एतावेव सर्वाः प्रजा अनुशिष्टः॥ अनयोरपि क्षत्रमनुशास्ति। तस्माद् ब्राह्मणो राजभ्यः करं प्रतिगृह्णाति॥ यथा कर्षकाणां सर्वा भूमी राज्ञः। नगरे सर्वमापणं सर्वा वीथ्यो राजमार्गा राज्ञ एव। राजानुग्रेहण च सर्वाः प्रजाः स्वत्वमनुवर्तयन्ति एवमेवैतेषां राज्ञामपि तत्र तत्राधिकारो ब्राह्मणानुग्रहेण प्रतिपत्तव्यः। सर्वो ब्रह्मस्वं भुंक्ते। ब्रह्मा राज्ञोऽधिपतिः। राजा वैश्यवर्गस्याधिपतिः। यदि प्रजाः सर्वाः प्रतिपन्थिन्यो विरुद्धाः स्युः स्वतन्त्राः स्युः राजाज्ञां नानुपालयेयुः स तर्हि राजा क्षत्रवीर्य्याच्चयुतोऽनधिकारो भवति न स्वधर्मं परिपालयितुं शक्नोति। एवं यदि राजानः सर्वे विप्रतिपन्थिनः स्युः स्वतन्त्राः स्युः ब्राह्मणाज्ञां नानुपालयेयुः स तर्हि ब्रह्मा ब्रह्मवीर्य्याच्चयुतोऽधिकारो भवति न स्वधर्म्मं परिपालयितुं शक्नोति। यथा शरीरे आग्नेयमुदरमण्डलं — वायव्यमुरोमण्डलं — ऐन्द्रं शिरोमण्डलं परसरानुगृहीतं वीर्य्यवद् भवति। पृथक्कृतं चैतदेकैकं स्वतन्त्रं सन्निर्वीर्य्यं मृतं भवति। तथेदं विण्मण्डलं क्षत्रमण्डलं ब्रह्ममण्डलं च पृथक्कृतं सदेकैकं स्वतन्त्रं भूत्वा निर्वीर्य्य मृतं भवति। स्वतंत्रा वैश्या न राजाज्ञामनुपालयन्ति स्वतन्त्राश्च राजानो न ब्राह्मणाज्ञामनुपालयन्ति। तेनैते त्रयोऽपि निर्वीर्य्या मृता इव संप्रति दृश्यन्ते। परस्परानुगृहीतास्त्वेते स्वं स्वं धर्म्ममसंकीर्णमनुवर्तमाना वीर्य्यवन्तः स्युः। सर्वैश्चैतैः स्वस्वधर्म्मानसांकर्य्येणानुतिष्ठद्भिरेकः समाजात्मा जीवितो भवति तत्रायं ब्राह्मणः समाजात्मनः शिरःस्थानीयः॥ स एष व्याख्यातः।१।। एवमुरःस्थानीयः क्षत्रियः। उदरस्थानीयो वैश्यश्च व्याख्यातव्यः। अस्य हि समाजरूपस्यात्मनोऽयं ब्राह्मणस्तावदाधिदैविकव्यापत्तिनिवर्तकत्वाच्चर्म्मस्थानीयोन्तरङ्गोऽङ्गरक्षको भवतीति शर्म्मेत्युच्यते — "चर्मेति मानुषं शर्म्म देवत्रा"! (श.१।१।४।४) इति श्रुतेः। क्षत्रियस्तु आधिभौतिकव्यापत्तिनिवर्तकत्वाद् वर्मस्थानीयो बहिरङ्गोऽङ्गरक्षको भवतीति वर्म्मेत्युच्यते॥द्वाविमौ गोपयितारौ भवतः। यस्तु ताभ्यामुभाभ्यां संगुप्यते स गुप्तो वैश्यः। तेषामेषां त्रयाणां स्वस्वव्रतोपयोगिशक्तिप्रवर्धककर्मकरणं स्वस्वव्रतोप-योगिशक्तिव्यापादककर्म्मपरित्यागश्च प्रातिस्विको धर्म्मः सिद्धो भवतीति विज्ञेयम्।

तदद्भुततमं दृष्ट्वा विस्मिताहमिहागता ॥४॥
अन्यच्च तस्मिन् सुमहदाश्चर्य्यं लक्षितं मया।
यदग्निमपि संस्पृश्य नैवासौ दह्यते शुभे ॥५॥
छन्देन चोदकं तस्य वहत्यावर्जितं द्रुतम्।
अतीव चान्यत् सुमहादाश्चर्य्यं दृष्टवत्यहम् ॥६॥
यत् स पुष्पाण्युपादाय हस्ताभ्यां ममृदे शनैः।
मृद्यमानानि पाणिभ्यां तेन पुष्पाणि नान्यथा ॥७॥
भूय एव सुगन्धीनि हृषितानि भवन्ति हि।
एतान्यद्भुतलिङ्गानि दृष्ट्वाहं द्रुतमागता ॥८॥ "इति" (वन० ७५) ॥

(७) ईशित्वम् अलौकिककर्म्मकरणे सामर्थ्यलाभः। अणिमादीनां षण्णां योगविभूतीनां स्वस्मिन्निवापरस्मिन्नपि संपादनम्। यथा हनुमान् द्रोणाचलमुत्थापयितुं श्रीकृष्णो वा गोवर्धनमुत्थापयितुं तस्य तस्याचलस्य विग्रहे लघिमानं जनयामास। तेनैव हनुमान् हस्तेन द्रोणाचलमुद्धृत्य लङ्कामानयत् ॥१॥ विश्वामित्रस्त्रिशङ्कुराजानं जीवन्तमेव दिवि प्रतिष्ठापयामास ॥२॥ वसिष्ठश्च नन्दिनीखुरतः परःसहस्राणि सैनिकानि जनयामास ॥३॥ श्रीकृष्णो द्वारकास्थ एव हस्तिनापुरे द्रौपद्याश्चीरं परिवर्द्धयामास ॥४॥ अगस्त्येन समुद्रः परिशोषितः ॥५॥ मनुमत्स्यो जलप्रलयनौकां शृङ्गेन दधार ॥६॥ अन्तर्द्धानमप्यत्रैव संनिविशते। तच्चोक्तं योगसूत्रे—कायरूपसंयमात् तद्ग्राह्यशक्तिस्तम्भे चक्षुःप्रकाशासंप्रयोगेऽन्तर्द्धानम् ॥३।२०॥इति॥

(८) वशित्वम् प्रबलस्य वशीकारः। यथा श्रीकृष्णो नागं वशीचक्रे ॥१॥ ऋषीणामाश्रमेषु सिंहादयो हिंस्रजीवा वशीकृता अद्रोहिणस्तस्थुः ॥२॥ भूतवशीकारोऽप्यत्रैव संनिविशते।
इतोऽन्या अप्यनेकधा योगसिद्धयो योगपातञ्जले विभूतिपादे प्रदर्शिताः।
इत्यष्टौ संयमसिद्धयः ॥८॥

## दिव्या विद्याओं के प्रयोग और उदाहरण प्रस्तुत किये जाते हैं

(१) मन के संयम से आठ योगबल-सिद्धियाँ : जैसे —

**अणिमा** : शरीर को छोटा बनाकर सूक्ष्म रूप प्राप्त करना। विशाल शरीर को संकल्प मात्र से ही तत्काल अंगों का अपचय करके मच्छर इत्यादि के समान सूक्ष्म शरीर में परिवर्तन करना। जिस तरह हनुमान् ने समुद्र को लांघते समय विशाल शरीर से भक्षण करती हुई सुरसा के मुख में मच्छर के समान सूक्ष्म रूप धारण करके प्रवेश किया और वापस निकलकर आ गये ॥१॥ रावणगृह में सीता की खोज के लिए प्रवृत्त हुए हनुमान् ने बिलाव के समान क्षुद्र शरीर बनाकर छिपते हुए महलों

में सीता को ढूंढा ॥२ ॥ लंका में अशोक-वाटिका में सीता-रावण-संवाद को सुनने के लिए अत्यन्त सूक्ष्म शरीर से वृक्षों की ओट में छिपकर बैठ गये ॥३ ॥

**महिमा** : शरीर को विशाल रूप देना महिमा विद्या है। सूक्ष्म शरीर होते हुए भी अत्यन्त विशाल शरीर को धारण करना। जैसे हनुमान् ने समुद्र लङ्घन के समय सुरसा के मुख में प्रवेश न हो सके, इसलिए अपने शरीर को अत्यन्त विशाल बना लिया था ॥१ ॥ जिस प्रकार चाक्षुष मन्वन्तर में मनु के हाथ में गिरे हुये मत्स्य का अत्यन्त सूक्ष्म शरीर होते हुए भी क्षण भर में विशाल शरीर का संपादन कर लेना ॥२ ॥

**गरिमा** : शरीर के भार में वृद्धि करके भारीपन लाना गरिमा सिद्धि है। यथा निषध पर्वत पर विचरण करते हुए भीम के शौर्याभिमान का मर्दन करने हेतु मध्यमार्ग में बैठ हनुमान ने शरीर के भार में वर्धन कर लिया। वृद्धावस्था ग्रस्त होते हुये भी इस वानर ने अपने कृश शरीर को भी इतना भारी बना लिया, जो भीम के द्वारा उठाया नहीं जा सका ॥१ ॥ अंगद ने लंका में रावण की सभा में अपने पाँव को आरोपित करके समस्त बलिष्ठ राक्षसों से भी उठाये जाने में असमर्थ अपने विशाल पांव के सहयोग से विजय प्राप्त की ॥२ ॥ बालक श्री कृष्ण ने विशालकाय, अतिबलवान् चाणूरमल्ल नाम के राक्षस का मर्दन किया ॥३ ॥

**लघिमा** : विशाल और भारी शरीर के होते हुये भी छोटी सी रूई की तूलिका के समान शरीर को हल्का बनाकर विमानादि साधनों के बिना भी आकाश में विचरण करना लघिमा विद्या है। यथा योग-सूत्र में लिखा है - "शरीर और आकाश का सम्बन्ध संयत करने से छोटी सी रूई के समान आकाश में विचरण करना ॥" (३/४) ॥ जिस तरह हनुमान् ने शरीर को हल्का करके आकाश मार्ग से हवा के आधार पर ही समुद्र् को लांघ लिया था ॥१ ॥ तथा नारद अनेक बार आकाश मार्ग पर ही से विचरण करते हुए द्वारिका नगरी में श्रीकृष्ण के पास तथा अन्य भी अनेक स्थानों पर आये ॥ विभीषण भी राम की सेना में आकाश मार्ग से ही आये थे। युद्धकाण्ड में लिखा है - समुद्र की उत्तर दिशा के तट पर आकर विभीषण आकाश में खड़े हुये बोले - "(यु. कां-१७/१९५)" विभीषण प्रसन्न होते हुए आकाश से भक्त सेवकों के साथ पृथ्वी पर आ गये।" (यु. १९) ॥

**प्राप्ति** : एक जगह स्थित होते हुए भी बिना अधिक प्रयत्न के दूरस्थित वस्तुओं को इन्द्रिय द्वारा ग्रहण करना। यथा भूमि पर स्थित होते हुए भी अंगुली से चन्द्रमा का स्पर्श करना। पर्वत के उच्च शिखर पर स्थित उद्यान से फलों को चुन लेना।

**प्राकाम्य** : मनोवृत्ति के प्रतिबन्ध का त्याग करके पृथ्वी के विभिन्न पार्थिव आघातों को सहन कर लेना प्राकाम्य विद्या है। यथा जल में प्रवेश कर लेने के समान मनुष्य पृथ्वी पर ही स्नान कर लेता है। शिला में प्रवेश कर लेता है। स्निग्ध जल मनुष्य को गीला नहीं करता है। अग्नि की उष्णता जलाती नहीं है। वायुवेग से उड़ता नहीं है। आवरणरहित शून्य-स्थान पर भी ढंके हुए शरीर की भांति सिद्ध पुरुषों को भी अदृश्य हो जाता है। धूप में रहकर भी धूप का आवरण छाया में रहने के

समान हो जाता है। अवरोधरहित गति होने के कारण बन्दीगृह से भी बाहर आ जाना। जैसे द्वारिका के समीप रैवतक पर्वत पर जरासंध के सैनिकों से चारों ओर से घिरे हुए भी श्रीकृष्ण का द्वारिका में प्रवेश। मथुरा में जरासन्ध और कालयवन के सैनिकों द्वारा अवरुद्ध होते हुए भी एक ही दिन में नवनिर्मित द्वारिका में समस्त बालक, वृद्ध, स्त्री इत्यादि के समूह को पहुंचाकर श्रीकृष्ण का फिर से युद्ध के लिए लौट आना। अद्‌भुत कर्म भी इसी में समझने चाहिये॥ यथा महाभारत के नलचरित में दमयन्ती को केशिनी कहती है —

"वह राजा नल छोटे द्वार को देखकर झुकता नहीं है। उसे देखकर सुखपूर्वक द्वार से निकल जाता है॥१॥

संकीर्ण स्थान पर भी उसके लिए अतिविशाल द्वार बन जाता है। उसके स्नान के लिए रिक्त कुम्भ रखे गये थे, वे राजा के देखने पर जल से परिपूर्ण हो गये। उस राजा ने तिनकों के गुच्छे को लेकर सूर्य को दिखाया और तुरन्त ही उसमें अग्नि प्रज्वलित हो गई। इन अद्‌भुत कार्यों को देखकर, आश्चर्यचकित होकर मैं यहाँ आई हूँ॥२-४॥

मैंने उस राजा नल में और भी अनेक आश्चर्य देखे। हे शुभे। अग्नि का स्पर्श करने पर भी वह जलता नहीं है॥५॥

उसकी इच्छा से बहता हुआ जल शीघ्र ही रुक जाता है। मैंने और भी अनेक आश्चर्य उस राजा में देखे हैं। वे हैं - उसने फूलों को लेकर हाथ में मसल दिया, उसके हाथ से मर्दित पुष्पों में किसी प्रकार का अन्तर नहीं देखा गया बल्कि वे फूल और भी अधिक सुगन्ध से परिपूर्ण हो जाते हैं और भी खिलने लग जाते हैं। इन विभिन्न आश्चर्ययुक्त चिह्नों को देखकर मैं यहाँ आई हूँ॥६-८॥ (महा.भा.वन./७५)

**ईशित्व** : अलौकिक कर्मों को करने के लिए सामर्थ्य प्राप्त करना। अणिमादि आठ योगसिद्धियों का स्वयं के समान दूसरों में भी सम्पादन करना। जैसे हनुमान् ने द्रोणाचल को उठाने के लिए अथवा श्रीकृष्ण ने गोवर्धन पर्वत को उठाने के लिए तत्तत् पर्वतों को हल्का बना दिया था। इसी सिद्धि से हनुमान् द्रोणाचल को अपने हाथ में उठाकर लंका में ले आये थे॥१॥ विश्वामित्र ने जीवित ही त्रिशंकु राजा को आकाश में प्रतिष्ठापित कर दिया था॥२॥ वशिष्ठ ऋषि ने नन्दिनी गाय के खुरों से हजारों सैनिकों को उत्पन्न कर दिया था॥३॥ श्री कृष्ण ने द्वारिका में रहते हुये ही हस्तिनापुर में द्रौपदी का चीर बढ़ा दिया था॥४॥ अगस्त्य ऋषि ने समुद्र को सुखा दिया था॥५॥ मत्स्यावतार ने जलप्लावन काल में मनु की नाव को अपने सींग से ही धारण कर लिया था॥६॥ अन्तर्द्धान-विद्या का भी इसी में समावेश किया जाता है। "योगसूत्र" में कहा गया है - "शरीर के स्वरूप का संयम करके उस रूप को ग्रहण करने वाली शक्ति का स्तम्भन हो जाने पर चक्षुःप्रकाश का संयोग न होने पर वह दिखाई नहीं देता है, इसी को अन्तर्द्धान-विद्या कहते हैं॥(३/२०।)

**वशित्व** : प्रबल को भी वश में कर लेना वशित्व सिद्धि है। जैसे श्रीकृष्ण ने नाग को वश में कर लिया था ॥१ ॥ ऋषियों के आश्रम में सिंहादि हिंसक प्राणी भी वश में रहकर, द्रोह रहित होकर निवास करते हैं ॥२ ॥ भूतवशीकरण विद्या भी इसी में सन्निविष्ट है ॥

पतंजलि के "योगसूत्र" में विभूतिपाद में इससे भी कुछ भिन्न अनेक योगसिद्धियाँ बताई गई हैं ॥

## २— इंद्रियसंयमाद् दिव्यदृष्टिसिद्धयोऽष्टौ यथा—

(१) अतीतानागतज्ञानम् भूतभविष्यद्ज्ञानम्। तत्रातीतज्ञानं तावत् चिरकालातीतविषयाणां प्रत्यक्षविद्यमानवद्ग्रहणम्। यथा वसिष्ठो दिलीपराजाय दत्तं कामगवीशापं ददर्श। वाल्मीकिमुनिश्च परोक्षं रामचरितं सर्वं यथावद्ददर्श ॥२ ॥ पात्रञ्जले योगसूत्रे तु — "धर्म्मलक्षणावस्थापरिणामत्रसंयमादतीतानागतज्ञानम्।" (३ ।१६) इत्युक्तम् ॥ "संस्कारसाक्षात्करणात् पूर्वजातिज्ञानम्" ॥३ ।१८ ॥ इति योगसूत्रोक्तं जन्मान्तरज्ञानमप्यतीतज्ञानमेव। यथा जैगीषव्यस्य दशसु महासर्गेषु जन्मपरिणामक्रममनुपश्यतो विवेकजं ज्ञानं प्रादुरभूत्। श्रीकृष्णश्चाह
"बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ॥
तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप" ॥इति ॥

यथा महाभारतयुद्धे प्रवृत्तानां । कर्णदुर्य्योधनादीनां जन्मान्तरस्थासुरयोनित्वं वेदव्यासो दृष्ट्वा आदिपर्वणि वर्णयामास। शुकदेवस्य च पूर्वजन्मनि शुकपक्षित्वं शिवगौरीसंवादश्रोतृत्वं चाख्यातमार्य्यैः। अथ भविष्यज्ञानम् अनागतज्ञानम्। तद् यथा संभलग्रामे कल्की भविष्यतीति भारतीयाः पश्यन्ति ॥१ ॥ पुराणे भविष्यन्तो राजवंशाः प्रदर्शिताः ॥२ ॥ शूद्राश्च ब्राह्मणाचारा ब्राह्मणाः शूद्रवृत्तय इत्येवमादयः कलिधर्मो भविष्यन्तः पुराणे प्रदर्शिताः ॥३ ॥ सूर्य्यचन्द्रोपरागा भविष्यन्तः कथ्यन्ते ॥४ ॥ कालज्ञानमप्यत्रैव संनिविशते। अनया विद्ययात्मनः परस्य च मृत्युकालो विज्ञातो भवति। कालज्ञानोपायभेदे छायापुरुषसिद्धिरप्यस्ति ॥५ ॥

(२) दूरातिक्रान्तदर्शनश्रवणम्। तत्रादौ दूरपरोक्षदर्शनं यथा। संजयो हस्तिनापुरे स्थितो वेदव्यासदत्तदिव्यदृष्टिप्रभावेण दूरदेशे कुरुक्षेत्रे जायमानं युद्धं यथावत् पश्यन् धृतराष्ट्राय कथयति स्म ॥१ ॥ श्रीकृष्णो द्वारकास्थितो हस्तिनापुरस्थाया द्रौपद्याश्चीरहरणं दुःशासनकृतमपश्यत् तदुक्तं योगसूत्रे—"प्रवृत्त्या लोकन्यासात् सूक्ष्मव्यवहितविप्रकृष्टज्ञानम्" ।३ ।२४ ॥इति ॥अथ विदुरश्रुतिः। संजयो वेदव्यासप्रत्तविद्याप्रभावेण दूरे कुरुक्षेत्रे भवन्तं कृष्णार्जुनगीतासंवादं स्वदेशस्थो यथायथं शुश्राव ॥१ ॥"श्रोत्राकाशयोः संबन्धसंयमाद् दिव्यं श्रोत्रम्" ॥३ । ४० ॥इति योगसूत्रम् ॥

(३) सर्वभूतरुतज्ञानम् ॥तदुक्तं योगसूत्रे—"शब्दार्थप्रत्ययानामितरेतराध्यासात् संकरस्तत् प्रविभागसंयमात्सर्वभूतरुतज्ञानम् ॥३ ।१७ ॥इति ॥
युधिष्ठिरविदुरादयः पक्षिरुतं जानन्ति स्म ॥ ब्रह्मदत्तश्च काम्पिल्यो राजा पिपीलिकारुतं जानाति स्म ॥

(४) मनोविज्ञानम् ॥ मनसः संकल्पनकाले शारीरः प्राणवायुः क्षोभितो विकृतिमापद्यते। विकुर्वाणेन च तेन रोमकूपेभ्यो बहिर्भवता विक्षिप्तः परिक्षुब्धोऽयं शरीरमभितो बाह्यवायुः पुरुषमनसोऽभिज्ञानाय प्रभवति ॥ यथोक्तं वेदमन्त्रे—
"मनसा संकल्पयति, तद्वातमभिगच्छति ॥
वातो देवेभ्य आचष्टे यथा पुरुष ते मनः"—इति ॥
ब्राह्मणेऽपि श्रूयते—
"मनो देवा मनुष्यस्य जानन्तीति।
मनसा संकल्पयति, तत् प्राणमपि पद्यते।
प्राणो वातम्, वातो देवेभ्य आचष्टे यथा पुरुषस्य मनः"—इति।

(५) भूगर्भज्ञानम्। महौषधसंस्कृतचक्षुषा अधोमुखजातेन भूतलाधस्ताद्दशहस्तपर्य्यन्तं स्थितानां भावानां साक्षात्कारः शक्यते कर्तुम्। तत्र दिव्याञ्जनप्राधान्येऽपि तेन दैवीदृष्टिरेवानुगृहीता भवतीत्यत्र समावेशः।

(६) भुवनज्ञानम्। अस्ति हि सप्तलोकसंग्रहश्लोकः। 'ब्राह्मस्त्रिभूमिको लोकः प्राजापत्यस्ततो महान्। माहेन्द्रश्च स्वरित्युक्तो दिवि तात भुवि प्रजाः"— इति। आवीचेः प्रभृति मेरुपृष्ठं यावद् भूलोकः ।१ ॥ मेरुपृष्ठादारभ्याध्रुवाद् ग्रहनक्षत्रतारा विचित्रोऽन्तरिक्षलोकः ॥२ ॥ तत्परः पञ्चविधो माहेन्द्रः स्वर्गलोकः ॥३ ॥ प्राजापत्यो महर्लोकः ॥४ ॥ जनलोकस्तपोलोकः सत्यलोक इति त्रयो ब्रह्मलोकाः ॥७ ॥ एषां साक्षादिव दर्शनं भुवनज्ञानम्। भुवनज्ञानं सूर्य्ये संयमादिति योगसूत्रम्।

(७) ओषधिप्रभावज्ञानम्। यथा सोमहरीतकीविभीतकजङ्गिडापामार्गादीनामोषधीनामतुलिताः प्रभावा आथर्वणसंहितायां मन्त्रैराम्नाताः तेषां प्रभावाणां यथावत्परिज्ञानमार्षं भवति नत्वनृषिश्चक्षुरयोग्यं प्रभावं ज्ञातुं शक्नोति। उक्तं चाभियुक्तैः—
"आविर्भूतप्रकाशानामनुपप्लुतचेतसाम्।
अतीतानागतज्ञानं प्रत्यक्षान्न विशिष्यते ॥१ ॥
अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा।
ये भावान् वचनं तेषां नानुमानेन बाध्यते" ॥२ ॥ (वाक्यपदीयम् का.६ । ३ ।१०९)

(८) ताराज्योतिःप्रभावज्ञानम्। यावत्य इमा रोचन्ते रोचना दिवि तासामेकैकस्या ज्योतिषः प्रभावग्रहणमृषीणामेव शक्यम्। असंख्यातास्वपि तासु—एकता द्विता त्रिता—इत्येवं त्रेधा विभक्तासु त्रितानां प्रायेणाप्त्यानां प्रभावा वेदे श्रूयन्ते। यथा—

"जज्ञानः सप्तमातृभिर्मेधामाशासत श्रिये।
अयं ध्रुवो रयीणां चिकेतदा"

इत्यादिभिर्मन्त्रैर्ध्रुवादितारकाणां प्रभावा आम्नाताः। "चन्द्रे ताराव्यूहज्ञानम्" ।३। २६ इति योगसूत्रम्।

## आठ संयमसिद्धियों का वर्णन समाप्त ॥८॥

**२–इन्द्रियसंयम से प्राप्त आठ दिव्यदृष्टि सिद्धियाँ। यथा –**

**(१) भूत और भविष्य (अतीतानागत) का ज्ञान** : भूत, भविष्य का ज्ञान अतीतानागत ज्ञान है। यहां अतीत ज्ञान से तात्पर्य है— अतिप्राचीन, विगत काल के विषयों को प्रत्यक्ष विद्यमान के समान देखना । जिस प्रकार दिलीप राजा को दिये गये कामधेनु के शाप को ऋषि वसिष्ठ ने देखा ॥१ ॥ पतंजलि के योग-सूत्र में लिखा है—"धर्म, लक्षण, अवस्था ज्ञानरूप तीन प्रकार के परिणामों में संयम से भविष्य और भूतकाल का ज्ञान हो जाता है।" (३/१६) "संस्कारसाक्षात्करण से पूर्वजन्म का ज्ञान होता है।" (३/१८) इस प्रकार योगसूत्र में जन्मान्तर-ज्ञान को भी अतीत-ज्ञान ही माना है। जैसे जैगीषव्य को दसों महासृष्टियों में हुये जन्म के परिणाम के क्रम को देखने से विवेकज्ञान की प्राप्ति हुई ॥श्री कृष्ण ने कहा है — हे अर्जुन! तेरे और मेरे अनेक जन्म हुये हैं। परन्तु हे परंतप। उन सबके विषय में मैं जानता हूं, तुम नहीं जानते हो।

जिस प्रकार वेदव्यास जी ने कर्ण और दुर्योधन का पूर्वजन्म में असुरयोनि में उत्पन्न होना देखकर महाभारत के आदिपर्व में वर्णन किया है॥ पूर्व जन्म में शुकदेव शुकपक्षी थे और उन्होंने शिव-गौरी संवाद को सुना था, ऐसा विद्वानों ने वर्णन किया है।

**भविष्य-ज्ञान** - अनागत-ज्ञान है। जिस प्रकार संभल नाम के ग्राम में कल्कि अवतार हो-गा, ऐसा भारतीय देखते हैं ॥१ ॥ पुराणों में भविष्यकाल में होने वाले राजाओं का वर्णन किया गया है ॥२ ॥"भविष्य पुराण" में उल्लेख किया गया है कि कलियुग के शूद्र लोग ब्राह्मणों के समान तथा ब्राह्मण शूद्रों के समान आचरण करेंगे ॥३ ॥ भविष्य में होने वाले सूर्य और चन्द्र ग्रहणों को बता दिया जाता है ॥४ ॥ कालज्ञान भी इसी में समावेशित माना जाता है। इस विद्या से अपनी और दूसरों की मृत्यु का समय भी ज्ञात हो जाता है। काल-ज्ञान के उपाय भेद से ही छाया-पुरुष की सिद्धि होती है ॥५ ॥

**(२) दूर अथवा अप्रत्यक्ष का दर्शन अथवा श्रवण** सर्वप्रथम अप्रत्यक्ष के दर्शन का वर्णन **करते हैं। यथा** हस्तिनापुर में स्थित होकर भी वेदव्यास द्वारा दी गई दिव्य दृष्टि के प्रभाव से संजय ने दूर कुरुक्षेत्र में हो रहे युद्ध को यथावत् देखते हुये धृतराष्ट्र को सुना दिया।

श्री कृष्ण ने द्वारिका में रहते हुये भी हस्तिनापुर में स्थित दु:शासन द्वारा किये द्रौपदी-चीर-हरण को देख लिया। योगसूत्र में लिखा है — चित्त की ज्योतिष्मती प्रवृत्ति का आलोक (सात्त्विक प्रकाश) का न्यास करने से सूक्ष्म, व्यवधान से व्यवहित और विप्रकृष्ट वस्तुओं का ज्ञान हो जाता है ॥(३/२४)

वेदव्यास-प्रदत्त विद्या से संजय ने अपने स्थान पर बैठे हुए ही दूरस्थ कुरुक्षेत्र में हुये कृष्णार्जुन-गीता-संवाद को यथावत् सुन लिया ॥१ ॥ योगसूत्र में उल्लिखित है—श्रवणयन्त्र का आकाश के साथ सम्बन्ध संयम से दिव्य श्रवणशक्ति प्राप्त होती है ॥(३/४०)

(३) **समस्त प्राणियों के शब्द का ज्ञान** — योगसूत्र में लिखा है — "शब्द, अर्थ और प्रत्यय के ज्ञान का परस्पर आरोप करने से संकर-ज्ञान अर्थात् ध्वनि और अर्थ को एक साथ पहचान कर सूक्ष्म ज्ञान कर लेना सर्वभूतरूत-ज्ञान कहलाता है।" (३/१७/"युधिष्ठिर और विदुर पक्षियों की वाणी के अर्थ को पहचानते थे॥ काम्पिल्य देश का राजा ब्रह्मदत्त चींटियों के शब्द को पहचानता था।

(४) **मनोविज्ञान** : मन का संकल्प अर्थात् मानसिक दृढता के समय शरीर की प्राणवायु संकीर्णता को प्राप्त होकर विकृत हो जाती है। विकृत होने के पश्चात् वह प्राणवायु रोमछिद्रों के द्वारा बाहर की ओर आकर फैल जाता है। शरीर के चारों और फैला यह प्राणवायु पुरुष के मन को जानने में सफल हो जाता है जैसा कि वेदमन्त्र में लिखा है — "मनुष्य मन में जो विचार करता है वह विचार वायु में फैल जाता है, वायु देवों के लिए कह देता है । हे पुरुष ! जैसा तेरा मन है वैसा वायु देवों के लिए कह देता है।"

ब्राह्मणों में भी सुना जाता है — "देवता मनुष्य के मन को जानते हैं। मनुष्य जैसा मन में संकल्प करता है, वह प्राणों में भी पहुंच जाता है।" "प्राण वायु है, जैसा पुरुष का मन है, वह वायु देवों को कह देता है।" (शत.ब्रा.३/३/३) "प्रत्यय में संयम का अभ्यास करने पर दूसरे के चित्त का ज्ञान हो जाता है।" (यो.सू)

(५) **भूगर्भज्ञान** : विशिष्ट औषधि से संस्कारित नेत्रों से नीचा मुख करके पृथ्वीतल के अन्दर दस हाथ गहराई तक के तथ्यों को साक्षात् देखने में समर्थ होना भूगर्भज्ञान-सिद्धि कहलाती है। इसी सिद्धि में दिव्य नेत्रांजन, अदृश्यांजन विधि अथवा दैवीदृष्टि इत्यादि को भी समावेशित मानना चाहिये ॥

(६) **भुवनज्ञान** : सप्तलोकसंग्रह का श्लोक है —

"ब्रह्मलोक त्रिभूमिक (तीन भूमियों का) लोक है, प्राजापत्यलोक उससे बड़ा है। महेन्द्र लोक स्वर्ग है। द्युलोक में तारा है और पृथ्वी पर प्रजा है ॥१ ॥ दक्षिण से लेकर मेरुपृष्ठ पर्यन्त भूलोक है ॥१ ॥ मेरुपृष्ठ से लेकर उत्तरी ध्रुव तक ग्रह, नक्षत्र और ताराओं से युक्त विचित्र अन्तरिक्ष लोक है। ॥२ ॥ उसके पश्चात् पांच प्रकार का महेन्द्र का लोक है, वह स्वर्गलोक

है ॥३ ॥ तत्पश्चात् प्रजापति का महर्लोक है ॥४ ॥ ब्रह्मलोक तीन है - जनःलोक, तपोलोक और सत्यलोक। इनका साक्षात् दर्शन कर लेना भुवनज्ञान है।"योगसूत्र" में लिखा है — "सूर्य में संयम कर लेने से भुवनज्ञान प्राप्त होता है॥"

(७) **औषधिप्रभावज्ञान** : जैसे सोम, हरीतकी (हरड़ै), विभीतकी (बहेड़ा), जंगिड़ा, अपामार्ग इत्यादि औषधियों के विस्तृत प्रभाव अथर्वसंहिता में मन्त्रों द्वारा उल्लिखित हैं, जिनके विषय में वास्तविक प्रभावज्ञान को दिव्य चक्षु से रहित व्यक्ति जानने में कदापि सक्षम नहीं हो सकता है। विद्वानों ने कहा है —

"जिनको ज्ञानज्योति का प्रकाश दिखाई दे गया है। जिनका चित्त सांसारिक भावों से बाधित नहीं है, जिनको भूत और भविष्य का ज्ञान प्रत्यक्ष के समान स्पष्ट है। जो अतिन्द्रिय विषयों को अपने दिव्य-नेत्रों से देख लेता है, जिनके वचन अनुमान मात्र से बाधित नहीं होते हैं॥२ ॥ (वा.प.कै. ६/३/१०९)

(८) **तारामण्डल तथा ज्योतिष प्रभाव का ज्ञान** : द्युलोक में जितने भी प्रकाशपुंज, ग्रह, नक्षत्र, प्रकाशमान हैं उनका प्रत्येक का ज्योतिष की दृष्टि से प्रभाव जान लेना केवल ऋषियों के लिए ही संभव है। उन असंख्य तारामण्डल को भी एक, दो और तीन के मण्डल के रूप में तीन प्रकार से विभक्त किये हुये इन तीनों त्रिक अर्थात् तीन समूहों के सम्बन्ध में महत्त्वपूर्ण प्रभाव वेदों में बतलाये गये हैं। यथा — "सप्तर्षि नाम से प्रसिद्ध सात तारे, जो कि जगत् के उत्पादक होने के कारण माता का स्थान ले लेते हैं। इन मातृरूप सात नक्षत्रों के साथ ध्रुव सृष्टि के आदि में उत्पन्न हुआ है। यह ध्रुव कर्मकर्ता यजमान को धन से सम्पन्न करता है॥" इत्यादि मन्त्रों के द्वारा ध्रुव इत्यादि तारों का प्रभाव-वर्णन किया गया है। योगसूत्र में भी लिखा है— "चन्द्र में संयम करने से ताराओं का व्यूहज्ञान होता है॥" (३/२६)

## ३— हृदयसंयमात् तपोबलसिद्धयोऽष्टौ ॥८ ॥

**(१) देवप्रत्यक्षीकरणम् कतिचिद् भावमालम्ब्य तत्र धारणाध्यानसमाधिसंयमे हृदयस्थमनस एवोपादानात् तत्तद्देवतारूपाविर्भावः एतच्च पुरायुगे तपश्चरताम‍ृषीणां मनुष्याणां वा भूयः श्रुतमितिहासपुराणेषु। भरद्वाजपुत्रो यवक्रीतो ब्राह्मणानामनधीता एव वेदाः प्रतिभान्त्विति कामनया घोरं तपस्तप्त्वेन्द्रं प्रत्यक्षीचकार। तमिन्द्र उवाच। अमार्ग एष विप्रर्षे येन त्वं यातुमिच्छसि। किं विधातेन ते विप्र गच्छाधीहि गुरोर्मुखादिति (भा.वन.१३५)। छायापुरुषसिद्धिरप्यत्रैव संनिविशते।**

**(२) बलगा कृत्या अभिचारविद्या। परविद्रोहाय पुरा क्रूराः कृत्यापुरुषाः स्त्रियो वा तपःप्रभावादुत्पाद्यन्ते स्म॥ राक्षसपुरुषाः स्त्रियो वा राक्षस्यस्तत्कालं जनिता निर्दिष्टपुरुषस्य प्राणानपहरन्ति विभीषयन्ति वा॥ यथा भरद्वाजरैभ्यौ**

सखायावास्ताम्। भरद्वाजपुत्रो यवक्रीतो रैभ्याश्रमं गत्वा रैभ्यपुत्रस्यार्वावसोः पत्नीं बलादाक्रम्य मैथुनायोपचक्रमे। रुदन्त्यास्तस्या वृत्तमभिज्ञाय स रैभ्यो मन्युनाविष्टो जटामेकामवलुञ्च्ययाग्नौ जुहाव। ततो जटाकारा नारी समुत्तस्थौ। पुनरन्यां जटामालुञ्च्याग्नौ जुहाव। ततो घोराक्षं भीमदर्शनं रक्षोऽभवत्। यवक्रीतो वध्यतामिति तौ रैभ्योऽब्रवीत्। भुञ्जानस्य यवक्रीतस्यादौ कृत्या कमण्डलुं जहार। ततः शूलहस्तेन रक्षसा काल्यमानोऽयमुच्छिष्टमुखोऽन्यत्र शरणमपश्यन्नग्निहोत्रशालां गन्तुमैच्छत्। तत्रान्धेन गृहरक्षिणा निगृहीतः पपात। शूलेन रक्षसाऽऽहतः प्राणाँस्तत्याज। (महाभा० वन० १३६)

(३) आत्मप्रयाणदर्शनम् मुमूर्षोः शिरःप्रदेशादूर्ध्वमाकाशे सद्य उत्क्रममाणमात्मानं प्रत्यक्षमनुपश्यति। यथा वेदव्यासो द्रोणास्यात्मानमूर्ध्वं गच्छन्तं ददर्श।

(४) मृतपुरुषदर्शनम्। मृतानां पुरुषाणां प्रतिकृतयश्छायापुरुषाः प्रत्यक्षं दर्श्यन्ते। यथा वेदव्यासो भारतयुद्धे मृतानां पुरुषाणां छायापुरुषान् परिदर्शयामास॥

"एष राजा दशरथो विमानस्थः पिता तव॥
लक्ष्मणेन सह भ्रात्रा त्वमेनमभिवादय॥१॥
लक्ष्मणेन सह भ्राता ददर्श पितरं प्रभुः॥
विमानशिखरस्थस्य प्रणाममकरोत् पितुः"॥२॥

इति रामायणे युद्धकाण्डे १२१ रावणवधान्ते रामेण दशरथो दृष्टोऽनुभाषितश्च॥

एतस्मिन्नेव काले तु जरत्कारुर्महातपः।
वायुभक्षो निराहारः शुष्यन्नहरहर्मुनिः॥१॥
स ददर्श पितॄन् गर्ते लम्बमानानधोमुखान्।
निराहारान् कृशान् दीनान् गर्ते स्वत्राणमिच्छतः॥२॥"

## इति भारतादिपर्वणि (४५) पितृदर्शनमुक्तम्।

(५) विराट्पुरुषदर्शनम्- यथा श्रीकृष्णेन भारतमहायुद्धोपक्रमेऽर्जुनाय भविष्यत्क्षणसंभावितस्य विश्वरूपस्य प्रागेव साक्षाकारः कारितः। यथा वा श्रीकृष्णेन दुर्य्योधनसभायां धृतराष्ट्राय दिव्यचक्षुः प्रदाय सर्वेभ्यः सभासद्भयो विश्वरूपं प्रदर्शितम्। यथा वा यशोदायै स्वमुखान्तरतो नानावैचित्र्यं परिदर्शितम्।

(६) मायाव्यामोहनी-यथा नारदाभिमानखण्डनार्थं कनखलप्रदेशे मायापुरी निर्म्माणं तत्र सुन्दरीस्वयंवरविधानं च। यमुनायां स्नानार्थमभिप्लुतस्य नारदस्याभिप्लवनोत्प्लवनयोरन्तरतः क्षणमात्रेऽवकाशे चत्वारिंशद्वर्षाणि माययातिवाहितानि। तत्र च नारदस्य स्त्रीभावं गमितस्य राज्ञा विवाहः पुत्रपौत्रादिसृष्टयः तेषां निःशेषाणां मृत्युः। ततो दुःखकातराया राजमहिष्यास्तस्याः शुद्धिस्नानार्थे यमुनायामागतायाः स्नात्वा जलादुत्प्लवन्त्याः पुनर्नारदस्वरूपेणाविर्भावः पुरा-

णेतिहासेषु स्मर्य्यते। मार्त्तिकावतनगराधीशः शाल्वः कृष्णेन सह युध्यन् द्वारकाधीशाह्वकपरिचारकरूपेण स्वमायापुरुषेण वसुदेवमृत्युसंवादं कृष्णाय श्रावयामास। क्षणेन पुनः शाल्वविमानाद्वसुदेवशिरश्छिद्यमानमधस्तात्कृष्णान्तिके निपातयामास। तद् दृष्ट्वा कृष्णः पूर्वं चिन्ताग्रस्तोऽभूत्। पश्चात्पुनः शाल्वकृतां मायां विज्ञाय निर्विषादः शाल्वं निपातयामास।

"तमेवमुक्त्वा रुदतीं सीतां मायामयीं च ताम्।
शितधारेण खड्गे निजघानेन्द्रिजत् स्वयम्।" ॥१॥ (इति यु. ८१)

रामायणे मेघनादेन मायासीतावध उक्तः॥

(७) उपश्रुतिविद्या खलु रात्रिनाम्नी सा विद्या यया गुप्तं विलीनमपह्नुतमज्ञातप्रदेशस्थमर्थं प्राणिनं वा परिमार्गमाणास्तमनायासेनोपलभन्ते। आकाशवाण्या वा शिशुवाचा वा कर्म्मान्तरव्यापृतमनुष्यवाचा प्रकारान्तरेण वा तत्स्थानमुपश्रुतं भवति यत्रैष परिमार्जितव्योऽर्थः स्थितो भवति। यथा देवराजे ब्रह्महत्यादोषेण क्वचित् प्रच्छन्ने नहुषे चैन्द्रं पदमध्यारूढे शची तयोपश्रुतिविद्यया तं देवराजं क्वचित्सरसि प्रच्छन्नं व्यजानात्।

तदुक्तं भारते –

"पुण्यां चेमामहं दिव्यां प्रवृत्तामुत्तरायणे॥
देवीं रात्रिं नमस्यामि सिध्यतां मे मनोरथः॥१॥
यत्रास्ते देवराजोऽसौ तं देशं दर्शयस्व मे।
इत्याहोपश्रुतिं देवीं सत्यं सत्येन दृश्यताम्॥२॥
प्रयतां च निशां देवीमुपातिष्ठत तत्र सा।
पतिव्रतात्वात् सत्येन सोपश्रुतिमथाकरोत्॥३॥
सरसस्तस्य मध्ये तु पद्मिनी महती शुभा।
बिसतन्तुप्रविष्टं च तत्रापश्यच्छतक्रतुम्॥४॥" (भार०उ०१३)

(८) संस्कारोपधानी -सा विद्या यया योगिराजः कस्यचिच्छिशोर्मूर्द्धनि हस्तं निधाय तस्मिन् सर्वविद्याप्रबोधान् संस्कारविशेषान् मन्त्रप्रभावेणाधत्ते। तदुक्तं मन्त्रमहोदधौ पञ्चमतरङ्गे –

(१) विद्वत्कुलसमुद्भूतमष्टवर्षं शिशुद्वयम्॥उपवेश्य तयोर्मूर्ध्नि करौ दत्वा जपेन्मनुम्॥८९॥ वेदान्तन्यायसंयुक्त्या विवदेते उभावपि। यः कौतुकी स आश्चर्यं विद्यायाः पश्यतु ध्रुवम्॥९०॥

(२) दूर्वोत्थया तु लेखन्या रोचनारसयुक्तया। बालस्याच्छिन्ननालस्य जिह्वायां विलिखेन्मनुम्॥८३॥ संप्राप्ते चाष्टमे वर्षे सर्वशास्त्रज्ञतामियात्।

**मन्त्रेणायुतसंजप्तां वचां बालस्य कण्ठतः ॥८४॥ बध्नीयात् पूवसंप्रोक्तं बलिं दत्वा विधानतः। द्वादशे वत्सरे प्राप्ते भक्षिता सा कवित्वकृत्॥८५॥इति॥**

## ३—हृदयसंयम से आठ तपोबल की सिद्धियाँ

(१) **देवप्रत्यक्षीकरण** : किसी भाव का आश्रय लेकर धारणा, ध्यान, समाधि द्वारा संयम में हृदयस्थित मन को ही कारण बनाकर तत् देवता के रूप को प्रकट कर लेना इत्यादि कथायें प्राचीनकाल में तपस्या में लीन रहने वाले ऋषियों और मनुष्यों के सम्बन्ध में इतिहास-पुराणादि में सुनी गई हैं। "यवक्रीत" नाम का भरद्वाज ऋषि का पुत्र था, जिसने ब्राह्मणो से बिना पढ़े ही वेदों का ज्ञान प्राप्त कर लिया। ऐसी कामना लेकर घोर तपस्या करके इन्द्र को साक्षात् प्रकट कर लिया था। इन्द्र ने उससे कहा —"हे विप्रर्षि" जो तुम कामना कर रहे हो, यह अमार्ग है। हे विप्र! अपना नाश करने से क्या लाभ? जाओ और गुरु से विद्या प्राप्त करो।" (म.भा.व.प. १३५)। छायापुरुष की सिद्धि भी इसी विद्या में माननी चाहिये।

(२) **बलगा** : कृत्या, अभिचारविद्या को बलगा कहते हैं। प्राचीन युग में क्रूर अर्थात् दुष्ट लोगों द्वारा दूसरों का विनाश करने के लिए तपस्या के प्रभाव से कृत्यापुरुष अथवा कृत्या-स्त्री को उत्पन्न कर लिया जाता था। दुष्ट पुरुषों द्वारा तत्काल उत्पन्न किये गये राक्षस पुरुष अथवा स्त्रियाँ निर्दिष्ट पुरुष के प्राणों का हरण कर लेते थे अथवा डरा देते थे। जैसे भरद्वाज और रैभ्य दोनों मित्र थे। भरद्वाज का पुत्र यवक्रीत रैभ्य के आश्रम में गया और रैभ्य के पुत्र अर्वावसु की पत्नी को बलपूर्वक खींचकर बलात्कार करने के लिए उद्यत हुआ। रोती हुई अपनी पुत्रवधू के वृत्तान्त को जानकर रैभ्य ने क्रोध से भरकर अपनी जटा में से एक बाल खींचकर उस बाल का अग्नि में हवन कर दिया। जब जटा के आकार की एक स्त्री उत्पन्न हुई। फिर रैभ्य ने दूसरी जटा को नोंचकर अग्नि में हवन किया तो एक घोर भयानक नेत्रों वाला, विशाल-विकराल दर्शन वाला एक राक्षस उत्पन्न हुआ। उन दोनों को रैभ्य ने कहा "यवक्रीत को मार डालो।" उस कृत्या ने भोजन करते हुए यवक्रीत का पहले तो कमण्डलु छीन लिया। तत्पश्चात् वह यवक्रीत शूलधारी राक्षस द्वारा आह्वान किया जाता हुआ जानकर उच्छिष्ट (जूठे) मुंह से ही अन्यत्र शरण न देखता हुआ यज्ञशाला में जाने के लिए तैयार हुआ। वहाँ यज्ञशाला के अन्धे रक्षक ने उसे पकड़ लिया और वह गिर गया। तब राक्षस के द्वारा शूल से मार दिया गया और उसने अपने प्राणों का त्याग कर दिया॥(भा. वन. १३६)

(३) **जाती हुई आत्मा के दर्शन** : ज्ञानी पुरुष मरणासन्न व्यक्ति के मस्तिष्क भाग से ऊपर की ओर आकाश में शीघ्रता से जाती हुई आत्मा को प्रत्यक्ष देख लेता है। जैसे वेदव्यास ने द्रोणाचार्य की आत्मा को ऊपर की ओर जाते हुए प्रत्यक्ष देखा॥

**(४) मृत पुरुष के दर्शन** : मरे हुए पुरुषों की आकृतियां छायापुरुष के रूप में प्रत्यक्ष दिखाई देती हैं। जैसे वेदव्यास ने महाभारत के युद्ध में मरे हुए पुरुषों की आकृति रूप छायापुरूषों को दिखा दिया था। वाल्मीकि-रामायण में लिखा है —

"यह विमान पर बैठे हुए तुम्हारे पिता राजा दशरथ ही हैं। आप अपने भाई लक्ष्मण के साथ इनको नमस्कार करो। तब विमान के शिखर पर बैठे हुए अपने पिता दशरथ को प्रभु ने प्रणाम किया॥१-२॥

इस प्रकार रामायण के युद्धकाण्ड के १२१वें सर्ग में रावणवध के पश्चात् भगवान् राम ने पिता दशरथ को देखा और उनसे वार्तालाप भी किया।

महाभारत में भी पिता के दर्शन के सम्बन्ध में कहा गया है —

"उस काल में महान् तपस्वी जरत्कारु ने तपस्या करते हुए केवल वायु मात्र का भक्षण करते हुए, निराहार रहकर दिन-प्रतिदिन कृशता को प्राप्त होकर अपने पिता को गड्डे में नीचा मुख किये लटकते हुये देखा, जो निराहार थे, कृशकाय थे और अत्यन्त दीनावस्था में गर्त में रहते हुए अपनी मुक्ति की इच्छा कर रहे थे॥१-२॥ (महा.भा.४५)

**(५) विराट्पुरुष-दर्शन** : जैसे महाभारत के युद्ध के प्रारम्भ में ही श्रीकृष्ण ने अर्जुन को तत्काल सम्भावित घटनाओं का तथा विराट् रूप का दर्शन पहले ही करा दिया था। श्रीकृष्ण ने ही जैसे दुर्योधन की सभा में धृतराष्ट्र को दिव्यनेत्र प्रदान करके समस्त सभा-सदों को विश्वरूप का दर्शन कराया। इसी प्रकार जैसे यशोदा को अपने मुख में विभिन्न प्रकार की विचित्रताओं से युक्त विश्व का दर्शन कराया॥

**(६) मोहित करने वाली माया** : जैसे ऋषि नारद के अभिमान को मर्दित करने के लिए कनखल प्रदेश में मायानगरी की रचना की गई। इतिहास-पुराणों में स्मरण किया गया है कि नारदमुनि ने स्नान के लिए यमुना नदी में जैसे ही डुबकी लगाई और बाहर निकले, इसी सूक्ष्मकाल में ही माया से चालीस वर्ष की अवधि व्यतीत हो गई। और उसी स्नान के अनन्तर नारद स्त्रीभाव को प्राप्त हो गये। इनका राजा से विवाह हुआ, पुत्र-पौत्रादि का जन्म हुआ और उन सभी की मृत्यु हो गई। तत्पश्चात् दुःख से विह्वल वह राजमहिषी शुद्धिस्नान के लिए यमुना नदी पर आई और स्नान करके जैसे ही बाहर आई वैसे ही नारद के रूप में प्रकट हो गई। मार्तिकावान् नगरी के राजा शाल्व ने कृष्ण के साथ युद्ध करते हुए द्वारकाधीश आहुक के सेवक के रूप में अपने माया-पुरुष के द्वारा श्रीकृष्ण को वसुदेव की मृत्यु का समाचार सुनवाया। क्षणभर में ही फिर शाल्व ने माया के द्वारा ही अपने विमान से वसुदेव का कटा हुआ सिर पृथ्वी पर श्रीकृष्ण के पास गिरा दिया। उस कटे हुए मस्तक को देखकर पहले तो श्रीकृष्ण चिन्तित हुए, परन्तु कुछ क्षण पश्चात् ही शाल्व द्वारा की गई माया को जानकर विषादरहित होकर शाल्व को मार गिराया।

रामायण के युद्धकाण्ड में लिखा है—

"इस प्रकार कह कर तीक्ष्णधार की तलवार से उस माया-मयी सीता का मस्तक स्वयं इन्द्रजित् ने काट दिया ॥ (रामा.यु.८१)

इस प्रकार रामायण में मेघनाद द्वारा मायासीता के वध का वर्णन किया गया है।

**(७) उपश्रुतिविद्या** : रात्रि नाम की यह विद्या है, जिसके द्वारा गुप्त, विलीन, छिपाया हुआ, अज्ञात प्रदेश में रखा हुआ धन अथवा मनुष्य को ढूंढने वाला बिना प्रयत्न के ही प्राप्त कर लेता है। आकाशवाणी से, शिशु की बोली से अथवा अन्य कार्य में संलग्न मनुष्य की वाणी से या अन्य किसी प्रकार से जहाँ यह खोजने योग्य धन रखा हो, वह स्थान उपश्रुत हो जाता है। जैसे देवराज इन्द्र ब्रह्महत्या के दोष से किसी गुप्त स्थान पर जाकर छिप गये और राजा नहुष ने इन्द्र का पद धारण कर लिया। तब शची ने इसी उपश्रुतिविद्या से देवराज इन्द्र को किसी तालाब में छिपा हुआ जान लिया ॥

महाभारत में कहा गया है —

"उत्तरायण के दिन जो यह पुण्य और दिव्यरात्रि आ रही है, उसकी अधिष्ठात्री देवी को मैं नमस्कार करती हूँ, वह मेरे मनोरथ की सिद्धि करे ॥१ ॥

"जहाँ देवराज इन्द्र हो वह स्थान मुझे दिखाइये।" ऐसा कहकर उसने उपश्रुति नामक देवी की उपासना की । क्योंकि सत्य का सत्य से ही दर्शन होता है ॥२ ॥

इस प्रकार शची ने मन और इन्द्रियों को वश में रखकर रात्रि देवी की उपासना की। पतिव्रता और सत्यपरायणा होने के कारण उसने उपश्रुति नाम की देवी का आह्वान किया ॥३ ॥

उस सरोवर के मध्य एक बहुत बड़ी कमलिनी थी। उसी कमलिनी के बिसतन्तु में प्रवेश करके वहाँ छिपे हुए शतक्रतु इन्द्र को देखा ॥(भा.उ..।३)

**(८) संस्कारोपधानी विद्या** : जिस विद्या के द्वारा कोई सिद्ध पुरुष किसी बालक के सिर पर हाथ रखकर उसमें समस्त विद्याओं के प्रबोध करने वाले संस्कार विशेषों को मन्त्र के प्रभाव से धारण करा देता है।"मन्त्रमहोदधि" ग्रन्थ के पांचवें तरंग में लिखा है—

विद्वत्कुल में उत्पन्न आठ वर्ष के दो बालकों को बैठा कर उनके मस्तक पर दोनों हाथ रखकर मन्त्र जाप करें तो वे दोनों वेदान्त और न्याय के ज्ञान से युक्त होकर शास्त्रार्थ करने लग जाते हैं। इस विचित्र कुतूहलयुक्त विद्या का आश्चर्य निश्चय ही देखें ॥९० ॥

दूर्वा से निर्मित लेखनी को गोरोचन के रस में डुबोकर नाल काटने से पूर्व बालक की जिह्वा पर मन्त्र लिखें। ऐसा बालक आठ वर्ष की आयु में ही समस्त शास्त्रों का ज्ञाता

हो जाता है दस हजार बार मन्त्र से अभिमन्त्रित "बचा" नाम की ओषधि को बालक के कण्ठ में बांध दी जाये और पूर्वोक्त बलिविधि से बलि-विधान किया जाये और बारहवें वर्ष में वह कण्ठ में बंधी हुई बचा नाम की ओषधि को खा ले तो वह बचा कवित्व-शक्तिप्रदायिका होती है ॥९४-८५ ॥

## ४—प्राणसंयमाद्दैवसिद्धयोऽष्टौ यथा—

(१) कायव्यूहः युगपदनेकशरीरधारणमनेकदेशे भिन्नशरीरेणावस्थानं च। यथा श्रीकृष्णो रासलीलायां प्रतिगोपीशरीरसहकारेणान्यान्यशरीरोपपन्नस्तस्थौ। यशोदासदेशं तिष्ठन् गोपीनां गृहेष्वपि तत्कालं तस्थौ ॥१ ॥

(२) परकायप्रवेशः—स्वशरीरं पृथक् संस्थाप्य शुद्धेनात्मना शरीरान्तरे प्रवेशः तदुक्तं योगसूत्रेबन्धकारणशैथिल्यात् प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः ।३ ।३७ ॥इति ॥ यथा शंकराचार्य्यो राज्ञः शरीरे विवेश। यथा वा किन्दमो नाम मुनिर्मृगशरीरे प्रविश्य मृग्या सह रेमे। (भा० आदि० १२३)

(३) प्राणसंहारिणी-यथा वेनस्य राज्ञ उन्मार्गं गच्छतः प्राणान् कुशाघातेन महर्षयोऽपजह्रुः ।

(४) मृतसंजीवनी दैवीशक्तिः—उत्क्रान्तप्राणे शरीरे पुनः प्राणसंधानम्। यथातिवेगेन धावमानानां रथाश्वानां प्रत्याघातान्मृतं ब्राह्मणशिशुं जानः पुरोहितः पुनरुज्जीवयामासेति बृहद्देवतायामुक्तम् ॥१ ॥ सांदीपनिना गुरुदक्षिणात्वेन मृतं मे पुत्रमानयेत्युक्तः कृष्णस्तत्पुत्रं स्वयमुज्जीव्य गुरवेऽर्पयामास ॥२ ॥ अथ रैभ्यभरद्वाजौ सखायावास्ताम्। रैभ्यः कृत्यामुत्पाद्य भरद्वाजसुतं यवक्रीतं मारयामास। पुत्रशोकपरितप्तो भरद्वाजः स्वयं प्राणांस्तत्याज। अथ रैभ्यपुत्रो ज्येष्ठः परावसुर्मृगभ्रमात् स्वपितरं घातयामास। रैभ्यस्य कनिष्ठपुत्रोऽर्वावसुः ज्येष्ठभ्रातुर्ब्रह्मवध्याप्रायश्चित्तमचरत्। सोऽर्वावसुरुग्रं तपः कृत्वा सूर्य्यस्य रहस्यवेदं चक्रे। तेन कर्मणावार्वसोरग्न्यादयो देवाः प्रीता अभवन्। अर्वावसुप्रार्थनया प्रसन्ना देवा रैभ्यं भरद्वाजं यवक्रीतं चेत्येतान्मृतान् पुनरुज्जीवयामासुः । सूर्य्यवेदस्य च प्रतिष्ठां चक्रुः ।

"अर्वावसुप्रार्थनया देवाः सेन्द्रपुरोगमाः ॥
संजीवयित्वा तान् सर्वान् पुनर्जग्मुस्त्रिविष्टपम्" ॥१ ॥

(इति भारते वन १३८ तथोक्तेः)

अथ हैहयकुमारोऽरिष्टनेमिस्ताक्ष्र्यस्य पुत्रं मृगभ्रमाज्जघान। स ब्रह्मवध्यानिर्विण्णस्तन्निष्कृत्यै ताक्ष्र्याश्रमं गत्वा निष्कृतिमर्थयामास ।ताक्ष्र्यस्तूचे। यस्त्वया ब्राह्मणो हतः सोऽयं ममैव पुत्र आसीत्। स मयोज्जीवितोऽयं तवाग्रे तिष्ठति। कथमयं जीवितोऽभूदिति विस्मयेन पृष्टस्ताक्ष्र्य उवाच—

"सत्यमेवाभिजानीमो नानृते कुर्म्महे मनः ॥
स्वधर्ममनुतिष्ठामस्तस्मान्मृत्युभयं न नः ॥१ ॥
यद् ब्राह्मणानां कुशलं तदेषां कथयामहे ॥
नैषां दुश्चरितं ब्रूमस्तस्मान्मृत्युभयं न नः ॥२ ॥
अतिथीनन्नपानेन भृत्यानत्यशनेन च ॥
संभोज्य शेषमश्नीमस्तस्मान्मृत्युभयं न नः ॥३ ॥
शान्ता दान्ता क्षमाशीलास्तीर्थदानपरायणाः ।
पुण्यदेशनिवासाश्च तस्मान्मृत्युभयं न नः ॥४ ॥

(इति भारते वन. १८४)

अकालमृत्युप्रतिघातः प्रदर्शितः ॥ स्वायुःप्रदानमप्यत्रैव संनिविशते । यथा सर्पदंशनेन मृतायाः प्रमद्वराया रुरुणा स्वार्धायुःप्रदानेन पुनरुज्जीवनम् । यथा वा रामचन्द्राय दशरथेन स्वजीवनशेषायुःप्रदानम् ॥ विषहरविद्याप्यत्रैव संनिविशते । यथा ब्रह्मणा कश्यपाय विषहरविद्यादानम् ।यथा वा हरिद्वारे नागेन भीमाय विषहरविद्यादानम् ॥

(५) स्थाणूज्जीवनी—शुष्कतरोः पुनरार्द्रीभावात् पर्णोद्गमनम् । गायत्रीमन्त्रप्रभावेणाभिमन्त्रिताभिरद्भिः परिषिक्तः शुष्कतरुस्तं रसमात्मानं गृहीत्वा पुनरुज्जीवितो भवति । अतस्तत्र सद्यः पर्णान्याविर्भवन्ति । यथोक्तं यजुर्ब्राह्मणे —"तं हैतमुद्दालक आरुणिर्वाजसनेयाय याज्ञवल्क्यायान्तेवासिने उक्त्वोवाच—य एतं शुष्के स्थाणौ निषिञ्चेत् जायेरन् शाखाः प्ररोहेयुः पलाशानीति ।"

(६) छायाग्रहणी—प्राणिनः शरीरच्छायां तच्छरीरगन्धपर्य्याप्तामाक्रम्य तद्द्वारा तत्प्राणि-शरीरानुकर्षणम् । यथाऽऽकाशमार्गेण समुद्रमुल्लङ्घयतो हनुमतश्छायां ग्रसित्वा सिंहिकया समुद्रस्थया हनुमानाकाशस्थोऽधस्तान्निपातितः ।

(७) आकृतिपरिवर्तिनी—शरीराकृतेरन्यजातीयाया अन्यजातीयतासम्पादनम् । यथा-मृग्यामैथुनं चरतो मृगरूपस्य किन्दमस्य मुनेः पाण्डुना मृगयां चरता हननम् । यथा वा मनुष्याकारो विष्णुर्वराहो मोहिनी वा समपद्यत । धर्मः शुनो रूपं दध्रे । शिविपरीक्षायामग्निः कपोतोऽभूदिन्द्रः श्येनः ।
"इन्द्रः श्येनः कपोतोऽग्निर्भूत्वा यज्ञेऽभिजग्मतुः ।
ऊरुं राज्ञः समासाद्य कपोतः श्येनजाद्भयात् ॥१ ॥
शरणार्थी तदा राजन्निलिल्ये भयपीडितः ।"

(वन०१३०) इति भारतोक्तेः ।

स तदा राक्षसेन्द्रेण संदिष्टो रजनीचरः ।
शुको विहङ्गमो भूत्वा तूर्णमाप्लुत्य चाम्बरम् ॥१ ॥
स गत्वा दूरमध्वानमुपर्य्युपरि सागरम् ।
संस्थितो ह्यम्बरे वाक्यं सुग्रीवमिदमब्रवीत् ॥२ ॥

**(यु०२०) इति रामायणे राक्षसः शुकरूपधारणमुक्तम्। रूपान्तरीकरणमिदं पुरायुगे देवकुले भूयसाभ्यस्तमासीत् अद्भुतरूपकरणमप्यत्रैव संनिविशते। यथा नृसिंहो यथा वा शरभः।**

**(८) लिङ्गपरिवर्तिनी—लिङ्गयोर्निव्यत्यासः। अनया विद्यया पुंसां स्त्रीत्वं स्त्रीणां पुंस्त्वं च शक्यते कर्तुम्। यथा शिवः कदाचिदुमावने प्रविशतः सुद्युम्नस्य राज्ञः स्त्रीत्वमिलायाश्च पुंस्त्वं चक्रे। इति भारताख्याने पुराणेषु च सर्वेष्विलोपाख्याने सुप्रसिद्धम्।**

## ४—प्राणों का संयम करने से आठ प्रकार की दैव-बल सिद्धियाँ

**(१) काय-व्यूह-रचना** : एक साथ अनेक शरीर धारण करना अथवा एक ही समय भिन्न-भिन्न शरीरों से अनेक स्थानों पर रहना। जैसे श्रीकृष्ण रासलीला के समय प्रत्येक गोपीशरीर के साथ रहते हुए विभिन्न शरीरों के रूप में विद्यमान थे। यशोदा के पास रहते हुए भी उसी समय गोपियों के घरों में विराजमान थे ॥१ ॥

**(२) परकाया-प्रवेश** : अपने शरीर को पृथक् रखते हुए शुद्ध आत्मा से दूसरे शरीर में प्रवेश करना। इस सम्बन्ध में योगसूत्र में लिखा है — "बन्धकार को शिथिल करके प्रचार का संवेदन करने से आत्मा का परकाया में प्रवेश किया जा सकता है। (३/३७)॥ जैसे शंकराचार्य ने राजा के शरीर में प्रवेश किया, तथा किन्दिम नाम के मुनि ने मृग के शरीर में प्रवेश करके मृगी के साथ रमण किया ॥(भा.आदि १२३)

**(३) प्राणसंहारिणी विद्या** : जैसे कुमार्ग पर जाते हुए वेन राजा के प्राणों को महर्षियों ने कुशा के आघात से ही नष्ट कर दिया था॥

**(४) मृत-संजीवनी दैवी शक्ति** : शरीर से प्राणों के निकल जाने पर शरीर में पुनः प्राणों का संधान कराना मृतसंजीवनी विद्या है। जैसे बृहद्देवता में लिखा है-अत्यन्त वेग से भागते हुए रथ के घोड़ों की चोट से मरे हुए ब्राह्मण के बालक को पुरोहित ने पुनः जीवित कर दिया ॥१ ॥ सान्दीपनि मुनि ने गुरुदक्षिणा के रूप में श्रीकृष्ण से कहा - "मेरा पुत्र वापस लाओ ॥" ऐसा कहने पर कृष्ण ने उसके पुत्र को स्वयं जीवित किया और गुरु को समर्पित कर दिया ॥२ ॥ रैभ्य और भरद्वाज दोनों मित्र थे। रैभ्य ने कृत्या को उत्पन्न करके भरद्वाज के पुत्र यवक्रीत को मार दिया था। पुत्रशोक से सन्तप्त भरद्वाज ने स्वयं प्राणों का त्याग कर दिया। तत्पश्चात् रैभ्य के ज्येष्ठ पुत्र परावसु ने मृग के भ्रम से अपने पिता को मार डाला। रैभ्य के कनिष्ठ पुत्र अर्वावसु ने अपने ज्येष्ठ भ्राता के ब्रह्महत्या के पाप का प्रायश्चित्त किया। उस अर्वावसु ने घोर तपस्या कर के सूर्य के रहस्य वेद को जान लिया। इस कर्म को करने से अर्वावसु पर अग्नि इत्यादि देवता प्रसन्न हो गये। अर्वावसु

की प्रार्थना से देवों ने मरे हुए रैभ्य, भरद्वाज और यवक्रीत को पुनर्जीवित कर दिया। इस प्रकार सूर्यदेव की प्रतिष्ठा की ॥महा.भा. में लिखा है—

"अर्वासु की प्रार्थना से इन्द्रादि देव प्रसन्न हुये और उन सबको पुनर्जीवित करके स्वर्ग को चले गये ॥"

हैहय के पुत्र अरिष्टनेमि ने ताक्ष्र्य के पुत्र को मृग के भ्रम से मार दिया था। तब उसने ब्रह्महत्या से खिन्न होकर उसके निराकरण के लिए ताक्ष्र्य से प्रार्थना की। तब ताक्ष्र्य बोले —"जो ब्राह्मण तुम्हारे द्वारा मारा गया है वह मेरा ही बेटा था। अब वह मेरे द्वारा पुनर्जीवित कर दिया गया है और यह तुम्हारे सामने ही बैठा है।" "यह कैसे पुनर्जीवित हुआ" इस प्रकार पूछे जाने पर ताक्ष्र्य बोले—

"हम केवल सत्य ही जानते हैं, तथा कभी असत्य में मन नहीं करते हैं। हम अपने ही सत्यक्रर्म रूप धर्म में ही स्थिर रहते हैं। इसलिए हमें मृत्यु का भय नहीं है ॥१ ॥

ब्राह्मणों का जो कुशल कर्म है, उसी का हम विवेचन करते हैं, इनके दुराचरणों को कभी नहीं देखतें हैं। इसलिए हमें मृत्यु का भय नहीं है ॥२ ॥

अतिथियों के अन्न पान से तथा सेवकवृन्द के भोजन करने से शेष बचे हुए अन्न का हम भोजन करते हैं। इसलिए हमें मृत्यु का भय नहीं है ॥३ ॥

हम शान्तस्वभाव हैं, इन्द्रियों का दमन करते हैं, परदोष को क्षमा करने वाले हैं, तीर्थस्थल पर दान देने में रुचि रखते हैं और पुण्यस्थान में निवास करते हैं। इसलिए हमें मृत्यु का भय नहीं है ॥४ ॥ (भारत.वन. १८४)

अकाल मृत्यु का प्रतिघात भी बताया गया है। अपनी आयु दूसरे को दे देना भी इसी में समझना चाहिये। जैसे सर्पदंश से मरी हुई प्रमद्वरा को रुरु ने अपनी आधी आयु प्रदान करके पुनर्जीवित कर दिया था। जैसे दशरथ के द्वारा श्रीरामचन्द्र को अपनी शेष आयु प्रदान करना! विष को खींच लेने की विद्या भी इसी में सन्निविष्ट है। जैसे ब्रह्मा के द्वारा कश्यप ऋषि को विषहर विद्या का दान करना और जैसे हरिद्वार में नाग ने भीम को विषहर विद्या का दान दिया था।

(५) **स्थाणूज्जीवनी** : शुष्क वृक्ष को पुनः गीला करके हरा भरा बनाकर पर्तों को उगा देना। गायत्री मन्त्र से अभिमन्त्रित जल से सींचा हुआ सूखा वृक्ष भी पुनः अपने रस को ग्रहण करके पुनर्जीवित हो जाता है। इस मंत्र के प्रभाव से शीघ्र ही हरे पत्ते प्रकट हो जाते हैं। यजुर्वेद के ब्राह्मण में लिखा है — "उद्दालक आरुणि ने अपने शिष्य वाजसनेय याज्ञवल्क्य से कहा — " यदि गायत्री से अभिमन्त्रित इस जल को सूखे ठूंठ में सीचें तो इसकी शाखाओं में कोमल पत्ते उग जायेंगे।"

**(६) छायाग्रहणी विद्या** : प्राणियों की छाया को उसके शरीर की गन्ध का अधिग्रहण करते हुए खींच कर उसी छाया के द्वारा प्राणी को खींच लेना छायाग्रहणी विद्या है। जैसे आकाश-मार्ग से समुद्र को लांघते समय हनुमान् की छाया को खाकर समुद्र-स्थित सिंहिका नाम की राक्षसी के द्वारा आकाशस्थित हनुमान् को भी नीचे गिरा देना छायाग्रहणी विद्या ही है॥

**आकृतिपरिवर्तिनी विद्या** : शरीर की आकृति से अन्य जाति से किसी अन्य जाति में प्रवेश कर लेना। जैसे मृगी के साथ रमण करते हुए मृग रूपधारी किन्दिम ऋषि की पाण्डु द्वारा शिकार करते हुए मृत्यु होना अथवा जैसे मनुष्याकार भगवान् विष्णु ने वराह अथवा मोहिनी का रूप धारण कर लिया था। धर्म ने कुत्ते का रूप धारण कर लिया था। शिवि राजा की परीक्षा के लिए अग्नि कबूतर बना और इन्द्र ने बाज का रूप धारण किया॥ महाभारत में लिखा है —

"इन्द्र ने बाज पक्षी का रूप धारण किया तथा अग्नि ने कबूतर का रूप धारण किया तब कबूतर बाज के भय से पीड़ित शरण की इच्छा से राजा की गोद में जाकर छिप गया।" (म.भा.वन. १३०)

रामायण में लिखा है — "तब राक्षसराज रावण का संदेश लेकर आया वह राक्षस शुकपक्षी का रूप धारण करके शीघ्र ही आकाश में उड़कर दूर समुद्र के ऊपर आकाश में ही रहते हुए सुग्रीव को यह कहने लगा॥" (रामा.यु.२०) इस प्रकार रामायण में राक्षस का शुकरूप धारण करना कहा गया है।

प्राचीनकाल में देवकुल में बहुत से लोग इस रूपान्तरण की विद्या में अभ्यस्त थे। अद्भुत रूप धारण करना भी इसी विद्या में समाविष्ट मानना चाहिये। जैसे नृसिंह रूप धारण करना अथवा सिंहघाती "अष्ट-पद-शरभ" का रूप धारण करना॥

**लिङ्गपरिवर्तिनी विद्या** : मनुष्य की योनि को बदलकर लिङ्ग परिवर्तन करना। इस विद्या के द्वारा पुरुषों का स्त्रीत्व और स्त्रियों का पुंस्त्व में परिवर्तन करना संभव है। जैसे किसी समय शिव ने पार्वती के वन में प्रवेश करते हुए सुद्युम्न राजा को स्त्रीरूप तथा इला को पुरुष रूप में बदल दिया था। महाभारत और पुराणों में यह आख्यान प्रसिद्ध है॥

## नैगमीयमन्त्रबलसिद्धयोऽष्टौ।

**(१) सर्पाकर्षिणी—सर्पाकर्षिण्या विद्यया मन्त्रबलेन सर्पाः दूरस्था अपि अभीष्टदेशे आकृष्यन्ते निगृह्यन्ते निर्विषीक्रियन्ते यथा जनमेजयकृते सर्पसत्रे याजकाः समिद्धेऽग्नौ मन्त्रैः सर्पानाजुहुवुः।**

**"क्रोशयोजनमात्रा हि गोकर्णस्य प्रमाणतः।—**
**पतन्त्यजस्रं वेगेन प्रदीप्ते हव्यवाहने॥१॥**
**उच्चावचाश्च बहवो नानावर्णा विषोल्बणाः।**

घोराश्च परिघप्रख्या दन्दशूका महाबलाः ॥२॥"

(इति भारते '५२)

(२) अग्निस्तम्भनीविद्या सा यया मन्त्रेणाग्निः शीतलीक्रियते। तेनाग्नौ प्रविष्टोऽपि पुरुषो न दह्यते। सोऽग्निस्तम्भस्त्रेधा सम्पद्यते। सत्येन मन्त्रेण मणिना च। सत्येन यथा धर्माधिकारिभिरपराधी पुरुषो दिव्यपरीक्षया हस्तनिहितेनाग्निना परीक्ष्यते। यथा वा सीता लङ्कायां सत्येनाग्नौ प्रवेशिता परीक्षिताऽऽसीत् ॥१॥ मन्त्रेण यथा नलो महाराजोऽग्निं स्तम्भयति स्म।

तदुक्तं भारते —

"अन्यच्च तस्मिन् सुमहदाश्चर्य्यं लक्षितं मया।
यदग्निमपि संस्पृश्य नैवासौ दह्यते शुभे॥" (वन० ७५)

अथ ग्रामदाहे तृणगृहान् प्रदहन्नग्निर्मन्त्रेण स्तम्भितो गृहान्तरं न दाहयति इति मंत्रशास्त्रे निरूप्यते ॥२॥ अथ मणिश्चन्द्रकान्तमणिः। स द्विविधः औषधिः, प्रस्तरश्च। तत्रैते श्लोका द्रष्टव्याः—

अमरलता वितता स्याद् यस्य तरोरुपरि तस्य चाधस्तात्। भूमावन्तर्निहितं तस्या मूलं तु कन्दमन्वेष्यम् ॥१॥ वृक्षाधस्तात् परितस्तृणान्युपस्तीर्य्य दाहयेच्छिखिना। यत्र तु न दह्यते तत् तत्रैवाधः स्थितं कन्दम् ॥२॥ अतिशीतं तत्कन्दं स उच्यते चन्द्रकान्तमणिः। तत्सानिध्यादग्निः शीतलतामेति नैष दाहयति ॥३॥ तद्रसलिप्ते हस्ते धारयितुं शक्यते वह्निः। तद्रसलिप्तशरीरः शक्नोत्यग्नौ प्रवेष्टुमक्लेशात् ॥४॥

एवं प्रस्तरोऽप्ययश्चन्द्रकान्तमणिः।सोऽतिशीतलः प्रस्तरः संनिधानमात्रेणाग्निं शीतलयति॥ तत्संनिहितोऽग्निः स्पृष्टोऽपि न दाहयति। चन्द्रकान्तसंनिहितोऽप्यग्निः सूर्य्यकान्तमणिसंनिधानात्पुनर्दाहयति। चन्द्रकान्तोपजनितशीतलतायाः सूर्य्यकान्तेन निरस्तत्वात्॥

(३) अक्षय्यकरणी—सा विद्या यया गृहभाण्डस्थमन्नं परःसहस्रैर्भुज्यमानमपि न क्षीयते। पूर्वं तावत् सूर्य्यमाराधयमानेन युधिष्ठिरेण सूर्य्यादेकं पिठरमुपलब्धं तत्प्रभावादन्नमक्षय्यमासीदित्युक्तं भारते —

गृहणीष्व पिठरं ताम्रं मया दत्तं नराधिप।
यावद् वर्त्स्यति पाञ्चाली पात्रेणानेन सुव्रत ॥१॥
फलमूलामिषं शाकं संस्कृतं यन्महानसे।
चतुर्विधं तदन्नाद्यमक्षय्यं ते भविष्यति ॥२॥
संस्कृतं प्रसवं याति स्वल्पमन्नं चतुर्विधम्।
अक्षय्यं वर्द्धते चान्नं तेन भोजयते द्विजान् ॥३॥

भुक्तवत्सु च विप्रेषु भोजयित्वाऽनुजानपि।
शेषं विघससंज्ञं तु पश्चाद् भुङ्क्ते युधिष्ठिरः ॥४॥
युधिष्ठिरं भोजयित्वा शेषमश्नाति पार्वती।
द्रौपद्यां भुज्यमानायां तदन्नं क्षयमेति च॥५॥
अथ यत्किञ्चिन्मात्रेणैकस्मिन्नव्ययात्मनि तर्पिते ततोऽन्येषामात्मनां तर्पणमप्यत्रैव संनिविशते। (वन०३)
ततः कदाचिद्दुर्वासाः सुखासीनाँस्तु पाण्डवान्।
भुक्त्वा चावस्थितां कृष्णां ज्ञात्वा तस्मिन् वने मुनिः॥१॥
अभ्यागच्छत् परिवृतः शिष्यैरयुतसंमितैः।
दृष्ट्वायान्तं तमतिथिं स च राजा युधिष्ठिरः॥२॥
विधिवत् पूजयित्वा तमातिथ्येन न्यमन्त्रयत्।
जगाम च मुनिः सोपि स्नातुं शिष्यैः सहानघः॥३॥
एतस्मिन्नन्तरे राजन् द्रौपदी योषितां वरा।
चिन्तामवाप परमामन्नहेतोः पतिव्रता॥४॥
सा चिन्तयन्ती च तदा नान्नहेतुमविन्दत।
मनसा चिन्तयामास कृष्णं कंसनिषूदनम्॥५॥
द्रौपद्याः संकटं ज्ञात्वा द्वारकास्थः स माधवः।
पार्श्वस्थां शयने त्यक्त्वा रुक्मिणीं केशवः प्रभुः॥६॥
तत्राजगाम त्वरितो ह्यचिन्त्यगतिरीश्वरः।
ततस्तामब्रवीत् कृष्णः क्षुधितोऽस्मि भृशातुरः॥७॥
शीघ्रं भोजय मां कृष्णे लज्जिता वाक्यमब्रवीत्॥८॥
स्थाल्यां भास्करदत्तायामन्नं मद्भोजनावधि।
भुक्तवत्यस्म्यहं देव तस्मादन्नं न विद्यते॥९॥
कृष्णे न नर्मकालोऽयं क्षुच्छ्रमेणातुरे मयि।
शीघ्रं गच्छ मम स्थालीमानयित्वा प्रदर्शय॥१०॥
स्थाल्याः कण्ठेऽथ संलग्नं शाकान्नं वीक्ष्य केशवः।
उपयुज्याब्रवीदेनामनेन हरिरीश्वरः॥११॥
विश्वात्मा प्रीयतां देवस्तुष्टश्चास्त्विति यज्ञभुक्।
आकारय मुनीन् शीघ्रं भोजनायेति चाब्रवीत्॥१२॥
ते चावतीर्णाः सलिले कृतवन्तोऽघमर्षणम्।
दृष्ट्वोद्गारान् सान्नरसान् तृप्त्या परमया युताः॥१३॥ (वन. २६१)

(४) निग्रहणी—ययायमगस्त्यऋषिर्विंध्यपर्वतं निजग्राह। यया श्रीकृष्णो जयद्रथवधे सायंकाले सूर्य्यं निजग्राह। यया कपिलमहर्षिः सगरपुत्रान् षष्टिसहस्रमितान्

सागरकूले निगृह्य भस्मसाच्चक्रे। यया नहुषो देवेन्द्रपदं प्राप्तोऽपि गौतमादिभिर्निगृहीतः सर्पोऽभूत्। नृगश्च राजा महर्षिशप्तः कृकलासोऽभूत्। राजा परीक्षिच्च शमीकपुत्रेण श्रृङ्गिणा शप्तस्तक्षकसर्पदंशात् प्राणाँस्तत्याज। च्यवनक्रोधाद्राज्ञः शर्य्यातेर्नगरे सर्वेषां मलमूत्रनिरोधोऽभूत्। विश्वामित्रक्रोधाद्हरिश्चन्द्रो राजा पीडितोऽभूत्॥

अनुग्रहणी—यया गौतमशापात् प्रस्तरभूताया अहल्यायाः शापोद्धारानुग्रहं स्वचरणस्पर्शेन चकार भगवान् रामचन्द्रः। यमलार्जुनवृक्षः कृष्णस्पर्शादनुगृहीतः। समुद्रे निमज्जतो भुज्युराजस्याश्विभ्यामुद्धरणमुक्तं वेदे॥

(५) पुत्रजननीयम्-या एता लोके बन्ध्याः स्त्रियः तासां पुत्रजननप्रतिबन्धका दोषाः शुक्रशोणितपितृनागग्रहादिभेदादष्टौ वैद्यैः स्मर्य्यन्ते। तेषामष्टानामपि दोषाणामेकेन यज्ञेनैव शक्यते निवृत्तिः कर्तुम्। यथा विभाण्डकसुत ऋष्यश्रृङ्गोऽयोध्यायां पुत्रेष्टियज्ञं संपाद्य चरुप्राशनेन दशरथपत्नीषु रामलक्ष्मणादींश्चतुरः पुत्रान् संभावयामास। ऋचीकमहर्षिकृतचरुभक्षणात् परशुरामविश्वामित्रयोरुत्पत्तिः द्रुपदस्य राज्ञो यज्ञाद् द्रौपदी जज्ञे धृष्टद्युम्नश्च। श्रद्धादेवस्य मनोर्यज्ञादिलाकन्या जज्ञे।

(६) प्रावृषेण्या-वृष्टिकरणीयं विद्या। अवग्रहकाले कारीरीष्ट्यादिभिर्वृष्टिः शक्यते कर्तुम्। यथा विभाण्डकपुत्र ऋष्यश्रृङ्गः समागत्यायोध्यायां जलं वर्षयामास।

(७) आपोनप्त्रीयम् अपां नानारूपाणि यत्र तत्र भिधन्ते अम्भो मरीचिर्मरः श्रद्धारस इत्यादीनि। सूर्य्यादूर्ध्वप्रदेशे प्रत्युत्पन्नं सर्वजगदव्यापकमुदकमदृश्यरूपमम्भः। सूर्य्यरश्मौ मरीचिः। मृत्तिकात्वे मरः। चन्द्ररश्मौ श्रद्धा। एवं वायौ रसः। तत्र या इमा रसात्मिका आपो वायौ नित्यं तारतम्येनाहिता भवन्ति। त इमे रसा अहरहः पृथिव्यां प्रत्यर्थमुपसीदन्ति। तेषां संग्रहणविज्ञानाद् यथेच्छं यत्र तत्र निर्जलेऽपि देशे वायुतः प्रतिमूर्च्छनया जलान्युपार्जयितुं शक्यन्ते। तत्प्रकारश्च वेदे आपोनप्त्रीयसूक्ते सुविशदं प्रदर्शितः। पुरात्वे खलु कवष ऐलूषः प्राचीसरस्वतीकूले सत्रमातिष्ठमानैर्ब्राह्मणैर्निराकृतो मरुधन्वप्रदेशं प्रापितः सन्नेतया विधया वायोर्भूयांसि जलान्याविष्कुर्वन् परिसारकनदीं जनयामास।

(८) मधुविधा-मधुमक्षिकायाः मधुकोशमिवैतत् सूर्य्यमण्डलं भावयित्वा तद्रश्मिसूत्रैरधः परिस्रुतानां मधुबिन्दूनां परिग्रहणं मधुविद्या। मधुशब्दोऽयमुपलक्षणं दधिघृतामृतानाम्। येन पृथिव्याः शरीरं संगठितं कठिनं वाऽन्यत् किञ्चिद् भवति। स सूर्य्यरसो दधि कथ्यते, येनान्तरिक्षस्वरूपं संपद्यते तद् घृतम्। येन दिव्यस्तन्मधु। येन दिव ऊर्ध्वं तदमृतम्। चत्वारोऽप्येते भावा अहरहः सूर्य्यात् पृथिव्यामस्यां परिवर्षन्ति तेषां परिवर्षणक्रमविज्ञानाद्बहवोऽर्था यथेच्छं

**साधयितुं शक्यन्ते। दधन्युपादाने घृतमधुनोः संश्लेषणयोर्योगादनेकभावोत्पत्ति-संभवात्। तामिमां मधुविद्यां दध्यङ्ङाथर्वणो जानाति स्म। ततोऽश्विनौ च।**

## आठ मन्त्र-बल-सिद्धियां

(१) **सर्पाकर्षिणी** : सर्पाकर्षिणी विद्या द्वारा दूर-स्थित सर्पों को मन्त्रबल से इच्छित स्थान पर आकर्षित किया जाता है, पकड़ लिया जाता है और विषहीन कर दिया जाता है। जैसे जनमेजय के नागयज्ञ में याजकों ने प्रदीप्त अग्नि में सर्पों को हवन कर दिया। महाभारत में लिखा है—

"कुछ सर्प कोस भर अथवा योजन प्रमाण की लम्बाई के थे, कुछ गोकर्ण की आकृति वाले थे। ऐसे सर्प तीव्र गति से हवि प्रदीप्त अग्नि में आकर गिरने लगे॥१॥

बहुत से सर्प लम्बे थे और बहुत से छोटे, अनेक वर्णों से युक्त तथा घोर विषधारी, विशाल लोहे की छड़ अथवा अर्गला के समान मोटे और बलशाली सर्प जनमेजय के सर्पयोग में अग्नि में आकर गिरने लगे॥२॥ (भारत ५२)

(२) **अग्निस्तम्भिनी विद्या** : जिसमें प्रदीप्त अग्नि मन्त्रबल द्वारा ठंडी कर दी जाती है। इस मंत्र से शीतल की गई अग्नि में प्रवेश करने पर भी मनुष्य जलता नहीं है। यह अग्निस्तम्भ तीन प्रकार से होता है — सत्य से, मन्त्र से तथा मणि से। सत्य से—जैसे धर्माधिकारी द्वारा अपराधी पुरुष की दिव्य परीक्षा से हाथ में रखी हुई अग्नि से परीक्षा करता है। जैसे लंका में सत्य से अग्नि में प्रवेश करने पर सीता की परीक्षा की गई॥१॥

मन्त्र से — जैसे राजा नल मन्त्र से अग्नि को शीतल कर देते थे। महाभारत में लिखा है—केशिनी कहती है —हे शुभे! मैंने उस राजा नल में और भी अनेक बहुत से आश्चर्य देखे हैं। यह कि वह राजा अग्नि का स्पर्श करने पर जलता नहीं है॥(भा.व. ७५) मंत्र-शास्त्र में कहा गया है कि गांव में आग लग जाये और घास फूस के घरों को जलाती हुई अग्नि का यदि स्तम्भन कर दिया जाये तो वह अन्य घरों को नहीं जलाता है॥२॥ चन्द्रकान्त मणि दो प्रकार की होती है, एक ओषधि और दूसरा पत्थर। उस सम्बन्ध में ये श्लोक द्रष्टव्य हैं—

जिस पेड़ पर अमर बेल फैली हुई हो, उस वृक्ष के नीचे की भूमि के अन्दर छिपी हुई उस लता की मुख्य जड़ को खोजना चाहिये॥१॥ वृक्ष के नीचे चारों ओर फैले हुए पत्तों को इकट्ठा करके अग्नि जलावें। जिस स्थान पर वह नहीं जले, उसी स्थान पर उस लता की जड़ समझनी चाहिये। वह जड़ अत्यन्त शीतल होती है और इसी को चन्द्रकान्त मणि कहा जाता है। इस जड़ को साथ रखने से अग्नि ठंडी हो जाती है और फिर वह मनुष्य को जलाती नहीं है॥३॥ उस कन्द के रस से लेप किये गये हाथों में अग्नि रखी जा

सकती है। इसके रस का शरीर पर लेप कर लेने पर बिना कष्ट के मनुष्य अग्नि में प्रवेश कर सकता है ॥४ ॥

इसी प्रकार चन्द्रकान्त मणि पत्थर (हीरा) भी होता है। वह अत्यन्त शीतल पत्थर होता है, जो पास में रखने मात्र से ही अग्नि को ठंडा कर देता है। उसे पास में रखकर अग्नि का स्पर्श करने पर अग्नि जलाता नहीं है। चन्द्रकान्तमणि के पास में रहते हुए भी यदि सूर्यकान्तमणि को भी पास में रख दिया जाये तो वह अग्नि फिर से जलाने लग जाती है। सूर्यकान्तमणि की गर्मी चन्द्रकान्तमणि से उत्पन्न शीतलता को समाप्त कर देती है ॥२ ॥

(३) **अक्षय्यकरणी** : यह वह विद्या है, जिसके द्वारा घर के बरतनों में रखा हुआ अन्न हजारों लोगों के द्वारा भोजन किये जाने पर भी समाप्त नहीं होता है। प्राचीनकाल में सूर्य की आराधना करते हुए युधिष्ठिर द्वारा सूर्य से एक पात्र (बरतन) प्राप्त किया गया, जिसके प्रभाव से अन्न के अक्षय भण्डार हो गये थे। महाभारत में कहा गया है :—

हे राजन् ! मैं तुमको यह ताम्रपात्र देता हूँ। इसे स्वीकार करो। हे सुव्रत ! इस पात्र से द्रौपदी जब तक स्वयं बिना खाये परोसती रहेगी तब तक इस पात्र द्वारा कन्द, मूल, फल तथा भोजन योग्य अन्य पदार्थ और शाक तथा चार प्रकार की भोजनसामग्री पकायेगी, तब तक वह अक्षय बनी रहेगी ॥२ ॥

इस पात्र में तैयार की गई चार प्रकार की थोड़ी सी भी अन्नसामग्री बढ़ जाती है और अक्षय रहती है। उसी से पाण्डव ब्राह्मणों को भोजन कराने लगे ॥३ ॥

ब्राह्मणों के भोजन कर लेने पर अपने अनुजों को भोजन करा कर "विघस" संज्ञक अवशिष्ट अन्न को युधिष्ठिर सबसे बाद में भोजन करते थे ॥४ ॥

युधिष्ठिर को भोजन कराके अवशिष्ट अन्न को स्वयं पांचाली खाती थी। द्रौपदी के भोजन कर लेने पर उस पात्र का भोजन समाप्त हो जाता था ॥५ ॥ (वन. ३)

यत्किंचित मात्र अन्न से किसी एक आत्मा के तृप्त हो जाने पर समस्त प्राणी मात्र का तृप्त हो जाना भी इसी में सन्निविष्ट है। महाभारत में लिखा है —

हे राजन ! तदन्तर एक दिन महर्षि दुर्वासा इस बात का पता लगाकर कि पाण्डव का भोजन करके सुखपूर्वक बैठे हैं और द्रोपदी भी भोजन से निवृत्त होकर आराम कर रही है, अपने दस हजार शिष्यों से घिरे हुए वन में आये। तब युधिष्ठिर ने अतिथि को आते हुए देखकर, विधिवत् पूजा करके, अतिथिसत्कार के लिए निमंत्रित किया। तब से निष्पाप मुनि अपने शिष्यों के साथ स्नान करने के लिए चले गये ॥१-३ ॥

हे राजन् ! इस समय युवतियों में श्रेष्ठ, पतिव्रता द्रौपदी अन्न के लिए बड़ी चिन्तित हुई ॥४ ॥

जब बहुत सोचने विचारने परभी उसे अन्न मिलने का कोई उपाय नहीं मिला, तब वह मन ही मन कंसनिकन्दन भगवान् श्री कृष्ण का स्मरण करने लगी ॥५॥

उन भगवान् कृष्ण ने द्रौपदी पर आये संकट को जानकर, समीप में शय्या पर शयन करती हुई रुक्मिणी को छोड़कर तुरन्त वहाँ आ गये ॥६॥

अचिन्त्यगति परमेश्वर शीघ्र ही वहाँ आ गये और द्रौपदी से बोले - इस समय मुझे भूख लगी है, मैं भूख से पीड़ित हो रहा हूँ। श्रीकृष्ण बोले-हे द्रौपदी! मुझे पहले जल्दी से भोजन कराओ। अन्य कार्य बाद में करना। श्रीकृष्ण की यह बात सुनकर द्रौपदी बड़ी लज्जित हुई और बोली-हे भगवान् ! सूर्यनारायण के दिये हुये पात्र में तभी तक भोजन मिलता है, जब तक मैं भोजन नहीं कर लूँ। हे देव ! आज तो मैं भी भोजन कर चुकी हूँ। इसलिए उसमें अन्न नहीं है ॥७-९॥

तब कृष्ण बोले — हे द्रौपदी ! मैं तो भूख और थकान से आतुर हो रहा हूँ। यह हंसी करने का समय नहीं है। अत: शीघ्र जाओ और बटलोई (पात्र) लाकर मुझे दिखाओ ॥१०॥

इस प्रकार उस बटलोई को देखकर उसके गले में लगे हुए जरा से साग को देखकर श्रीकृष्ण ने उसे खा लिया और द्रौपदी से बोले - इस साग से सम्पूर्ण विश्व की आत्मा, यज्ञभोक्ता, सर्वेश्वर भगवान् श्री हरि तृप्त और सन्तुष्ट हों॥ इतना कहकर श्री कृष्ण बोले-शीघ्र जाकर मुनियों को भोजन के लिए बुला लाओ ॥११-१२॥

वे मुनि लोग उस समय जल में उतर कर "अघमर्षण" मन्त्र का जप कर रहे थे। तभी सहसा उन्हें पूर्ण तृप्ति का अनुभव हुआ, बार-बार अन्न रस से युक्त डकारें आने लगीं ॥१३॥(महा.भा.वन. २६२)

(४) **निग्रहणी विद्या** : जिस निग्रहण विद्या से अगस्त्य ऋषि ने विन्ध्याचल को रोक कर रखा था। जिससे श्री कृष्ण ने जयद्रथ वध के समय सायंकाल में सूर्य को रोक दिया था। जिससे कपिल मुनि ने समुद्र के किनारे राजा सगर के साठ हजार पुत्रों को निगृहीत करके भस्म कर दिया था। जिससे राजा नहुष देवराज इन्द्र के पद को प्राप्त करके भी गौतम इत्यादि ऋषियों के द्वारा दमन किये जाने पर सर्प बन गया था और राजा नृग महर्षि के शाप से गिरगिट बन गया था। राजा परीक्षित् शमीकपुत्र श्रृंगि के शाप वश तक्षक नाग द्वारा डसे जाने पर मृत्यु को प्राप्त हुआ। च्यवन ऋषि के क्रोध के कारण राजा शर्याति के नगर में समस्त नगरवासियों का मल-मूत्र रुक गया था। विश्वामित्र के क्रोध से राजा हरिश्चन्द्र पीड़ित हुआ।

(५) **अनुग्रहणी विद्या** —जिसके द्वारा गौतम ऋषि के शाप के कारण पाषाण रूपा अहिल्या को भगवान् ने अपने चरणों के स्पर्श से अनुगृहीत किया। यमलार्जुन नाम के दो वृक्ष

भगवान् कृष्ण के स्पर्श से अनुगृहीत हुये। समुद्र में डूबते हुए भुज्यु के राज्य का अश्वारोहियों द्वारा उद्धार हुआ, ऐसा वेद में उल्लेख किया गया है।

(५) **पुत्रजननी** : संसार में वन्ध्या स्त्रियाँ के आठ प्रकार के शुक्र, शोणित, पितृ और नाग इत्यादि पुत्रजनन-प्रतिबन्धक दोष वैद्यों के द्वारा बताये गये हैं। उन आठों दोषों का एक ही पुत्रेष्टियज्ञ के द्वारा निराकरण किया जा सकता है। जैसे विभाण्डक के पुत्र ऋष्यश्रृंग ने अयोध्या में पुत्रेष्टि करके चरुरूप प्रसाद के भोजन के द्वारा दशरथ की पत्नियों में राम लक्ष्मणादि पुत्रों को उत्पन्न करवाया। ऋचीक महर्षि कृत चरुभक्षण से विश्वामित्र और परशुराम की उत्पत्ति हुई। द्रुपद राजा के यज्ञ करने पर ही द्रौपदी और धृष्टद्युम्न पैदा हुए। श्रद्धादेव मनु के द्वारा किये गये यज्ञ से ही उनकी पुत्री इला की उत्पत्ति हुई।

(६) **प्रावृषेण्या** : यह वर्षा कराने वाली विद्या है। अकाल के समय करीरि नाम के यज्ञ से वर्षा करना सम्भव है। जैसे विभाण्डक के पुत्र ऋष्यश्रृंग ने अयोध्या में आकर जल की वर्षा की थी।

(७) **आपोनप्त्रीय विद्या** : जल के समय समय पर अनेक भेद किये गये हैं। यथा, अम्भः, मरीचिः मरः और श्रृद्धारसः इत्यादि। सूर्य से ऊपर के भाग में उत्पन्न अथवा व्याप्त जल अम्भः कहलाता है। सूर्य की किरणों में व्याप्त जल मरीचिः, मृत्तिका में व्याप्त जल मरः तथा चन्द्रमा की किरणों में श्रद्धा नाम का जल है तथा वायु में व्याप्त जल को रस कहा जाता है। ये जो रसात्मिका आपः है, वे वायु में न्यूनाधिक रूप से तारतम्य से नित्य रहती हैं। ये ही रस पृथ्वी पर प्रतिक्षण प्रत्येक व्यक्ति और वस्तु में प्राप्त होते रहते हैं। इन रसों के संग्रहण-विज्ञान से इच्छानुसार जलहीन प्रदेश में भी वायु को मूर्च्छित करने की विद्या से जल की पूर्ति की जा सकती है। इस विद्या की अनेक विधियां वेदों में आपोनप्त्रीय विद्या सूक्त में सविस्तार चित्रित की गई हैं। प्राचीनकाल में कवष-एलूष ने पूर्व सरस्वती के किनारे आयोजित यज्ञ में एकत्रित ब्राह्मणों द्वारा तिरस्कृत होने पर मरुधन्व प्रदेश में जाकर इसी प्रतिमूर्च्छना विद्या के द्वारा वायु से प्रचुर मात्रा में जल आविष्कृत करते हुए परिसारक नदी को उत्पन्न किया॥

(८) **मधुविद्या** : सूर्यमण्डल में मधुमक्खी के छते की भावना करके सूर्य की किरणों के नीचे टपकती हुई मधु की बूंदों को एकत्रित करना ही मधुविद्या है। यहां मधु शब्द तो एक उपलक्षण मात्र है। मधु शब्द से तात्पर्य घी, अमृत, दही इत्यादि से लेना चाहिये॥ जिस तत्त्व से पृथ्वी का शरीर (पृष्ठ भाग) कठोर होकर संगठित होता है, उसे दधि कहा जाता है। जिस तत्त्व से अन्तरिक्ष का स्वरूप बनता है, वह घृत तत्त्व है और जिससे द्युलोक की सृष्टि हुई है, वह मधु है। और जिससे द्युलोक के भी ऊर्ध्व भाग की सृष्टि हुई है, वह अमृत तत्त्व है। इन चारों ही भावों की प्रतिदिन सूर्यमण्डल से इस पृथ्वी लोक पर वर्षा होती है, उन तत्त्वों की वर्षा के क्रम को जान लेने पर अनेक तत्त्वों की इच्छानुसार

सिद्धि की जा सकती है। दधि का उपादान करके घी और मधु के संश्लेषण के योग से अनेक भावों की उत्पत्ति सम्भव हो सकती है। इस मधुविद्या को "दध्यङ्ङ्थर्वण ऋषि" जानते थे, उनसे अश्विनीकुमारों ने सीखी॥

## आगमीयमन्त्रबलसिद्धयोऽष्टौ।

**अथ मारणमोहनोच्चाटनवशीकरणविद्वेषणस्तम्भनाकर्षणादयो मन्त्रशास्त्रोक्ताः सिद्धयः पुरश्चरणानुष्ठानपूर्वकप्रयोगसाधिताः शारदातिलकमन्त्रमहोदधितन्त्र-सारादिग्रन्थेभ्यो विज्ञेयाः।**

## (६) मन्त्रबल से प्राप्त की जाने वाली आठ आगमीय सिद्धियाँ

मारण, मोहन, उच्चाटन, वशीकरण, विद्वेषण, स्तम्भन, आकर्षण, इत्यादि विद्याएँ मन्त्रशास्त्र में बताई गई सिद्धियाँ हैं, जिनको पहले तत्तत् मन्त्रों को पुरश्चरण अनुष्ठान के द्वारा सिद्ध किया जाये, तत्पश्चात् उनका प्रयोग सफल होता है। ये सिद्धियाँ तन्त्रशास्त्र यथा "शारदातिलक", "मन्त्रमहोदधि", और "तन्त्रसार" इत्यादि ग्रन्थों में लिखी हैं॥

## महौषधिबलसिद्धयोऽष्टौ।

**(१) मृतसंजीवनी—इयं महौषधिरभिमन्त्रिता सती स्वप्रभावेण मृतानामपि प्राणिनां शरीरं पुनः प्राणेन संयोज्य पुनरुज्जीवितं तदुत्थापयति। यथा शुक्रः पुरात्वे देवासुरसंग्रामेऽहरहर्मृतानामप्यसुराणां मृतसञ्जीवन्योषधिप्रभावेणाहरहर्जीव-यति स्म। यथा वा बृहस्पतिपुत्रः कचः शुक्रशिष्यैरसुरैर्भूयो भूयो व्यापादितोऽपि संजीवन्या विद्यया शुक्रेण पुनरुज्जीवितोऽभूत्॥१॥ वेनाङ्गुष्ठमथनेन पृथुः पुत्रो जनित इति सेयं विद्यापि मृतसंजीवन्यां विद्यायां संनिविशते।**

**(२) संजीवकरणी—इयमोषधिर्मूर्च्छया नष्टसंज्ञानां तत्क्षणात् पुनश्चैतन्योत्पादनायोप-युज्यते।**

**श्रुत्वा तद्वानरेन्द्रस्य सुषेणो वाक्यमब्रवीत्।**
**देवासुरमहायुद्धमनुभूतं पुरातनम्॥१॥**
**तदा स्म दानवा देवान् शरैर्जघ्नुर्मुहुर्मुहुः।**
**तानार्तान्नष्टसंज्ञांश्च गतासूंश्च बृहस्पतिः॥२॥**
**विद्याभिर्मन्त्रयुक्ताभिरोषधीभिश्चिकित्सति।**
**तान्यौषधान्यानयितुं क्षीरोदं यान्तु सागरम्॥३॥**
**हरयस्तु विजानन्ति पार्वती ते महौषधी।**
**संजीवकरणीं दिव्यां विशल्यां देवनिर्मिताम्॥४॥**
**चन्द्रश्च नाम द्रोणश्च क्षीरोदे सागरोत्तमे।**
**अमृतं यत्र मथितं तत्र ते परमौषधी॥५॥ (यु०५०)**
**समीपस्थमुवाचेदं हनुमन्तं महाकपिम्।**

सौम्य शीघ्रमितो गत्वा पर्वतं हि महोदयम् ॥६ ॥
दक्षिणे शिखरे जातां महौषधिमिहानय।
विशल्यकरणीं नाम्ना सावर्ण्यकरणीं तथा ॥७ ॥
संजीवकरणीं वीरसंधानीं च महौषधिम्।
संजीवनार्थं वीरस्य लक्ष्मणस्य स्वमानय ॥८ ॥
ततः संक्षोदयित्वा तामोषधीं वानरोत्तमः।
लक्ष्मणाय ददौ नस्तः सुषेणः परमौषधिम् ॥९ ॥
स तस्य गंधमाघ्राय सशल्यो लक्ष्मणस्तदा।
विशल्यो विरुजः शीघ्रमुदतिष्ठन्महीतलात् ॥१० ॥

(वा०रामायणे यु० १०२)

(३-४) विशल्यकरणी-इयं महोषधिः सावर्ण्यकरणी च नियुद्धे शस्त्रास्त्रविहतानां तत्क्षणादेकरात्रेण नैरुज्योत्पादनेन पुनर्युद्धयोग्यतासंपादनार्थमुपयुज्यते। भीष्म-परशुरामयुद्धे त्रिसप्ताहकालिकेऽहरहर्विक्षतयोर्मूर्च्छामागतयोरपि तयोः पुनर्द्वितीयेऽहनि पूर्ववद् बलोत्साहौ सज्जता च स्मर्य्यन्ते ॥१ ॥ छिन्नांगोद्भावनमप्यत्रैव संनिविशते। तच्च विच्छिन्नानामसतामङ्गानां सूर्य्यरश्मिप्रभावेण पुनरुत्पादनम्। यथा सुद्युम्नेन राज्ञा स्तेयदण्डरूपेण लिखितस्य ऋषेर्हस्ते छिन्ने पुनः शंख ऋषिः सैतवाहिन्यां नद्यां संस्नाप्य पूर्ववत् तद्बाहुमुत्पादयामास।

(५) संधानकरणी-विच्छिन्नाङ्गसंधानायोपयुज्यते। यथा ग्रीवातिरिक्तानामङ्गानां शस्त्रच्छिन्नानां संश्लेषणद्रव्यसंयोगं विनैव देवराज इन्द्रः संधत्ते स्मेति ऋग्वेदसंहितायामाख्यातम्। "य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः। सन्धाता सन्धिं मघवा पुरूवसुरिष्कर्ता विह्रुतं पुनः"—(ऋ० ।१ ।१२)
मधुविद्यां ब्रुवतः शिरश्छेत्स्यामीति देवराजेनोक्ते तां शिक्षितुमादावेवाश्विनौ दधीचस्य शिरश्छेदं कृत्वा शिरः संयोज्य हयशिरसो दधीचीन्मधुविद्यामुपलेभाते। अथ देवेन्द्रेणाश्वशिरसि विच्छेदिते पुनराश्विभ्यां तदीयं पौर्विकं शिरो यथावत् संयोजितमिति प्रसिद्धमितिहासेषु।.

(६) अरिष्टभैषज्या नाम योगविद्यानुगृहीता महौषधिः। यया सौभरिणा राजकन्यानां शतमितानां कुब्जानां स्वहस्तास्फालनेन कुब्जत्वं निरस्तम् ॥२ ॥ लङ्कायां मेघनादेन युद्धे शरबन्धविक्षतयो रामलक्ष्मणयोर्गरुडोऽकस्मादाकाशादुपेत्य स्वाङ्गस्पर्शेन सर्वाङ्गव्रणशोधनं कृत्वा निर्व्रणत्वं नैरुज्यं च संपादयामास।
"ततः सुपर्णः काकुत्स्थौ स्पृष्ट्वा प्रत्यभिनन्द्य च।
विममर्श च पाणिभ्यां मुखे चन्द्रसमप्रभे ॥१ ॥
वैनतेयेन संस्पृष्टास्तयोः संरुरुहुर्व्रणाः।

सुवर्णे च तनू स्निग्धे तयोराशु बभूवतुः ॥२॥
तेजोवीर्य्यं बलं चौज उत्साहश्च महागुणाः।
प्रदर्शनं च बुद्धिश्च स्मृतिश्च द्विगुणा तयोः" ॥३॥

इति रामायणे (यु. ५०)

(७) डिम्भप्रसविनी-यथा सगरमहाराजस्य षष्टिसहस्राणि पुत्राणां, धृतराष्ट्रस्य च शतं पुत्राणामौषधिप्रभावादुदपद्यन्त। डिम्भमेकं खण्डशः कृत्वा तान् खण्डान् घृतकलशे महौषधिघृताढ्ये निक्षिप्य कैश्चिन्मासैः परिपक्वांस्तान् गर्भांस्ततः प्रादुर्भावयामासुर्महर्षयः।

"कनिष्ठा सुषुवे तुम्बीं बीजपूर्णामिति श्रुतिः।
तत्र षष्टिसहस्राणि गर्भास्ते तिलसंमिताः ॥१॥
घृतपूर्णेषु कुम्भेषु तान् गर्भान्निदधे ततः।
ततो दशसु मासेषु समुत्तस्थुर्यथाक्रमम् ॥२॥
कुमारास्ते यथाकालं सगरप्रीतिवर्द्धनाः।
संबभूवुर्यथाकालं ववृधुश्च यथासुखम्" ॥३॥ (ब्रह्म पु. अ. ६)

(८) बलातिबले—मन्त्रयुक्ते महौषधी एते। यथोक्तं रामायणे वाल्मीकीये(बाल.२२)

"गृहाण वत्स सलिलं माभूत् कालस्य पर्य्ययः।
मन्त्रग्रामं गृहाण त्वं बलामतिबलां तथा ॥१॥
बला चातिबला चैव सर्वज्ञानस्य मातरौ।
एतद्विद्याद्वये लब्धे न भवेत् सदृशस्तव ॥२॥
न श्रमो न ज्वरो वा ते न रूपस्य विपर्य्ययः।
न च सुप्तं प्रमत्तं वा धर्षयिष्यन्ति नैर्ऋताः ॥३॥
न बाह्वोः सदृशो वीर्य्ये पृथिव्यामस्ति कश्चन।
त्रिषु लोकेषु वा राम न भवेत् सदृशस्तव ॥४॥
न सौभाग्ये न दाक्षिण्ये न ज्ञाने बुद्धिनिश्चये।
नोत्तरे प्रतिवक्तव्ये समो लोके तवानघ ॥५॥
बलामतिबलां चैव पठतस्तात राघव।
क्षुत्पिपासे न ते राम भविष्येते नरोत्तम ॥६॥
विद्याद्वयमधीयाने यशश्चाथ भवेद् भुवि।
पितामहसुते ह्येते विद्ये तेजःसमन्विते ॥७॥
ततो रामो जलं स्पृष्ट्वा प्रहृष्टवदनः शुचिः।
प्रतिजग्राह ते विद्ये महर्षेर्भावितात्मनः" ॥८॥

# आठ महौषधि-बल सिद्धियां

**(१) मृतसंजीवनी** : यह संजीवनी नाम की महौषधि है जो अभिमन्त्रित की जाने पर अपने प्रभाव से मरे हुए प्राणियों के शरीर को पुनः प्राणों से युक्त करके पुनर्जीवित करके खड़ा कर देती है। जैसे प्राचीनकाल में देवासुर संग्राम के समय प्रतिदिन मरे हुए असुरों को मृतसंजीवनी ओषधि के प्रभाव से असुरगुरु शुक्राचार्य प्रतिदिन जीवित कर देते थे। अथवा जैसे बृहस्पति के पुत्र कच शुक्राचार्य के शिष्य असुरों द्वारा पुनः पुनः मार दिये जाने पर भी संजीवनी विद्या से शुक्राचार्य ने पुनर्जीवित कर दिया। वेन राजा के अंगूठे को मथने से उसके पृथु नाम का पुत्र उत्पन्न हुआ। इस प्रकार की विद्या भी मृतसंजीवनी विद्या में ही समझनी चाहिये।

**(२) संजीवनी विद्या** : यह औषधि मूर्च्छा के कारण जिसकी चेतना नष्ट हो गई हो ऐसे व्यक्ति को तत्काल पुनः चेतना उत्पन्न करा देती है। "वाल्मीकिरामायण" में उल्लिखित है—

वानरराज सुग्रीव की बात सुनकर सुषेण ने कहा — पूर्व काल में जो देवासुर संग्राम हुआ था, उसे हमने देखा था ॥१ ॥

तब उन समस्त कुशल देवताओं को दानवों ने बारंबार बाणों से घायल कर दिया था। उस युद्ध में जो देवता शस्त्रास्त्र से पीड़ित, अचेत और प्राणशून्य हो जाते थे, उन सबकी रक्षा के लिए बृहस्पति ने मन्त्रयुक्त विद्याओं तथा दिव्य औषधियों से उन देवताओं की चिकित्सा की और बोले कि ओषधियों को लाने के लिए शीघ्र ही क्षीर सागर के तट पर जाओ ॥२-३ ॥

समस्त वानर वहाँ पर्वत पर प्रतिष्ठित दो प्रसिद्ध महौषधियों को जानते हैं, जो देवनिर्मित हैं। उनमें से एक का नाम संजीवकरणी और दूसरी का नाम विशल्यकरणी है ॥४ । ।

समस्त सागरों के मध्य क्षीर सागर के तट पर चन्द्र और द्रोण नामक दो पर्वत हैं, जहाँ पूर्वकाल में अमृतमंथन किया गया था। उन्हीं दोनों पर्वतों पर ये श्रेष्ठ औषधियाँ हैं ॥५ ॥(यु.५०)

सुषेण ने समीप में खड़े हुए हनुमान् जी से कहा, हे सौम्य ! तुम शीघ्र ही यहाँ महोदय शिखर पर जा कर उस दक्षिण शिखर पर उगी हुई विशल्यकरणी, सावर्ण्यकरणी, संजीवकरणी तथा संधानी नाम की प्रसिद्ध औषधियों को यहाँ ले आओ । हे वीर ! उन्हीं से वीरवर लक्ष्मण के जीवन की रक्षा होगी ॥६,७,८ ॥

महातेजस्वी कपिश्रेष्ठ सुषेण ने उस औषधि को कूट पीस कर लक्ष्मण जी की नाक में चढ़ा दिया ॥९ ॥

लक्ष्मण के सारे शरीर में बाण धंसे हुए थे। उस अवस्था में उस औषधि को सूंघते ही उनके शरीर से बाण निकल गये और वे रोगरहित होकर शीघ्र ही भूमितल से खड़े हो गये ॥१० ॥ (वा.रामा.यु.१०२)

(३-४) **विशल्यकरणी** : विशल्यकरणी तथा सावर्ण्यकरणी नामक ओषधियां युद्ध में शस्त्रास्त्र से घायल योद्धाओं को उसी समय अथवा एक रात्रि में रोगरहित करके पुनः युद्ध करने योग्य बनाने के लिए उपयोगी हैं। भीष्म और परशुराम के युद्ध में तीन सप्ताह तक प्रतिदिन घायल अथवा मूर्च्छावस्था को प्राप्त होने पर भी वे दोनों पुनः दूसरे दिन पूर्ववत् बल और उत्साह से युक्त हो जाते थे, ऐसा स्मरण किया जाता है ॥१ ॥ टूटे हुए अंगों के स्थान पर पुनः नये अंगों को उत्पन्न करना भी इसी में सन्निविष्ट है। इस विद्या में टूटे हुए अंगों को सूर्य की किरणों के प्रभाव से नया अंग उगा दिया जाता है। जैसे राजा सुद्युम्न के द्वारा चोरी के अपराध पर दण्ड के रूप में "लिखित" मुनि के हाथों के टूट जाने पर "शंख" मुनि से सौतवाहिनी नदी में स्नान करा कर पुनः पहले जैसा हाथ उत्पन्न करा दिया।

(५) **संधानकरणी** : टूटे हुए अंगों को जोड़ने में यह ओषधि उपयोग में लाई जाती है। जैसे ऋग्वेद में उल्लेख है कि इन्द्र ने बिना किसी चिपकाने वाले पदार्थ के ही शस्त्र से कटे हुए ग्रीवा के अतिरिक्त अंगों को जोड़ दिया था। ऋग्वेद में लिखा है-जिस इन्द्र ने पट्टी के बिना भी गर्दन से खून निकलने से पूर्व ही उस घाव की सन्धियों को जोड़ दिया था, वही ऐश्वर्यवान् तथा धन रखने वाला इन्द्र घाव को फिर सुधार देता है ॥१२ ॥ (८/१/१२)

मधुविद्या को बताते हुए शिरश्छेदन कर दूंगा, इस प्रकार देवराज इन्द्र के कहने पर अश्विनी कुमारों ने उस मधुविद्या को सीखने से पहले दधीचि ऋषि का मस्तक काट कर घोड़े का सिर लगाकर हयमुख दधीचि से मधुविद्या प्राप्त की। तत्पश्चात् इन्द्र के द्वारा घोडे व सिर काट दिये जाने पर पुनः अश्विनी कुमारों ने दधीचि का पहले का सिर पूर्ववत् जोड़ दिया, ऐसी कथा इतिहास पुराणों में प्रसिद्ध है।

अरिष्टभैषज्या नाम की योगविद्या द्वारा प्राप्त महौषधि है। जैसे सौभरि ऋषि ने सौ राजकन्याओं के कूबड़ अपना हाथ फेरने से दूर कर दिये ॥२ ॥ युद्ध के समय राम और लक्ष्मण मेघनाद के बाणों से जब क्षतविक्षत हो गये तो अचानक अकाशमार्ग से आकर गरुड ने अपने अंग के स्पर्श से समस्त अंगों के घावों को ठीक करके घाव रहित और स्वस्थ बना दिया॥ रामायण में लिखा है —

"तत्पश्चात् गरुड ने उन दोनों रघुवंशी बन्धुओं का स्पर्श करके अभिनन्दन किया और अपने हाथों से उनके चन्द्रमा के समान कान्तिमान् मुख को पोंछा ॥१ ॥

गरुड का स्पर्श प्राप्त होते ही श्रीराम और लक्ष्मण के सारे घाव भर गये और उनके शरीर तत्काल ही सुन्दर कान्ति से युक्त एवं स्निग्ध हो गये ॥२ ॥

उनमें तेज, वीर्य, बल, ओज और उत्साह, दृष्टिशक्ति, बुद्धि और स्मरण शक्ति आदि महान् गुण पहले से भी दुगने हो गये ॥३ ॥ (रामा.यु.५०)

**डिम्भप्रसविनी** : जैसे राजा सगर के साठ हजार पुत्र और राजा धृतराष्ट्र के सौ पुत्र औषधि के प्रभाव से उत्पन्न हुए। इस विद्या में महर्षियों ने एक डिम्भ को अनेक टुकड़ों में विभक्त करके उन टुकड़ों को घृतकलश में डिम्भप्रसविनी ओषधि के घी से परिपूर्ण कलश में रखकर कुछ महिनों में पके हुए उन डिम्भ खण्डों को महर्षियों ने उत्पन्न किया॥ ब्रह्म पुराण में लिखा है—

"छोटी रानी ने एक बीज युक्त तुम्बी को उत्पन्न किया, जिसके तिनके के समान साठ हजार गर्भ थे, उनको घृतकलशों में रखा गया । यथाक्रम, यथासमय, दस महिनों में वे राजा सगर की प्रीति बढ़ाने वाले पुत्र उत्पन्न हुये और सुखपूर्वक बढ़ने लगे॥३॥ (ब्र.पु.६)

**बलातिबला ओषधि** : बल और अतिबल नामकी ये ओषधियाँ मन्त्र युक्त हैं। जैसा कि वाल्मीकिरामायण में लिखा है :—

विश्वामित्र ऋषि श्री रामचन्द्र जी से कहते हैं — हे वत्स! आचमन ग्रहण करो। समय व्यर्थ मत करो। अब तुम बला तथा अतिबला ओषधियाँ और मन्त्रसमूह प्राप्त करो॥१॥

ये बला और अतिबला विद्यायें समस्त विद्याओं की मातायें हैं। इन दोनों विद्याओं को प्राप्त कर लेने पर आपके समान पराक्रमी कोई नहीं होगा॥२॥

इनके प्राप्त कर लेने पर न तुम्हें थकान का अनुभव होगा, न ज्वर पीड़ित करेगा और न ही तुम्हारा रूप बदलेगा और न ही राक्षसगण तुम्हें सोते हुए अथवा प्रमादावस्था में भी दबा सकेंगे॥३॥

इस सम्पूर्ण पृथ्वी पर तुम्हारी भुजाओं के समान शक्ति-सम्पन्न कोई नहीं होगा। तथा हे राम! तीनों लोकों में तुम्हारा जैसा कोई नहीं होगा॥४॥

हे निष्पाप! इस लोक में न कोई आपके समान सौभाग्यशाली होगा, न चातुर्य में, न ज्ञान में, न बुद्धि में, न निश्चय में न प्रत्युत्तर देने में आपके समान कोई होगा॥५॥
हे तात राघव ! बला और अतिबला ओषधियों को पढ़ते हुए हे राम ! हे नरोत्तम! आपको भूख और प्यास का अनुभव नहीं होगा॥६॥

इन दोनों विद्याओं को पढ़ते हुए लोक में आपके यश की वृद्धि होगी। ये दोनों विद्यायें ब्रह्मा की पुत्री हैं, जो तेज से युक्त है॥७॥

तब राम ने जल का स्पर्श करके पवित्र होकर, प्रसन्नमुख होकर दिव्यात्मा महर्षि विश्वामित्र से वे दोनों विद्यायें प्राप्त की॥८॥ (वा.रामा. बाल कां. २२)

## यन्त्रबलसिद्धयोऽष्टौ।

(१) दिव्यविमानम्-ऋभुनिर्मितमुक्तमृग्वेदे चतुर्थमण्डले षट्त्रिंशसूक्ते भगवता वामदेवेन "अनश्वो जातो अनभीषुरुक्थ्यो रथस्त्रिचक्रः परिवर्तते रजः महत् तद्वो देवस्य प्रवाचनं द्यामृभवः पृथिवी यच्च पुष्यथ॥"(४।३६।१)

(२) पुष्पकविमानं रामायणे निरूपितम्— (युद्धकां १२३-१२४)

एतत्पश्य यथा क्षिप्रं प्रतिगच्छाम तां पुरीम्।
अयोध्यां गच्छतो ह्येष पन्थाः परमदुर्गमः॥१॥
एवमुक्तस्तु काकुत्स्थं प्रत्युवाच विभीषणः।
अह्ना त्वां प्रापयिष्यामि तां पुरीं पार्थिवात्मज॥२॥
पुष्पकं नाम भद्रं ते विमानं सूर्य्यसंनिभम्।
मम भ्रातुः कुबेरस्य रावणेन बलीयसा॥३॥
हतं निर्जित्य संग्रामे कामगं दिव्यमुत्तमम्।
त्वदर्थं पालितं चेदं तिष्ठत्यतुलविक्रमम्॥४॥
तदिदं मेघसंकाशं विमानमिह तिष्ठति।
येन यास्यसि यानेन त्वमयोध्यां गतज्वरः॥५॥
ततः काञ्चनचित्राङ्गं वैदूर्य्यमणिवेदिकम्।
कूटागारैः परिक्षिप्तं सर्वतो रजतप्रभम्॥६॥
पाण्डुराभिः पताकाभिर्ध्वजैश्च समलंकृतम्।
काञ्चनं काञ्चनैर्हर्म्यैर्हैमपद्मविभूषितैः॥७॥
प्रकीर्णं किङ्किणीजालैर्मुक्तामणिगवाक्षकम्।
घण्टाजालैः परिक्षिप्तं सर्वतो मधुरस्वनम्॥८॥
तं मेरुशिखराकारं निर्मितं विश्वकर्मणा।
बृहद्भिर्भूषितं हर्म्यैर्मुक्तारजतशोभितैः॥९॥
तलैः स्फटिकचित्राङ्गैर्वैदूर्य्यैश्च वरासनैः।
महार्हास्तरणोपेतैरुपपन्नं महाधनः॥१०॥
तद्विमानं कामगमं पुष्पकं पुष्पभूषितम्।
निवेदयित्वा रामाय तस्थौ तत्र विभीषणः॥११॥
ततः स पुष्पकं दिव्यं सुग्रीवः सह वानरैः।
आरुरोह मुदा युक्तः सामात्यश्च विभीषणः॥१२॥
तेष्वारूढेषु सर्वेषु कौबेरं परमासनम्।
राघवेणाभ्यनुज्ञातमुत्पपात विहायसा॥१३॥

खगतेन विमानेन हंसयुक्तेन भास्वता।
प्रहृष्टश्च प्रतीतश्च बभौ रामः कुबेरवत् ॥१४॥
ते सर्वे वानरर्क्षाश्च राक्षसाश्च महाबलाः।
यथासुखमसंबाधं दिव्ये तस्मिन्नुपाविशन् ॥१५॥

(३) सौभविमानं-मार्तिकावतराजस्य शाल्वस्यासीत्। युद्धविमानमेतद्बहुविस्तृतमासीत्।
उक्तं च भारते वनपर्वणि कृष्णेन ॥(२२)
खे विषक्तं हि तत् सौभं क्रोशमात्र इवाभवत्।
शाल्वराजो युध्यमानो वियदभ्यगमत् पुनः ॥१॥
ततो नादृश्यत तदा सौभं कुरुकुलोद्वह।
अन्तर्हितं माययाऽभूत् ततोऽहं विस्मितोभवम् ॥२॥
ततः प्राग्ज्यौतिषं गत्वा पुनरेव व्यदृश्यत।
सौभं कामगमं वीरो मोहयन्मम चक्षुषी ॥३॥
आग्नेयमस्त्रमादाय युद्धे मतिमधारयम्।
वधाय शाल्वराजस्य सौभस्य च निपातने ॥४॥
रूपं सुदर्शनस्यासीदाकाशे पततस्तदा।
द्वितीयस्येव सूर्यस्य युगान्ते प्रतपिष्यतः ॥५॥
तत् समासाद्य नगरं सौभं व्यपगतत्विषम्।
मध्येन पाटयामास क्रकचो दार्विवोच्छ्रितम् ॥६॥
द्विधाकृतं ततः सौभं सुदर्शनबलाद्धृतम्।
तस्मिन्निपतिते सौभे चक्रमागात्करं मम ॥७॥
तन्मेरुशिखराकारं विध्वस्ताट्टालगोपुरम्।
दह्यमानमभिप्रेक्ष्य स्त्रियस्ताः संप्रदुद्रुवुः ॥८॥

(४) अथ सूतविमानं तु त्रिकक्षं पारदाभ्रकैः।
आस्थानयन्त्रभागाभ्यां द्विविभक्तं मनोजवम् ॥१॥
यन्त्रभागे निम्नकोष्ठे सुदीप्तेनाग्निनाचितम्।
तदूर्ध्वपादेनाढ्यं तदूर्ध्वं चाभ्रकाचितम् ॥२॥
तिर्य्यगूर्ध्वाधरान् देशान्नमितं तद्यथेच्छया।
आयसीभिर्भूयसीभिर्नलिकाभिः समाचितम् ॥३॥
गन्धकैरपि तद्युक्तं निपुणैर्निर्म्मितं पुरा।
गौरीशंकरवीर्य्याभ्यां विमानं कृतमद्भुतम् ॥४॥

(५) हर्य्यश्वविमानम्-इन्द्राय दारुविनिर्म्मितं संयुक्तं हयद्वयात्मकम्। यथोक्तं वेदे शच्याकर्त पितरा युवाना शच्याकर्त चमसं देवयानम्॥
शच्या हरी धनुतरावतष्टेन्द्रवाहावृभवो वाजरत्ना: ॥४।३५।५॥
ये हरी मेधयोक्था मदन्त इन्द्राय चक्रुः सुयुजा ये अश्वाः।
ते रायस्पोषं द्रविणान्यस्मे धत्त ऋभवः क्षेमयन्तो न मित्रम्॥४।३३।१०॥

(६) प्लवविमानं-समुद्रसंतरणसाधनदारुनिर्मितं पक्षिरूपमश्विकृते सुधन्वराजपुत्रैर्ऋभुभिर्विनिर्म्मितम्। नैतत्समुद्रे निमज्जति स्म। एतदारूढा अनायासेन समुद्रमत्यूर्म्मिमालाकुलमपि संतरन्ति स्म।

(७) अमृतगवी-रथं ये चक्रुः सुवृतं नरेष्ठां ये धेनुं विश्वजुवं दिश्वरूपाम्। त आतक्षन्त्वृभवो रयिं नः स्ववसः स्वपसः सुहस्ताः ॥४।३३।८॥
ऋभुभिर्गौरति भव्या कामगवी निर्म्मिता चित्रा।
एषा यदेव किञ्चित् प्राश्नोत्यमृतं ततो दुग्धे॥१॥

(८) शिलासंतरणी-"नलेन कपिवीरेण वायुवेशाल्लघूकृतैः शिलाखण्डैः संतरद्भिः सेतुरब्धौ प्रवर्तितः॥१॥" अद्यत्वे गङ्गायां पञ्चभिरब्दैर्भवेन्न वा सेतुः। पञ्चभिरहोभिरब्धौ रामः सेतुं शिलामयं व्यदधात्॥२॥ पूर्वयुगे यद्वीर्य्यं यच्चाद्भुतकर्म चक्रिरे वीराः। अनुकर्तुं तदशक्ता अनृतं मन्यन्त आत्मनस्तुष्ट्यै॥३॥ अद्यातिहीनवीर्या अल्पारम्भाः स्वमानरक्षार्थं। पूर्वेषामिह कीर्तिं न सहन्ते कूपमण्डूकाः॥४॥

## आठ यन्त्रबल-सिद्धियाँ

(१) **दिव्य विमान** : ऋभुओं के लिए निर्मित ऋग्वेद के चतुर्थ मण्डल के छत्तीसवें सूक्त में भगवान् वामदेव ने कहा है — "हे ऋभुओं ! तुम्हारा रथ घोड़ों से रहित, लगाम रहित, तीन पहियों से युक्त तथा प्रशंसनीय है। वह अन्तरिक्ष में चारों ओर घूमता है। तुम जो द्युलोक और पृथ्वी लोक को पुष्ट करते हो, वह महान् कर्म तुम्हारे देवत्व का द्योतक है॥ (ऋ०४/३६/१)

(२) **पुष्पकविमान** : रामायण में पुष्पक विमान का वर्णन किया गया है—

"भगवान् राम बोले — अब तो तुम इस बात की ओर ध्यान दो कि हम किस तरह जल्दी से जल्दी अयोध्या नगरी लौट सकें, क्योंकि वहाँ तक पैदल यात्रा करने वाले के लिए यह मार्ग बहुत ही दुर्गम है॥१॥

उनके ऐसा कहने पर विभीषण ने श्रीराम को उत्तर दिया कि हे राजकुमारो! आप इसके लिए चिन्तित न हों, मैं आपको एक ही दिन में उस नगरी में पहुंचा दूंगा॥२॥

आपका कल्याण हो! मेरे यहाँ मेरे बड़े भाई कुबेर का सूर्य के समान पुष्पक विमान मौजूद है, जिसे महाबली रावण ने संग्राम में कुबेर को हराकर छीन लिया था। अतुल पराक्रमी

श्रीराम! वह इच्छानुसार चलने वाला, दिव्य और उत्तम विमान मैंने आप ही के लिए रख छोड़ा है ॥३-४ ॥

मेघ के समान दिखाई देने वाला यह दिव्य विमान यहाँ विद्यमान हैं, जिसके द्वारा निश्चित होकर आप अयोध्यानगरी जा सकेंगे ॥५ ॥

उस विमान का एक एक अंग सोने से जड़ा हुआ था, जिसके भीतर वैडूर्यमणि (नीलम) की वेदिकायें बनी थीं। जहाँ तहाँ गुप्त गृह बने हुए थे और चारों ओर से चांदी के समान चमकीला था, ऐसी इस विमान की शोभा थी ॥६ ॥

वह विमान श्वेत और पीतवर्ण की पताकाओं तथा ध्वजों से अलंकृत था। उसमें सोने के कमलों से सुसज्जित, स्वर्णमयी अट्टालिकायें थीं, जो इस विमान की शोभा बढ़ाती थी ॥७ ॥

सारा विमान छोटी-छोटी घण्टियों से युक्त झालरों से व्याप्त था। उसमें मोती और मणियों की खिड़कियां लगी थीं, सब ओर घंटे बंधे थे, जिनसे मधुर ध्वनि होती रहती थी ॥८ ॥

यह विश्वकर्मा का बनाया हुआ विमान सुमेरु पर्वत के समान ऊँचा तथा मोती और चांदी से सुसज्जित बड़े-बड़े कक्षों से विभूषित था ॥९ ॥

उसकी फर्श विचित्र स्फटिकमणियों से जड़ी हुई थी। उसमें नीलम के बहुमूल्य सिंहासन थे, जिन पर बहुमूल्य बिछौने बिछे हुए थे ॥१० ॥

वह पुष्पक विमान इच्छानुसार चलने वाला था और पुष्पों से विभूषित था। ऐसे विमान की श्रीराम को सूचना देकर विभीषण वहाँ खड़े हो गये ॥११ ॥

तब वानरों सहित सुग्रीव और मंत्रियों सहित विभीषण बड़ी प्रसन्नता के साथ उस दिव्य पुष्पक विमान पर चढ़ गये ॥१२ ॥

उन सबके चढ़ जाने पर कुबेर का वह पुष्पक दिव्य विमान श्री रघुनाथ की आज्ञा पाकर आकाश में उड़ चला। आकाश में पहुंचे हुए उस हंसयुक्त तेजस्वी विमान से यात्रा करते हुए पुलकित और प्रसन्नचित्त श्रीराम साक्षात् कुबेर के समान सुशोभित हो रहे थे ॥१३-१४ ॥

ये वानर, भालू और महाबली राक्षस इस दिव्य विमान में बड़े सुखपूर्वक फैलकर बैठे हुए थे। कोई किसी को बाधा नहीं पहुंचा रहा था ॥१५ ॥ (रामा.यु. १२१-२२)

**(३) सौभ विमान** : यह विमान मार्तिकावत के राजा शाल्व का था। युद्ध में काम आने वाला यह बहुत बड़ा विमान था। महाभारत के वन पर्व में श्रीकृष्ण ने कहा है —

"वह सौभ-विमान आकाश में इस प्रकार प्रवेश कर गया था, मानों एक कोस दूर चला गया हो, और वह शाल्वराज युद्ध करता हुआ फिर से आकाश में चला गया ॥१ ॥

हे कुरुकुलशिरोमणे! परन्तु उस समय सौभ-विमान माया से अदृश्य हो गया। अतः किसी प्रकार से दिखाई नहीं देता था। इससे मुझे बड़ा आश्चर्य हुआ ॥२ ॥

तदनन्तर इच्छानुसार चलने वाला सौभ विमान् प्रागज्योतिषपुर के निकट जाकर मेरे नेत्रों को भ्रम में डालता हुआ फिर दिखाई देने लगा ॥३ ॥

आग्नेय नाम के अस्त्र को धारण करके मैंने शाल्वराज का वध करने और सौभ-विमान को मार गिराने के लिए युद्ध में मन लगाया ॥४॥

आकाश में जाते ही उस सुदर्शन चक्र का स्वरूप प्रलयकाल में उगने वाले सूर्य के समान प्रकाशित होने लगा ॥५॥

उस दिव्यास्त्र ने सौभनगर में पहुंच कर उसे शोभाहीन कर दिया और जैसे आरा ऊंचे काठ को छील देता है वैसे ही सौभ विमान को बीच में से काट दिया ॥६॥

तब सुदर्शन चक्र की शक्ति से वह सौभविमान दो टुकड़ों में बांट दिया गया। उस सौभविमान के गिरने से वह सुदर्शन चक्र फिर मेरे हाथ में आ गया ॥७॥

मेरु पर्वत के शिखर के समान आकृति वाले सौभनगर की अट्टालिकाएँ और गोपुर सभी नष्ट हो गये। उसे जलते हुए देखकर उसमें रहने वाली सभी स्त्रियाँ इधर-उधर भाग गईं ॥८॥

**(४) सूत विमान** : पारद और अभ्रक से निर्मित, तीन कक्ष से युक्त यह सूत विमान मन की गति से युक्त था। इस विमान के दो भाग थे— एक बैठने का स्थान और दूसरा यन्त्र (मशीनरी) भाग ॥१॥

यन्त्रभाग के नीचे के हिस्से में दैदीप्यमान अग्नि प्रदीप्त होती थी तथा ऊपर का भाग पारे से युक्त था तथा उससे भी ऊपर का भाग अभ्रक से ढका हुआ था ॥२॥

इस सूत विमान में इच्छानुसार तिरछे, ऊपर तथा नीचे झुकने के लिए अनेक लोहनिर्मित नलिकायें लगी थीं ॥३॥

प्राचीनकाल में निपुण, कुशल शिल्पियों द्वारा निर्मित यह विमान गन्धक से भी बनाया गया था। इस प्रकार यह विचित्र विमान गौरी (गन्धक) और शंकर (पारा) की शक्ति से निर्मित किया गया था ॥४॥

**(५) हर्य्यश्वविमान** : इन्द्र के लिए दो घोड़ों से युक्त यह विमान लकड़ी से बनाया गया था जैसा कि ऋग्वेद में लिखा है—

"तुमने अपनी कर्मकुशलता से माता-पिता को तरुण बनाया। तुमने अपनी कुशलता से चमस को देवों के लिए पीने योग्य बनाया। हे ऐश्वर्यवान् ऋभुवों। तुमने अपनी कुशलता से इन्द्र को ले जाने वाले घोड़ों को बाणों से भी अधिक वेगवान् बनाया ॥(४/३५/५)

जिन ऋभुवों ने स्तोत्रों से आनन्दित होकर अपनी बुद्धि से दो उत्तम घोड़ों को बनाया, जिन ऋभुवों ने इन्द्र के लिए आसानी से रथ में जुड़ जाने वाले रथ के घोड़ों को बनाया, हे ऋभुवों? ऐसे तुम कल्याण चाहने वाले मित्र के समान हमें धन, पुष्टि और अन्यान्य ऐश्वर्य भी प्रदान करो ॥(४/३३/१०)

**(६) प्लवविमान** : लकड़ी से बना यह विमान समुद्र को तैर कर पार करने के लिए साधन स्वरूप, पक्षी की आकृति वाला अश्विनी कुमारों के लिए सुद्यन्वराज के पुत्र ऋभुओं के द्वारा बनाया गया था। यह समुद्र में डूबता नहीं था। इस विमान में बैठा हुआ व्यक्ति अत्यन्त सरलता से ही भीषण तरंगों से युक्त समुद्र को पार कर लेता था।

(७) **अमृतगवी** : वेद में लिखा है—"जिन ऋभुओं ने अच्छी तरह बन्धनों से बंधे हुए और मनुष्यों के लिए बैठने योग्य रथ को तैयार किया, जिन्होंने सबको प्रेरणा देने वाली और अनेक रूपों वाली गाय को बनाया। वे उत्तम कर्म करने वाले, उत्तम रक्षा के साधनों से युक्त और उत्तम हाथों वाले ऋभु हमें ऐश्वर्य प्रदान करें॥(४/३३/८)

ऋभुओं के द्वारा अत्यन्त विचित्र कामगवी नाम की गौ निर्मित की गई। यह गाय जो कुछ भी खाती है उससे अमृत रूप दुग्ध ही उत्पन्न होता था॥१॥

(८) **शिलासंतरणी विद्या** : वीर बानर नल के द्वारा वायु के प्रवेश से हल्के बनाये हुये शिलाओं के खण्ड तैराते हुए समुद्र पर सेतु का निर्माण किया॥१॥ आज गंगा पर पांच वर्षों में ऐसा सेतु बने अथवा न बने परन्तु पांच ही दिनों में राम ने समुद्र पर शिलामय सेतु का निर्माण कर दिया॥२॥ प्राचीन युग में उन वीरों ने पराक्रमयुक्त विचित्र कार्य किये, उनका अनुकरण करने में अशक्त लोग अपनी आत्मसंतुष्टि के लिए इन कार्यों को झूठे और कपोल कल्पित मानते हैं॥३॥

ऐसे शक्तिहीन, साधारण कार्य करने की क्षमता रखने वाले, अपने स्वाभिमान की रक्षा करने के लिये कूपमण्डूक लोग आज अपने पूर्वजों की कीर्ति को सहन नहीं कर सकते हैं॥४॥

## अथ स्वयंवहादयो यन्त्रविशेषाः।

**१— आभ्यः सर्वाभ्यो विद्याभ्योऽप्यधिकचमत्कारवती नितान्तमुपयोगिनी स्वयंवह-यन्त्रविद्या भवति। तया दैनिकं षष्टिघटिकापलविपलादिज्ञानमतिसूक्ष्ममसंशयितं यथार्थरूपमुपसंपद्यते। तन्निर्माणप्रयोगादिप्रकाराः सूर्य्यसिद्धान्ते सिद्धान्तशिरोमणौ च विशिष्योल्लिखिता द्रष्टव्याः।***

## स्वयंवह आदि यन्त्रविशेष

इन समस्त विद्याओं से अधिक चमत्कार पूर्ण, अत्यन्त उपयोगी "स्वयंवह" (स्वचालित) यन्त्रविशेष की विद्या है॥ इस विद्या से दिन की साठ घड़ियों के पल-विपल इत्यादि का

---

* अमृतस्रावयोगेन कालभ्रमणसाधनम्। तुङ्गबीजसमायुक्तं गोलयन्त्रं प्रसाधयेत्॥१॥ कालसंसाधनार्थाय तथा यन्त्राणि संग्रहेत्। एकाकी योजयेद्बीजं यन्त्रे विस्मयकारिणि॥२॥ (सूसि. उपनिषध्याये १७/१९) सिद्धान्तशिरोमणावपि लघुकाष्ठजसमचक्रे सममुषिरारा समान्तरा नेम्यां किंचिद्वक्रा योज्याः सुषिरस्यार्द्धे पृथकत्वासाम्॥१॥ रसपूर्णे तच्चक्रं द्व्याधाराक्षस्थितं स्वयं भ्रमति। उत्कीर्य्य नेमिमथवा परितो मदनेन संलग्नम्॥२॥ तदुपरि तालदलार्धं कृत्वा सुषिरे रसं क्षिपेत् तावत्। यावद्रसैकपार्श्वं क्षिप्तजलं नान्यतो याति॥३॥ पिहितश्छिद्र तदतश्चकं भ्रमति स्वयं जलाकृष्टम्। ताम्रादिमयस्यां कुशरुपनलस्याम्बुपूर्णस्य॥४॥ एवं कुण्डजलान्तर्द्वितीयमग्रं त्वधोमुखं च बहिः। युगपन्मुक्तं चेतकं नलेन कुण्डाद् बहः पतति॥५॥ नेम्यां बध्वा घटिकाचक्रं जलयन्त्रवत्तथा धार्य्यम्। नलकप्रच्युतसलिलं पतति तथा तद्घटीमध्ये॥६॥ भ्रमति ततस्तत्सततं पूर्णघटीभिः समाकृष्टम्। चक्रच्युतं स्वमुदकं कुण्डे याति प्रणालिकया॥७॥

अत्यन्त सूक्ष्म, संशयरहित और यथार्थ ज्ञान प्राप्त होता है। इसकी निर्माण तथा प्रयोग की विधियाँ "सूर्यसिद्धांत" तथा "सिद्धांतशिरोमणि" में विशेष रूप से उल्लिखित हैं, वहीं द्रष्टव्य हैं ॥*

**ब्राह्मणानामष्टभ्यो वीर्य्येभ्यः सर्वासां विद्यानां प्रादुर्भावः।**

२— एवं केचिद् विद्या विभजन्ते भारतीयास्ताः।
एता एव स्वपरे ब्रुवते पुनरन्यथा दृष्ट्वा ॥१॥
ब्राह्मणवीर्य्याण्यष्टौ दैवाद् योगेन यज्ञतस्तपसा।
मणिमन्त्रौषधियन्त्रैरेषां भेदाश्च बहवः स्युः ॥२॥
एकैकविद्ययापि च लभतेऽपूर्वं जनस्तु समामर्थ्यम्।
नातः परं तु किञ्चिद्बलमधिकं संभवत्यत्र ॥३॥
दैवबली योगबली यज्ञबली वा तपोबली निगमात्।
मणिमन्त्रतन्त्रयन्त्रैरागमतः स्याद्बली विप्रः ॥४॥
नास्ति पृथिव्यां सोऽर्थो वीर्य्यात् पूर्णात्र यः सिध्येत्।
दैवाद् योगाद् यज्ञात् तपसो मन्त्रान् महौषधितः ॥५॥

---

जलप्रवाह के द्वारा समयचक्र के निर्धारण स्वरूप पारद (पारा) युक्त गोलाकार यन्त्र का निर्माण किया जाना चाहिये ॥१॥ काल के संसाधन के लिए इस प्रकार के यन्त्रों का निर्माण किया जाना चाहिये, जिसमें चमत्कारिता हेतु पारद की स्थापना एकान्त में बैठकर करनी चाहिये ॥२॥ (सू.सि.) "सिद्धान्त-शिरोमणि" में भी एक घटीयन्त्र-निर्माण का उल्लेख मिलता है। जिसमें — किसी सरल (गन्थिरहित) काण्ड से एक रूप गोल-चक्र बनाया जाये। इस चक्र में प्रयुक्त अर समान छिद्रों से युक्त एवं समान अंतराल पर स्थित होते हैं। तथा ये अर पहिये की परिधि में कुछ वक्र रूप से जोड़े जावें। ये अर छिद्रों में अलग अलग करके जोड़े जावें ॥१॥ दो आधार पर टिके हुए अक्ष पर स्थित यह चक्र जल से पूर्ण होने पर स्वतः घूमता है। इस चक्र की परिधि को उत्कीर्ण (खुदाई) करके अथवा ऊपर चारों ओर मोम से चिपकाया जाकर उसके ताड़ के पत्ते को आधा करके उसका रस डाले, जब तक कि उसके एक ओर डाला गया रस दूसरी ओर न गिरे अर्थात् छिद्रों को पूर्णतः बन्द कर दिया जावे ॥२-३॥ छिद्रों के इस प्रकार बन्द होने पर यह चक्र जल के वेग से स्वतः घूमने लगता है। ताम्रादि धातु की पतली नलिका (नोजल) को जल से भरकर उसका एक सिरा कुण्ड के जल में तथा दूसरा बाहर नीचे झुका कर छोड़ने पर जल नल के द्वारा स्वतः बाहर आने लगता है (साइफन विधि से) ॥४-५॥ नेमि पर घटिका चक्र को जल यन्त्र की तरह इस प्रकार स्थापित किया जावे कि नल से गिरा हुआ जल घटी (छोटे जल-घड़े) में ही गिरे (उस घटी को भरने का समय एक घड़ी निर्धारित किया जाता है ॥१६॥ इस घटी के जल से पूर्ण हो जाने पर, जल के भार से चक्र से निकला हुआ घटिका का जल एक प्रणाली (नाली) के द्वारा कुण्ड में बह जाता है ॥७॥ (इस प्रकार एक के बाद एक घटी भरती है और चक्र सतत रूप से घूमता रहता है) ॥

## ब्राह्मणों के आठ वीर्यों से सम्पूर्ण विद्याओं का प्रादुर्भाव हुआ

कुछ लोग इन्हीं भारतीय विद्याओं को विभाजित करके अलग प्रकार से कहते हैं। इन्हीं भारतीय विद्याओं को अन्य लोग अपने ढंग से समझकर कुछ अन्य प्रकार से कहते हैं ॥१॥

ये विद्यायें ब्राह्मणों के वीर्य से आठ प्रकार की बतायी गयी हैं। वे हैं — दैवी प्रभाव से, योगबल से, यज्ञ से, तपोबल से, मणि से, मन्त्र से, ओषधि से तथा यन्त्रबल से इनके अनेक भेद किये गये हैं।.२॥

इनमें से एक एक विद्या को प्राप्त करके ही मनुष्य अपूर्व सामर्थ्य प्राप्त कर लेता है। इन विद्याओं को प्राप्त करने रूप बल से अधिक और कोई शक्ति सम्भव ही नहीं हो सकती है ॥३॥

ब्राह्मण दैवी विद्या के बल से, योग से, यज्ञबल से, तपस्या के बल से, शास्त्रविद्या बल से, मणि से, यन्त्र से, तन्त्र इत्यादि के शास्त्रीय ज्ञान से शक्तिवान् हो सकता है ॥४॥

इस पृथ्वी पर ऐसा कोई अर्थ नहीं है, जो दैव, योग, यज्ञ तप, मन्त्र और औषधि की पूर्ण ज्ञानशक्ति से सिद्ध नहीं किया जा सकता है अर्थात् प्रत्येक साध्य की सिद्धि की जा सकती है ॥५॥

## सर्वविद्यानां सर्वार्थसिद्धौ हेतुत्वं तुल्यम्।

३— इत्थं विद्याः कारणकार्य्यविभागेन दर्शिता एताः।
किन्त्वविशेषात् सर्वाः सिद्धय एभ्योऽष्टवीर्य्येभ्यः ॥१॥
दैवाद् योगाद् यज्ञात् तपसो मणिमन्त्रतन्त्रयन्त्रेभ्यः।
तुल्यवदेव समग्राः कामा निश्चित्य सिध्यन्ति ॥२॥

## समस्त विद्याओं की सर्वार्थसिद्ध में कारण समान ही है।

कार्य और कारण विभाग से ये समस्त विद्यायें अलग अलग बताई गई हैं। विशेष रूप से ये परम सिद्धियाँ इन्हीं आठ ब्रह्मवीर्यों से सिद्धि होती हैं ॥१॥

ये आठ ब्रह्मवीर्य हैं — दैव, योग, यज्ञ, तप, मणि, मन्त्र, यन्त्र और तन्त्र। इन्हीं से समान रूप से सभी अभीप्सित कार्यों की निश्चय ही सिद्ध होती है ॥२॥

## नवनिधयः।

एता हि सिद्धयोऽष्टौ बहुभिर्यत्नैः प्रसाधनात् सिद्धेः।
अथ नवनिधयस्त्वन्ये गृहे निधानं ह्यपेक्षते तेषाम् ॥३॥
"महापद्मश्च पद्मश्च शङ्खो मकरकच्छपौ।

मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नव" ॥४॥
एषामेकोऽपि गृहे निहितः परमां श्रियं तनुते।
सपरिच्छदान्नवस्त्रप्राचुर्य्यं भोगसौभाग्यम् ॥५॥
नापेक्ष्यतेऽत्र मन्त्रो न यन्त्रतन्त्रे म यज्ञयोगौ वा।
केवलनिधानमङ्गे गृहेऽपि लक्ष्मीं विवर्द्धयति ॥६॥

## नौ निधियाँ

ये उपर्युक्त आठ सिद्धियां अत्यधिक प्रयत्नपूर्वक साधना करने पर ही सिद्ध होती हैं, परन्तु अन्य प्रकार की नौ निधियों को रखने मात्र से ही सिद्धि प्राप्त हो जाती हैं ॥३॥

ये नौ निधियाँ है — महापद्म, पद्म, शंख, मकर, कच्छप, मुकुन्द (मूल्यवान् रत्न अथवा पारा), कुन्द (चमेली अथवा मोती), नीलमणि तथा खर्व (खरड़) इत्यादि ॥४॥

इन निधियों में से एक को भी यदि घर में रखा जावे, तो परम सौभाग्य की वृद्धि होती है। वस्त्र, आभूषण, अन्न, पर्याप्त वस्त्र तथा समस्त प्रकार की सौभाग्यवृद्धि करती है ॥५॥

इन निधियों के लिए किसी प्रकार के मन्त्र, तन्त्र, यन्त्र, यज्ञ और योगबल की सिद्धि की आवश्यकता नहीं हैं। इनको तो केवल अंग पर धारण करने मात्र से ही अथवा घर में रखने से ही ऐश्वर्य की वृद्धि हो जाती है ॥६॥

## निधिविशेषा अष्टौ मणयः।

४— औषधयोऽपि च निधयो निधिप्रभावाः प्रसिद्ध्यन्ति।
कतिचित् तासामष्टौ मणिसंज्ञा अत्र कथ्यन्ते ॥१॥

| अष्टमणयः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ |
|---|---|---|---|---|---|---|---|---|
| | इन्द्रमणिः | जङ्गिड-मणिः | प्रतिसर-मणिः | वरण-मणिः | दर्भ-मणिः | औदुम्बर-मणिः | शतवार-मणिः | अस्तृत-मणिः |

शक्तिर्गुणश्च वीर्य्यं रसो विपाकः प्रभावश्च।
प्रत्योषधि भिद्यन्ते मणित्वमेषां प्रभाववैशेष्यात् ॥२॥
सन्त्योषधयः सर्वाः प्रभाववत्योऽथ तास्वष्टौ।
मणयः स्युरिन्द्रजंगिडप्रतिसरवरणादयः ख्याताः ॥३॥
हस्ते धृतेन्द्रमणिरिह महौषधिः स्वप्रभावेण।
दिव्यां दृष्टिं दत्ते तथोक्तमाथर्वणे वेदे ॥१॥ (४।२०।१।९)
आपश्यति प्रतिपश्यति परापश्यति पश्यति।
दिवमन्तरिक्षमाद् भूमिं सर्वं तद्देवि पश्यति ॥२॥(४।२०।२)
तिस्रो दिवस्तिस्रः पृथिवीः षट् चेमाः प्रदिशः पृथक्।
त्वयाऽहं सर्वा भूतानि पश्यानि देव्योषधे ॥३॥

ता मे सहस्राक्षो देवो दक्षिणे हस्त आदधत्।
तयाऽहं सर्वं पश्यामि यश्च शूद्र उतार्य्यः ॥४॥(४।२०।४)
दर्शय मा यातुधानान् दर्शय यातुधान्यः।
पिशाचान् सर्वान्दर्शयेति त्वारम्भ ओषधे॥५।(४।२०।६)
यो अन्तरिक्षेण पतति दिवं यश्चातिसर्पति।
भूमिं यो मन्यते नाथं तं पिशाचं प्रदर्शय॥६॥(४।२०।९)
अथ जङ्गिडमणिरन्यो धृतः शरीरे प्रवर्द्धयत्यायुः।
कृत्यादोषं हरति च तथोक्तमाथर्वणे वेदे॥१॥
दीर्घायुत्वाय बृहते रणायारिष्यन्तो दक्ष्यमाणाः सदैव।
मणिं विष्कन्ध दूषणं जङ्गिडं बिभृमो, वयम्॥२॥(२।४।१)
जङ्गिडो जम्भाद् विशराद् विष्कन्धादभिशोचनात्।
मणिः सहस्रवीर्य्यः परिशिरिणः पातु विश्वतः॥३॥(२।४।२)
अयं विष्कन्धं सहतेऽयं बाधते अत्रिणः॥
अयं नो विश्वभेषजो जङ्गिडः पात्वंहसः॥४॥(२।४।३)
दैवैर्दत्तेन मणिना जङ्गिडेन मयोभुवा।
विष्कन्धं सर्वा रक्षांसि व्यायामे सहामहे॥५॥(२।४।४)
शरणश्च मा जङ्गिडश्च विष्कन्धादभिरक्षताम्।
अरण्यादन्य आभृतः कृष्या अन्यो रसेभ्यः॥६॥(२।४।५)
कृत्यादूषिरयं मणिरथो अरातिदूषिः।
अथो सहस्वान् जङ्गिडः प्रण आयूंषि तारिषत्॥७॥(२।४।६)
एकोनविंशकाण्डस्यायं सूक्ते चतुस्त्रिंशे॥(१९।३४।३५)
पञ्चत्रिंशे तद्वन्मणिरुक्तो जङ्गिडो भूयः॥१॥
एवं प्रतिसरमणिरयमष्टमकाण्डस्य पञ्चमे सूक्ते (८।५)
वरणो मणिरधिदशमं तृतीयसूक्ते विशिष्योक्तः॥२॥(१०।३।)
एकोनविंशकाण्डस्याष्टाविंशादिषट्सूक्तैः॥१९।२८।३३)
दर्भो मणिरौदुम्बरमणिविशेषादिहाख्यातौ॥३॥
एतत्काण्डे सूक्ते षट्त्रिंशे त्वस्ति शतवारः॥२९।३६)
अस्तृतमणिरिह गदितः षट्चत्वारिंशके सूक्ते।४॥(१९।४६)
इत्थमनेका ओषधिविद्या आर्य्यैः पुरातनैर्दृष्टाः॥
आथर्वणे तु वेदे प्रदर्शितास्तास्ततो ज्ञेयाः॥५॥

कुछ औषधियां भी निधि होती हैं। वे निधि के प्रभाव से प्रसिद्ध होती हैं। उन औषधि रूप निधियों में से कुछ आठ मणिसंज्ञक औषधियाँ यहां कही जाती हैं॥१॥

| आठ मणियां | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ |
|---|---|---|---|---|---|---|---|---|
| | इन्द्रमणि | जंगिड़-मणि | प्रतिसर-मणि | वरण-मणि | दर्भमणि | औदम्बर-मणि | शतवार-मणि | अस्तृत-मणि |

शक्ति, गुण, वीर्य, रस, विपाक, और प्रभाव से प्रत्येक औषधि अलग अलग ढंग से प्रभावशाली हैं। अतः प्रभाव विशेष से इन ओषधियों को भी मणि रूप माना जाता है ॥२ ॥

समस्त औषधियां प्रभाववती होती हैं, उनमें से आठ मणि रूप होती है। वे हैं-इन्द्र, जंगिड़, प्रतिसर, वरण इत्यादि ॥३ ॥

अथर्ववेद में कहा गया है कि इन्द्रमणि नाम की ओषधि को यदि हाथ में धारण किया जाये तो वह अपने प्रभाव से दिव्यदृष्टि प्रदान करती है ॥१ ॥ (४/२०/१/९)

हे देवि। जंगिड मणि को धारण करके मनुष्य सब कुछ प्रत्यक्ष देखता है, प्रत्येक पदार्थ को देखता है, दूर और दूसरी ओर देखता है, द्युलोक, अन्तरिक्ष लोक और भूमि को देखता है ॥२ ॥ (४/२०/२)

हे दिव्यौषधे। मैं तुम्हारे प्रयोग से तीन द्युलोक, तीनों पृथ्वी लोक छः प्रदिशाओं (पूर्व. प.उ.द. ऊर्ध्वाधर) को अलग-अलग रूप से तथा समस्त प्राणी मात्र को तुम्हारी सामर्थ्य से देखूं ॥३ ॥

उन सहस्राक्ष सूर्य देव ने उस दिव्यौषधि को मेरे दाहिने हाथ पर बांध दी है। मैं उसके द्वारा शूद्र अथवा आर्य सभी को देख सकता हूँ ॥४ ॥(४/२०/४)

हे औषधे ! तुम्हें बांधे हुए मुझे समस्त राक्षसों को दिखाओ, समस्त राक्षसियों को दिखाओ, समस्त भूत-प्रेतादि को दिखाओ इसलिए तेरी सहायता लेता हूँ ॥५ ॥(४/२०/६)

हे ओषधे ! जो अन्तरिक्ष से चलता है और जो द्युलोक को भी लाँघता है और जो भूमि का भी नाथ है, उस पिशाच को मुझे दिखाओ ॥(४/२०/९)

जंगिड़ मणि नाम की ओषधि को जो धारण करता है, उसकी आयु में वृद्धि होती है। अथर्ववेद में कहा गया है कि जंगिड़ मणि ओषधि को धारण करने वाले व्यक्ति को जादू टोना इत्यादि का प्रभाव नहीं होता है ॥१ ॥

दीर्घायु की प्राप्ति के लिए तथा बड़े आनन्द के लिए, शोषक रोग को दूर करने वाले जंगिड़मणि को न सड़ने देने वाले परन्तु बल को बढ़ाने वाले हम सब धारण करते हैं ॥२ ॥(२/४/१)

यह जंगिड़मणि हजारों सामर्थ्यों से युक्त, जमुहाई बढ़ाने वाले रोग से क्षीणता करने वाले रोग से सब प्रकार से हम सबकी रक्षा करें ॥३ ॥ (२/४/२)

यह जंगिड़मणि शोषक रोग से बचाता है, यह मणि भक्षक भस्म (अधिक खाना और शरीर कृश रहना) रोग से बचाता है। यह जंगिड़मणि सर्वोषधि का रस ही है, वह हमें पाप से बचावे ॥४ ॥(२/४/३)

दिव्य मनुष्यों द्वारा दिये हुए, सुख देने वाले जंगिड़मणि से शोषक रोक को और सब बीजभूत रोग जन्तुओं को संघर्ष में दबा सकें ॥५ ॥ (२/४/४)

शण अथवा सण और जंगिड़ ये दोनों शोषक रोग से मेरा बचाव करे। इनमें एक वन से प्राप्त होती है और दूसरी खेती से उत्पन्न हुई ओषधियों के रसों से बनाया जाता है ॥६ ॥ (२/४/५)

यह मणि हिंसा से बचाने वाला है और शत्रुभूत रोगों से दूर करने वाला है। ऐसा यह बलवान् जंगिड़मणि हमारी आयु बढ़ावे ॥७ ॥(२/४/६)

अथर्ववेद के उन्नीसवें काण्ड के चौंतीसवें सूक्त के पैंतीसवें मन्त्र में इस जंगिड़-मणि का पर्याप्त उल्लेख हुआ है ॥१ ॥

इसी प्रकार अथर्ववेद के ही आठवें काण्ड के पांचवें सूक्त में प्रतिसर मणि तथा वरण मणि का दसवें काण्ड के तीसरे सूक्त में उल्लेख किया गया है ॥२ ॥

दर्भ-मणि तथा औदुम्बर मणियों का विशेष रूप से उन्नसीवें काण्ड के अट्ठाइसवें सूक्त से लेकर छः सूक्तों अर्थात् तेतीसवें सूक्त तक वर्णन किया गया है ॥३ ॥

इसी काण्ड के छत्तीसवें सूक्त में शतवार मणि तथा छियालीसवें सूक्त में अस्तृतमणि का वर्णन किया गया है ॥४ ॥

इस प्रकार प्राचीन आर्यों ने अनेक औषधि विद्याओं को देखा है, जिनका अथर्ववेद में उल्लेख है, वहीं से इनको देखना चाहिये ॥५ ॥

## विद्याप्रकरणोपसंहारः ।

देवानामिह समये देवैः प्रोत्साहनात् सुयुक्त्वाच्च।
भारतवर्षीयार्य्यैरेता उद्भाविता विद्याः ॥१ ॥
एतासां विद्यानां कारव आसन् पृथक् पृथक् कतिचित्।
तत्प्रतिपत्तिग्रन्थाः कालविलुप्ता न लभ्यन्ते ॥२ ॥
इतिहासेषु प्रायः प्रसङ्गतश्चर्चिता एताः।
तेनास्तित्वं ह्यासां पूर्वयुगे भारते विद्यः ॥३ ॥

## विद्याप्रकरण का उपसंहार

भारतवर्ष के आर्यों ने देवयुग में देवताओं के द्वारा दिये गये प्रोत्साहन तथा सहयोग से इन विद्याओं को उत्पन्न किया ॥१ ॥

इन विद्याओं के निर्माता अलग-अलग विद्वान् ऋषि थे। इनके मूल एवं प्राथमिक ग्रन्थ काल के दीर्घ अन्तरालवश विलुप्त हो गये और आज उपलब्ध नहीं है ॥२ ॥

प्रायः इन विद्याओं की चर्चा इतिहासग्रन्थों में प्रसंगवश होती रहती है। इन्हीं चर्चाओं के आधार पर हम जानते हैं कि भारतवर्ष में ही इन विद्याओं का अस्तित्व था ॥३ ॥

## इति ब्राह्मवीर्यप्रसङ्गः ॥१ ॥

भारतवर्षे युद्धोपयोगिनी चतुःषष्टिदिव्यास्त्राणि ॥(६४)
ब्रह्मशिरो ब्रह्मास्त्रं पाशुपतं वैष्णवं च वरुणास्त्रम्।
नारायणास्त्रमैन्द्रं प्राजापत्यास्त्रमाग्नेयम् ॥१ ॥

वायव्यं कौबेरं पार्जन्य—त्वाष्ट्रकालयाम्यानि।
दानवमश्व च स्कान्दं प्रमथं वैनायकं च कूष्माण्डम् ।।२ ।।
गणगान्धर्वे राक्षसपैशाचे भौतवैताले।
शारभताक्ष्यर्शावरफैरवमातङ्गनागमकरास्त्रम् ।।३ ।।
सौपर्णं भारुण्डं चौलूकं गालणं चेति।
पाषाणकालकूटे चाक्रैषीके बलातिबले ।।४ ।।
औदुंबरं च राजसहैमनगुह्यानि शौरमुन्मादः।
स्तम्भनकम्पनजृम्भणजम्भकमूर्च्छानिमीलनोत्पाताः ।।५ ।।
प्रस्वापनं च मोहनमचेतनं भ्रामकं ज्वरास्त्रं च।
वैद्युततैमिरतामसभेदादासंश्चतुःषष्टिः ।।६ ।।
दिव्यास्त्राणि पुरात्वे देवयुगे भारते वर्षे।
मन्त्रैर्यन्त्रैस्तन्त्रैरद्भुतकर्माणि तान्यासन् ।।७ ।।
शरनाराचकृपाणप्रभृतीन्यष्टादशास्त्राणि।
लौहानि सर्वदेशे दिव्यास्त्रविधास्तु भारतेऽत्रैव ।।८ ।।

## दिव्यास्त्रतालिका।

| दैवास्त्राणि १६ | यौनास्त्राणि १६ | भौतस्त्राणि १६ | कर्मास्त्राणि १६ |
|---|---|---|---|
| १. ब्रह्मशिरोऽस्त्रम् | १७. स्कांदास्त्राणि | ३३. मकरास्त्रम् | ४९. उन्मादास्त्रम् |
| २. ब्रह्मास्त्रम् | १८. प्रमथास्त्रम् | ३४. सापर्णास्त्रम् | ५०. स्तम्भनास्त्रम् |
| ३. पाशुपतास्त्रम् | १९. वैनायकास्त्रम् | ३५. भारुण्डास्त्रम् | ५१. कम्पनास्त्रम् |
| ४. वैष्णवास्त्रम् | २०. कूष्माण्डास्त्रम् | ३६. उलूकास्त्रम् | ५२. जृम्भणस्त्रम् |
| ५. वारुणास्त्रम् | २१. गणास्त्रम् | ३७. गालणास्त्रम् | ५३. जम्भकास्त्रम् |
| ६. नारायणस्त्रम् | २२. गान्धर्वास्त्रम् | ३८. पाषाणास्त्रम् | ५४. मूर्च्छनास्त्रम् |
| ७. ऐन्द्रास्त्रम् | २३. राक्षसास्त्रम् | ३९. कालकूटास्त्रम् | ५५. निमीलनास्त्रम् |
| ८. प्राजापत्यास्त्रम् | २४. पैशाचास्त्रम् | ४०. चाक्रास्त्रम् | ५६. उत्पातास्त्रम् |
| ९. आग्नेयास्त्रम् | २५. भौतास्त्रम् | ४१. ऐषीकास्त्रम् | ५७. प्रस्वापनास्त्रम् |
| १०. वायव्यास्त्रम् | २६. वेतालास्त्रम् | ४२. वलास्त्रम् | ५८. ज्वरास्त्रम् |
| ११. कौवेरास्त्रम् | २७. शरभास्त्रम् | ४३. अतिवलास्त्रम् | ५९. भ्रामकास्त्रम् |
| १२. पार्जन्यास्त्रम् | २८. ताक्ष्यास्त्रम् | ४४. औदुम्बरास्त्रम् | ६०. अचेतनास्त्रम् |
| १३. त्वाष्टास्त्रम् | २९. शावरास्त्रम् | ४५. राजसास्त्रम् | ६१. मोहनास्त्रम् |
| १४. कालास्त्रम् | ३०. फैरवास्त्रम् | ४६. हेमनास्त्रम् | ६२. वैद्युतास्त्रम् |
| १५. याम्यास्त्रम् | ३१. मातङ्गास्त्रम् | ४७. गुह्यास्त्रम् | ६३. तिमिरास्त्रम् |
| १६. दानवास्त्रम् | ३२. नागास्त्रम् | ४८. शौरास्त्रम् | ६४. तामसास्त्रम् |

## भारतवर्ष में युद्धोपयोगी चौसठ दिव्यास्त्र

इन दिव्यास्त्रों के नाम हैं — ब्रह्मशिर, ब्रह्मास्त्र, पाशुपतास्त्र, वैष्वणास्त्र, वरुणास्त्र, नारायणास्त्र, ऐन्द्रास्त्र, प्राजापत्यास्त्र, आग्नेयास्त्र, वायव्यास्त्र, कौवेरास्त्र, पार्जन्यास्त्र, त्वाष्ट्रास्त्र, कालास्त्र, याम्यास्त्र, दानवास्त्र, स्कान्दास्त्र, प्रमथास्त्र, वैनायकास्त्र, कूष्माण्डास्त्र, गणास्त्र, गान्धर्वास्त्र, राक्षसास्त्र, पैशाचास्त्र, भौतास्त्र, वैतालास्त्र, शरभास्त्र, तार्क्ष्यास्त्र, शावरास्त्र, फैरवास्त्र, मातङ्गास्त्र, नागास्त्र, मकरास्त्र, सापर्णास्त्र, भारुण्डास्त्र, उलूकास्त्र, गालणास्त्र, पाषाणास्त्र, कालकूटास्त्र, चाक्रास्त्र, ऐषीकास्त्र, बलास्त्र, अतिबलास्त्र, ओदुम्बरास्त्र, राजसास्त्र, हैमनास्त्र, गुह्यास्त्र, शौरास्त्र, उन्मादास्त्र, स्तम्भनास्त्र, कम्पनास्त्र, जृम्भणास्त्र, जम्मकास्त्र, मूर्च्छनास्त्र, निमीलनास्त्र, उत्पातास्त्र, प्रस्वापनास्त्र, ज्वरास्त्र, भ्रामकास्त्र, अचेतनास्त्र, मोहनास्त्र, वैद्युतास्त्र, तिमिरास्त्र, तामसास्त्र इत्यादि भेद से चौसठ प्रकार की अस्त्रविद्यायें थीं ॥१-६ ॥

प्राचीन भारत वर्ष में देवकाल में मन्त्र, यन्त्र, तन्त्र विद्या से युक्त अद्‌भुत कार्यों से युक्त दिव्यास्त्र थे ॥७ ॥

यहाँ भारतवर्ष में बाण, आरी, तलवार इत्यादि अठारह प्रकार की लौहनिर्मित अस्त्र-विद्या सम्पूर्ण देश में व्याप्त थी ॥८ ॥

## रामायणोक्तानि पञ्चाशद् (५०) दिव्यास्त्राणि।

**रामायणे तु विश्वामित्रो रामाय पञ्चाशत्।(५०)**
**दिव्यास्त्राणि निरूप्य प्रददौ तान्यप्यतो विद्यात्॥१ ॥**
**चक्राणि पञ्च पाशत्रयमशनी द्वे गदे च द्वे।**
**शक्ती द्वे च महास्त्रं षोढा षोढैव तीव्रास्त्रम्॥२ ॥**
**साधारणास्त्रभेदाः सन्ति चतुर्विंशतिस्तत्र।**
**मन्त्राहितानि सर्वाण्यमोघवीर्य्याणि सिध्यन्ति॥३ ॥**

## रामायण में उल्लखित पचास दिव्यास्त्र।

वाल्मीकि रामायण में भी महर्षि विश्वामित्र ने श्रीराम को पचास दिव्यास्त्र बनाकर प्रदान किये। वे अस्त्र भी इन्हीं अस्त्रविद्याओं में वर्णित जानने चाहिये ॥१ ॥

पांच चक्र, तीन पाश, दो अशनि (फेंक कर मारने वाले अस्त्र), दो गदायें, दो शक्ति, छः महास्त्र, छः तीव्रास्त्र, चौबीस प्रकार के साधारण अस्त्र थे, जो सभी मन्त्रों द्वारा सिद्ध थे, वे सभी मन्त्रों से संयुक्त किये जाने पर अमोघवीर्य (निश्चित संहारक) हो जाते थे ॥३ ॥

### पञ्चाशद्दिव्यास्त्रतालिका

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १ | १ दण्डचक्रम् | ५ | १ कंकाल | ८ | १विद्याधरास्त्रम् | | १४ तामसम् |
| | २ धर्मचक्रम् | | मुसलशक्तिः | | नन्दमसिरत्नम् | | १५ सौमनम् |
| | ३ कालचक्रम् | | २ कायालर्कि- | | २ गान्धर्वास्त्रं | | १६ संवर्तम् |
| | ४ विष्णुचक्रम् | | कणीशक्तिः | | मोहनम् | | १७ मौसलम् |
| | ५ ऐन्द्रचक्रम् | ६ | १ वज्रास्त्रम् | | ३. प्रस्तावनम् | | १८ सत्यास्त्रम् |
| २ | १ धर्मपाशः | | २ शैवास्त्रम् | | ४. प्रशमनम् | | ११ मायास्त्रम् |
| | २ कालपाशः | | ३ शूलवतास्त्रम् | | ५. सौम्यम् | | २० सौरास्त्रं, |
| | ३ वारुणपाशः | | ४ ब्रह्मशिरोस्त्रम् | | ६. वर्षणम् | | तेजःप्रभं, परते- |
| | | | | | | | जोपकर्षणम् |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ३ | १ शुष्का अशनिः | | ५ ऐषीकास्त्रम् | | ७. शोषणम् | | २१ सौपास्त्रम्, |
| | २ आर्द्रा अशनिः | | ६ ब्राह्मास्त्रम् | | ८. संतापनम् | | शिशिरम् |
| ४ | १ मोदकी गदा | | १ पिनाकास्त्रम् | | ९. विलापनम् | | २२ त्वाष्ट्रास्त्रम् |
| | २ शिखरी गदा | | २ नारायणास्त्रम् | | १०. मादनम् | | दारुणम् |
| | | | ३ आग्नेयास्त्रम्- | | ११. कन्दर्पास्त्रम् | | मगास्त्रम् |
| | | | शिखरमग्निदयितम् | | कन्दर्पदयितम् | | दारुणम् |
| | | ७ | ४ वायव्यास्त्रम् | | १२. गन्धर्वास्त्रम् | | शीतेषु-मानदम् |
| | | | ५ हयग्रीवास्त्रम् | | गन्धर्वदयितम् | | |
| | | | ६ क्रौञ्चास्त्रम् | | मानवम् | | |
| | | | | | १३ पिशाचास्त्रम् | | |
| | | | | | पिशाचदयितम् | | |
| | | | | | मोहनम् | | |

## पञ्चाशद् दिव्यास्त्रसंहाराः ॥ (५०)

अथ चैषामस्त्राणां संहारा रामभद्राय।
पञ्चाशदेव कथिता विश्वामित्रेण तान् ब्रूमः ॥४॥

| | | | | | |
|---|---|---|---|---|---|
| १ | सत्यवान् | १८ | स्वनाभः | ३५ | पित्र्यः |
| २ | सत्यकीर्तिः | १९ | ज्यौतिषम् | ३६ | सौमनसः |
| ३ | धृष्टः | २० | शकुनम् | ३७ | विधूतः |
| ४ | रभसः प्रतीहार तरः | २१ | नैरास्यः | ३८ | मकरः |
| ५ | अपराङ्मुखम् | २२ | विमलः | ३९ | परवीरः |
| ६ | अवाङ्मुखम् | २३ | योगधरः | ४० | रतिः |
| ७ | लक्ष्यः | २४ | विनिद्रः | ४१ | धनम् |
| ८ | अलक्ष्यः | २५ | दैत्यः | ४२ | धान्यम् |
| ९ | दृढनाभः | २६ | प्रथमतः | ४३ | कामरूपः |
| १० | सुनाभः | २७ | शुचिबाहुः | ४४ | काकरूपाः |
| ११ | दशाक्षः | २८ | महाबाहुः | ४५ | मोहः |
| १२ | शतवक्त्रः | २९ | निष्कलिः | ४६ | आवरणम् |
| १३ | दशशीर्षः | ३० | विरुचिः | ४७ | जृम्भकः |
| १४ | शतोदरः | ३१ | सार्चिमाली | ४८ | सर्पनाथः |
| १५ | पद्मनाभः | ३२ | धृतिमाली | ४९ | पन्थानः |
| १६ | महानाभः | ३३ | वृत्तिमान् | ५० | वरुणः |
| १७ | दुंदुनाभः | ३४ | रुचिरः | | |

## साधारणानि शस्त्राणि अष्टादश यथा—

१ २ ४३
सहचर्म्मखभेदाः सधनुर्बाणाश्च परिघश्च ॥
४ २ ६ ७ ८ ९ १० ११
पट्टिश-तोमर-कुन्ताः खेट-गदा-परशु-चक्र-शूलानि ॥१ ॥
१२ १३ १४ १५ १६ १७
शक्ति-र्मुद्गरपाशौ हलमुसलभिन्दिपालमसिपुत्री ॥
१८
सशतघ्ना च भुशुण्डीत्येते शस्त्रास्त्रभेदाः स्युः ॥२ ॥
एषामेकैकस्य च बहवो भेदाः पुरातनैः क्लृप्ताः ॥
प्राधान्यतस्त्वमन्त्राण्येतान्यष्टादशास्त्राणि ॥३ ॥

### अष्टादशास्त्रभाषानामतालिका ।

| सं. | संस्कृतम् | पर्यायाः | हिन्दी | विशेषः |
|---|---|---|---|---|
| १ | खड्गः सचर्मा | कृपाणः ऋष्टिः असिः, करवालः | तरवार-खांडा | |
| २ | धनुःसशरम् | चापः,. धन्वः | धनुष-कमान | |
| ३ | परिघः कालदडः | परिघातिनः | लाठी | लोहबद्धो हस्तप्रमाणो लगुडः |
| ४ | पट्टिशम् | ०००० | शेल | |
| ५ | तोमरः | सर्वला | गुग्गुज | |
| ६ | कुन्तः | प्रासः | भाला, बल्लम | |
| ७ | खेटः | ईलो करवाली १ | कटारी-गुप्ती | |
| ८ | गदा | ०००० | गुर्ज | |
| ९ | परशुः | परश्वधः, स्वधितिः, कुठारः | फरसा कुठार, कुल्हाड़ी | |
| १० | चक्रम् | ०००० | चक्र | |
| ११ | शूलम् | ०००० | शूल | |
| १२ | शक्तिः | कासः | बर्छी | |
| १३ | मुद्गरः कूटमुद्गरः | घनः, द्रुघणः | मुगदर | सैतीतिय महाराष्ट्रभाषा |
| १४ | पाशः | ०००० | फांस | |
| १५ | हलमुसलम् | ०००० | हल मूसल | |

| | | | | |
|---|---|---|---|---|
| १६ | भिन्दिपालः | सृगः | गोपया-ढेलवांस | पत्थर फेंकने का रज्जुमय यन्त्र |
| १७ | छुरिका | शस्त्री, असिपुत्री | छुरी-छूरी | |
| १८ | शतघ्नी भुशुण्डी | ०००० | तोप-बन्दूक | |

इति क्षात्रवीर्य्याख्यानम् ॥२ ॥

## पचास दिव्यास्त्र संहार

विश्वामित्र मुनि ने इस पचास अस्त्रों के पचास ही उपसंहार बताये थे। अब उनको कहते हैं ॥४ ॥

अठारह साधारण अस्त्र हैं। यथा—

चर्मसहित खांडे के अठारह भेद, धनुषसहित बाण, लाठियाँ, पट्टिश (बरछी), लकड़ी का डंडा, भाला, कटार, गदा, फरसा, चक्र, शूल, बर्छी, मुद्गर, फांस, हलमूसल, गुलेल, छुरी, तोप-बन्दूक ये अठारह शस्त्रास्त्र के भेद हैं ॥१-२ ॥

इनके एक एक के अनेक भेद हैं, जो प्राचीन विद्याविदों ने बताये हैं।प्रधान रूप से तो ये अठारह अस्त्र अमन्त्रक थे, जिनका प्रयोग करने के लिए मन्त्र की आवश्यकता नहीं थी ॥३ ॥

## भारतीयविड्वीर्य्याख्यानम्।

भारतीयानां भग्नावशिष्टानामपि शिल्पानामतुलनीयत्वम्।
वाणिज्यं च पुरासीदत्युत्कृष्टं हि भारतीयानाम् ॥
इतरे सर्वे देशा आयान्ति स्मात्र भूयसा क्रेतुम् ॥१ ॥
यद्यपि भारतवर्षे शिल्पिकलाः शिथिलतां क्रमादगमन् ॥
किन्तु न तत्रार्य्याणामलसत्वं मूढतापि वा हेतुः ॥२ ॥
राजास्त्यभारतीयो न स धर्म्माणामिहत्यशिल्पानाम् ॥
वृद्धिं रक्षां वैषां कुरुते तस्मादियं दसाऽवनता ॥३ ॥
अद्याप्यवनतिकाले हीनदशानामपि क्वाचार्य्याणाम् ॥
शिल्पं भारतवर्षे प्रदृश्यतेऽन्यैरतुलनीयम् ॥४ ॥
कश्मीरे शालपटश्चोर्णावस्त्रं च दिव्यमप्रतिमम्।
मलमलवस्त्रं ढाकानगरे सूक्ष्मातिसूक्ष्मतरम् ॥५ ॥
रूप्यकसहस्त्रसप्तकमूल्याः शाला विनिर्म्मिता हस्तैः।
सौष्ठवमौष्ण्यं मृदुतां हृद्यत्वं यादृशं धत्ते ॥६ ॥
ढाकामलमलवस्त्रं सूक्ष्मतमत्वेऽपि यादृशं धत्ते।
मसृणत्वं च दृढत्वं सौक्ष्म्यं चौष्ण्यं मनोहरताम् ॥७ ॥
न च तत्तुलनां कर्तुं शक्ता अद्यापि यत्नवन्तोऽपि।
सन्त्युत्तमयन्त्रकलायुक्ता अपि भिन्नदेशीयाः ॥८ ॥

अंशुकपट्टविशेषा दारुमृदश्मादिरम्यपात्राणि।
अद्याप्यवनतिसमये भारतवर्षे प्रशंसनीयानि ॥९ ॥
अद्याप्यत्र बहूनि श्लाघ्यानि भवन्ति दीनहतकानाम्।
कारूणामिह शिल्पान्येभिर्भारतशिरोऽत्युच्चम् ॥१० ॥

इति भारतवर्षीयविद्याप्रसङ्गे विड्वीर्य्याख्यानं तृतीयम् ॥३ ॥

इति भारतपरिचयः प्रथमः।

## भारतीय वणिक् शक्ति का आख्यान्

भग्नावशिष्ट भी भारतीयों की शिल्पकला अतुलनीय है। प्राचीन भारतीयों की व्यापारकला अत्यन्त उत्कृष्ट थी। इसलिए अन्य देश के व्यापारी लोग यहाँ बहुत अधिक खरीददारी करने आते थे ॥१ ॥

यद्यपि भारतीयों की व्यापारकला धीरे धीरे शिथिलता को प्राप्त हो गई है, परन्तु इसका कारण भारतीयों का आलस्य अथवा अज्ञानता नहीं है ॥२ ॥

आज यहाँ का राजा भारतीय नहीं है। (अंग्रेजी राज्य के समय), वह यहाँ के धर्म और शिल्पकला की वृद्धि अथवा रक्षा नहीं करता। इसलिए इस शिल्प की अवनति हुई ॥३ ॥

आज इस अवनति के समय भी हीनावस्था को प्राप्त होने पर भी भारतीय आर्यों की शिल्पकला अन्य देशों की शिल्पकला से श्रेष्ठ दिखाई देती है, अतुलनीय है ॥४ ॥

कश्मीर में शाल-दुशाले, ऊन के वस्त्र, ढाका नगरी की मलमल, जो अत्यन्त पारदर्शी है, आज भी दिव्य और अतुलनीय हैं ॥५ ॥

हाथ से बने हुए दुशाले, जिनकी कीमत सात हजार रुपये थी (अंग्रेजी राज्य काल में), जिनकी सुन्दरता, गर्मी, चिकिनाई, मनोहरता जैसी यहाँ थी वैसी अन्यत्र नहीं ॥६ ॥

ढाका की मलमल अत्यन्त पारदर्शी होते हुए भी जितनी कोमलता, मजबूती, पतलापन, गर्मी और सुन्दरता को धारण करती है, वैसी अन्य देशों के वस्त्रों में कहीं नहीं मिलती ॥७ ॥

आज भी उन दुःशालों और मलमल की तुलना विदेशियों द्वारा मशीनी कला से युक्त होते हुए भी, प्रयत्न करने पर भी नहीं की जा सकती है ॥८ ॥

आज भी इस अवनति के काल में भी भारतवर्ष में बने विशिष्ट कला से युक्त रेशमी वस्त्र, लकड़ी, मिट्टी और पत्थर से बने बरतन अत्यन्त प्रशंसा के योग्य है ॥९ ॥

आज भी दीनहीन, करुणा के पात्र शिल्पियों की अनेक शिल्पकलाएँ प्रशंसनीय होती हैं, जिनसे भारतवर्ष का मस्तक सदैव ही ऊंचा रहा है ॥१० ॥

**भारतवर्षीय विद्या-प्रसंग में वणिक्शक्ति आख्यान समाप्त हुआ।**

हैं। (विषुवत् नाम से प्रसिद्ध बृहती छन्द के दक्षिण भाग में क्रमशः गायत्री, उष्णिक् और अनुष्टुप् नाम के तीन छन्दों की सत्ता है। ये छन्द क्रमश ६, ७, ८ और १०, ११, १२ अक्षर के छन्द हैं और मध्य में बृहती छन्द है ॥१२॥

इन सात छन्दों के नाम हैं-गायत्री, उष्णिक्, अनुष्टुप्, बृहती, पंक्ति, त्रिष्टुप् और जगती ॥३॥

गायत्री छन्द में उत्तरायण और जगती छन्द में दक्षिणायन होता है तथा सूर्य जब बृहती छन्द में होता है तब रात्रि और दिन समान होते हैं। (गायत्री छन्द सूर्य-संक्रमण-वृत्त की दक्षिण. दिशा के अन्त में होता है, जहां से सूर्य २२ दिसम्बर को अपनी दक्षिण यात्रा समाप्त करके उत्तर दिशा में लौटना प्रारम्भ करता है, यही दक्षिणायन है। इस यात्रा में उत्तर की ओर जाते हुए २३ दिसम्बर को तथा दक्षिण की ओर जाते हुए २१ मार्च को सूर्य मध्य बिन्दु पर होता है और यही मध्य बिन्दु बृहती छन्द है, जिस पर रात्रि और दिन बराबर होते हैं ॥४॥

इस द्युलोक का जितना प्रदेश गायत्र्यादि सात छन्दों से अवच्छिन्न है, उसे हम सूर्य का रथ कहते हैं, जिसके सात घोड़े और एक चक्र हैं। (सूर्य अपने क्रान्तिवृत्त पर जिन सात छन्दों पर भ्रमण करता है, वही सूर्य के सात अश्व हैं तथा यह सम्पूर्ण परिभ्रमण वृत्त ही सूर्य का रथ है) ॥५॥

क्रान्तिवृत्त नाम का जो परिभ्रमण मार्ग है, उसे रथचक्र कहते हैं, जिसमें छन्द रूप सात अश्व हैं ॥६॥

ये सात छन्द ही देवों के सात पशु बताए गए, ऐसा शतपथ के तृतीय प्रपाठक के पंचम अध्याय में पढ़ा गया है ॥७॥

ये सात छन्द ही सूर्य के सात अश्व हैं अथवा वह (सम्पूर्ण क्रान्तिवृत्त रूप) एक अश्व को एतश नाम के ऋषि ने भली प्रकार देखा है ॥८॥

तिर्यग्योनि में जो अश्वयोनि था, उसके किसी वर्ग का यह सुष्वि नाम का राजा था। इसने एतश नाम के सूर्य के अश्व को देखा इसीलिए यह एतश नाम से प्रसिद्ध हुआ ॥९॥

## ११. उषसः सूर्य्यायतनस्थाया ब्रहवः प्रभेदाः ।

**आसन्नुषसी बह्व्यः पर्य्यायेणात्र कर्मकारिण्यः।**
**तासामेका सूर्य्यायतनस्था सूनरी नाम ॥१॥**
**प्रागुदयादिह चक्रे केतौ चित्रा प्रभोदेति ।**
**तां सूनरी ह्युपास्ते नाखिलभास्ते तु साऽभास्ति ॥२॥**
**योषा सूर्य्यसदेशे नक्तं शेते विभावरी सोक्ता ।**
**सैव पुनः स्यादहना प्रातर्यात्रां प्रकुर्वाणा ॥३॥**
**अहना चरति गवाश्वोपेतं वाजं प्रयच्छन्ती ।**
**दिवि तु भुवनस्य पत्नी याति मनुष्येषु मानुषीनाम्ना ॥४॥**

पञ्चक्षितिषु सरन्ती यतस्ततः पुंश्चली भवत्वेषा ।
तेन भुवनस्य पत्नीत्यहना सा या दिवि क्रमते ॥५॥
अपि सा सर्वाध्यक्षा तेन च भुवनस्य पत्नी सा ।
यो विश्वकर्म्मजनको भुवनः सा तस्य पत्नी वा ॥६॥
सूर्य्यस्यैका योषा तामाहुर्वाजिनीवतीं नाम्ना ।
स हि गन्धर्वः सूर्यः सूर्य्यायतनेऽधिकारवानासीत् ॥७॥
स्वर्ग्यधनाढ्यैर्वसुभिः काले काले प्रदीयमानस्य ।
क्रोशं धनस्य रक्षति या सा चित्रा मघा नाम ॥८॥
ते वह्न्यो वहन्ति तु ये संभारान् कुतश्चिदन्यत्र ।
वह्नी नामाध्यक्षा काचिदुषा सा मघोन्याख्या ॥९॥
ऋषयस्तु सूर्य्यरश्मीन् परीक्षितुं येऽत्र समवयन्त्यसकृत् ।
तेषां परिचर्य्यायां जरयन्ती नाम काचिदुषा ॥१०॥
विश्वपिशेति तृतीया कृतं पदं सायणः प्राह ।
अथवा विश्वपिशा सा या बहुरूपा रथेनैति ॥११॥
मधुधा च रोचनान्या ऋतावरी रेवती चान्या ।
इत्थं बहवो भेदा आसन्नुषसो दिवस्पुत्र्याः ॥१२॥
एताः कर्मनियुक्ता उषसः कर्म्माख्यया ख्याताः ।
इतरा विश्राम्यन्तः सर्वा भद्राभिधानाः स्युः ॥१३॥
उषसः सर्वा आसन् प्रसन्नहृदयाः सदा हसद्वदनाः ।
मधुभाषिण्यः प्रेम्णा कर्षन्त्यश्चारुसर्वाङ्ग्यः ॥१४॥

## ११. सूर्यायतन-स्थित उषाओं के अनेक भेद

वहाँ बारी-बारी से कार्य करने वाली अनेक उषाएँ थीं, जिनमें से सूर्यायतन में स्थित एक सूनरी नाम की उषा थी ॥१॥

उदयं से पूर्व उस चक्र के शीर्ष भाग में विचित्र प्रभा उदय लेती है। सूनरी नाम की उषा इस विचित्र प्रभा के समीप रहती है, परन्तु सूर्य के पूर्ण प्रकाशित होने पर वह विचित्र प्रभा अथवा चित्रा की आभा विद्यमान नहीं रहती है ॥२॥

सूर्यस्थान पर जो उषा रात्रि में शयन करती थी वह विभावरी नाम से कही जाती थी। वही विभावरी प्रातःकाल की यात्रा करती हुई अहना नाम से कही जाती है ॥३॥

यह अहना नाम की उषा गायों और घोड़ों से युक्त अन्न प्रदान करती हुई द्युलोक में भुवन की पत्नी और मनुष्यों में मानुषी नाम से कही जाती है ॥४॥

यह उषा यत्र-तत्र पांच क्षितियों (चन्द्रमाँ, पृथ्वी, सूर्य, परमेष्ठी और स्वयंभू प्रजापति) पर विचरण करती हुई पुंश्चली नाम की हो जाती है। इस प्रकार वह अहना नाम की उषा द्युलोक में विचरण करती है, इसीलिए भुवन की पत्नी कहलाती है ॥५॥

यह अहना समस्त उषाओं की अध्यक्षा भी है इसलिए भी भुवन की पत्नी कही जाती है अथवा जो समस्त कर्मों का उत्तपत्तिकर्त्ता भुवन है, वह अहना उस भुवन की पत्नी है ॥६॥

सूर्य (सूर्य नाम का गन्धर्व) की एक पत्नी है, जिसको वाजिनीवती के नाम से कहा जाता है। यह सूर्य एक गन्धर्व है, जो सूर्यायतन में अधिकारवान् था ॥७॥

स्वर्ग में ऐश्वर्यों से जो धनाढ्य जन हैं, उनके द्वारा समय समय पर दिए जाने वाले धन की जो रक्षा करती है, वे विचित्र और मघा नाम की उषाएँ हैं ॥८॥

जो वाह्नियों को ले जाती है और जो वस्तुओं को एक स्थान से दूसरे स्थान पर ले जाती है, वह वह्नि नाम की अध्यक्षा उषा मघोनी नाम से कही जाती है ॥९॥

सूर्यरश्मियों की परीक्षा करने के लिए यहाँ ऋषिगण अनेक बार एकत्रित होते थे, उनकी परिचर्चा करने वाली कोई जरयन्ती नाम की उषा थी ॥१०॥

सायण ने कहा है कि विश्वपिशा शब्द तृतीया के लिए प्रयुक्त किया गया है, परन्तु विश्वपिशा वह उषा भी है, जो अनेक रूपों वाले रथ से जाती है ॥११॥

मधुधा, रोचना, ऋतावरी और एक रेवती, इस प्रकार द्युलोक की पुत्री उषाओं के अनेक भेद थे ॥१२॥

ये उषाएँ जिस कार्य में नियुक्त थीं, वे उसी कर्म के नाम से कही जाती थीं और दूसरी जो विश्राम करने वाली उषाएँ थीं, वे भद्रा नाम से कही जाती थीं ॥१३॥

ये सभी उषाएँ प्रसन्नचित्त और सदैव हंसमुख रहती थीं। ये उषाएँ मधुर वचन बोलने वाली थीं और आकर्षित अंगों वाली उषाएँ प्रेम से सबको आकर्षित करती थीं ॥१४॥

## १२. उषसो मानुष्या अप्याधिदैविकवद् वृत्तिः ।

**सूर्य्योदयादेव रथं हिरणमयं सारुह्य दूरानभियाति मानुषान् ।**
**अध्यासितं तत्सहचारि दैवतैः शतं रथानामनुयापि पृष्ठतः ॥१॥**
**वाजैश्च पूर्णं वसुभिश्च भूरिभिर्नयन्त्यनोऽश्वानपि गाश्च भूयसीः ।**
**सूर्य्यप्रसादोपहृतान् विभाजयत्यर्थानिमान् प्राणिजने दिने दिने ॥२॥**
**गृहे गृहे संप्रचरन्त्यनातुरा समीक्ष्य सा दीनजनान् नवान्नवान् ।**
**तेभ्यः प्रयच्छत्यहना यथोचितं धनानि वाजानपि गाश्च वाजिनः ॥३॥**
**या द्वेषिणोऽन्योन्यविरोधिनो जनान् प्रवृज्य धत्ते सुभगाऽतिसौभगम् ।**
**तां भासमानामभिलाषपूरणीं विश्वं जगद् द्रष्टुमिमां ननाम ह ॥४॥**

**चित्रं तु वाजं प्रविभज्य मानुषे जनेन्तरिक्षं च कदाप्युपेत्य सा ।**
**विश्वांश्च देवानिह सोमपीतये संतर्पणायाह्वयति स्म दक्षिणा ॥५॥**
**संयाति सूर्य्यायतनादितस्ततस्त्रिंशत्समन्तादिह योजनानि सा ।**
**पुंसां समक्षं चरतीयमत्र सा निवर्तते नित्यमुपह्वराद् दिवः ॥६॥**
**या चाद्य विश्राणयते धनान्नं रथेन गत्वोषसि मानुषेभ्यः ।**
**निवृत्त्य विश्राम्यति सा परेद्युः पराऽहना याति रथेन दातुम् ॥७॥**
**उषसो या मे दानं विशेषपुण्यातिशयकृत् स्यात् ।**
**इत्येव घोषयन्ती ददात्युषा उषसि कण्व इत्याह ॥८॥**

## १२. उषाओं की मानुषी होते हुए भी आधिदैविक उषाओं के समान वृत्ति

सूर्योदय से ही यह उषा हिरण्मय रथ पर आरूढ होकर दूर मनुष्यों के पास जाती है। उसके सहचारी देवों के द्वारा अधिष्ठित सौ रथ उसके पीछे-पीछे चलते हैं ॥१॥

वह उषा घोड़ों और विपुल धनों से पूर्ण गाड़ियों, घोड़ों और बहुत सी गायों को ले जाती है। इस प्रकार ये सूर्य की कृपा से लाये गये अर्थों को प्रतिदिन प्राणियों में बांटती हैं ॥२॥

यह अहना नाम की उषा धैर्यपूर्वक घर-घर विचरण करती हुई दीन जनों को और नवीन अन्न से युक्त जनों को देखकर उन्हें यथोचित धन, अन्न, गायें और घोड़े प्रदान करती है ॥३॥

जो द्वेष करने वाले और विभिन्न विरोधी लोग हैं, उनको छोड़ कर यह सुभगा नाम की उषा अत्यन्त सौभाग्य को धारण करती है, ऐसी उस प्रकाशवती और अभिलाषाओं को पूर्ण करने वाली को हम समस्त संसार को देखने के लिए नमस्कार करते हैं ॥४॥

वह दक्षिणा उषा मनुष्य जनों में विचित्र अन्न को बांटकर, कभी भी अन्तरिक्ष में पहुँच कर समस्त देवगणों को सोमपान करने के लिए और उन्हें तृप्त करने के लिए बुलाती है॥५॥

यह उषा सूर्यायतन से इधर-उधर चारों ओर तीस योजन की दूरी पर लोगों के समक्ष विचरण करती हुई प्रतिदिन नीचे से ऊपर द्युलोक में लौट जाती है ॥६॥

और जो उषा मनुष्यों को धन और अन्न बांट देती है, तब वह रथ से पुनः लौट कर विश्राम करती है। दूसरे दिन वह अहना नाम की उषा रथ से धनादि देने के लिए जाती है ॥७॥

जो उषा मुझे विशेष रूप से अतिशय पुण्य करने वाले दान की घोषणा करती हुई दान देती है। ऋषि कण्व ने ऐसा उषा के संबन्ध में कहा है ॥८॥

## १३. विश्वामित्रो महर्षिरुषसं स्तौति ।३।६१।१-७

पञ्चनदाख्ये देशे विश्वामित्रो महर्षिरासीत् प्राक्।
एष सुदासो राज्ञः पुरोहितः स्तौति तामुषसम् ॥१॥
"३/६१ उषो वाजेन वाजेनि प्रचेताः स्तोमं जुषस्व गृणतो मघोनि।
पुराणी देवि युवतिः पुरन्धिरनुव्रतं चरसि विश्ववारे ॥१॥
उषो देव्यमर्त्या विभा हि चन्द्ररथा सूनृता ईरयन्ती।
आ त्वा वहन्तु सुयमासो अश्वा हिरण्यवर्णाः पृथपाजसो ये॥२॥
उषः प्रतीची भुवनानि विश्वोर्ध्वा तिष्ठस्यमृतस्य केतुः ।
समानमर्थं चरणीयमाना चक्रमिव नव्यस्या ववृत्स्व ॥३॥
अवस्यूमेव चिन्वती मघोन्युषा याति स्वसरस्य पत्नी ।
स्वर्जनती सुभगा सुदंसा आन्ताद्दिवः पप्रथ आ पृथिव्याः ॥४॥
अच्छा वो देवीमुषसं विभातीं प्र वो भरध्वं नमसा सुवृक्तिम् ।
ऊर्ध्वं मधुधा दिवियाजो अश्रेत्प्ररोचना रुरुचे रण्वसंदृक् ॥५॥
ऋतावरी दिवो अर्कैरबोध्या रेवती रोदसी चित्रमस्थात् ।
आयातीमग्न उषसं विभातीं वाममेषि द्रविणं भिक्षमाणः ॥६॥
ऋतस्य बुध्न उषसामिषण्यन्वृषा मही रोदसी आविवेश ।
मही मित्रस्य वरुणस्य माया चन्द्रेव भानुं पुरुत्रा ॥७॥"

## १३. ऋग्वेद के ३/६१ में ऋषि विश्वामित्र उषा की स्तुति करते हैं

प्राचीन समय में पंचनद (पंजाब) नाम के प्रदेश में विश्वामित्र नाम के महर्षि हुए थे, जो राजा सुदास के पुरोहित थे। वह उषा की स्तुति करते हैं ॥१॥

"हे अन्न के साथ रहने वाली, धन से परिपूर्ण रहने वाली उषा ! तू ध्यान युक्त होती हुई स्तुतिकर्ताओं की स्तुति का श्रवण कर। हे विश्व द्वारा वरण करने योग्य देवि उषा! तू प्राचीन होते हुए भी नवीन है, बुद्धिशालिनी और अपने नियमों का पालन करने वाली है ॥१॥

चन्द्रमा के समान सुन्दर रथ में बैठने वाली, मधुर वाणी को प्रेरित करने वाली, अमर स्वरूपधारिणी उषा ! तू तेजस्विनी हो। जो हिरण्यवर्णा है, विशेष बलशालिनी है, ऐसी तुझे स्वतंत्र घोड़े यहाँ ले आवें ॥२॥

हे उषा ! समस्त भुवनों के सम्मुख अमृत की पताका है, तू उच्च स्थान पर प्रतिष्ठित है। हे उषा ! तू नवीना और तरुणी है। तू एक ही ध्येय के लिए चक्र के समान विचरण करने वाली है, तू पुनः विचरण कर ॥३॥

यह उषा ज्योति किरण के समान अन्धकार को दूर करने वाली है, ऐश्वर्यशालिनी है, यह उषा सूर्य की पत्नी है, यह विचरण करती है। यह उषा प्रकाश को उत्पन्न करने वाली है। यह सौभाग्यशाली और सुन्दर है, द्युलोक और पृथिवीलोक के अन्त तक प्रकाश फैलाने वाली है ॥४॥

हे स्तुतिकर्ताओ ! यह उषा आप सबके सम्मुख ज्योति उत्पन्न करने वाली है। तुम सब नमस्कारपूर्वक इसकी स्तुति करो। यह मधुरता को धारण करने वाली है, द्युलोक में उच्च भाग पर अपना तेज स्थापित करती है। सुन्दर दर्शन वाली, तेजस्विनी उषा का प्रकाश व्याप्त हो रहा है ॥५॥

सत्य का पालन करने वाली तथा द्युलोक में अपनी किरणों को फैलाने वाली यह उषा पहचानी गई है। धन से सम्पन्न यह उषा द्यावापृथिवी पर विचित्र शोभा को स्थापित कर रही है। हे अग्नि ! सामने आती हुई प्रकाश से युक्त उषा के प्रति स्वीकार करने योग्य धन की मांग करता हुआ तू जाता है ॥६॥

बलवान् सूर्य दिन के प्रारम्भ में उषाओं को प्रेरित करता हुआ इस विशाल द्यावा पृथिवी में प्रविष्ट हुआ है। मित्र और वरुण की यह महान् शक्ति सुवर्णवर्णा, देदीप्यमान उषा के समान सूर्य के चारों ओर फैलाती है ॥" ॥७॥ (३।६१)

## १४. वसिष्ठो महर्षिरुषसं स्तौति ।

**अस्तु वसिष्ठो राज्ञो वरुणस्यासीत् पुरोहितः पूर्वम् ।**
**पश्चात्सूर्य्यायतने नियुक्त आसीत् स चोषसं स्तौति ॥१॥**
**"७/७५ व्युषा आवो दिविजा ऋतेनाविष्कृण्वाना महिमानमागात् ।**
**अपद्रुहस्तम आवरजुष्टमङ्गिरस्तमापथ्या अजीगः ॥१॥**
**महेनो अद्य सुविताय वोध्युषो महे सौभगाय प्रयन्धि ।**
**चित्रं रयिं यशसं धेह्यस्मे देवि मर्तेषु मानुषि श्रवस्युम् ॥२॥**
**एते त्ये भानवो दर्शतायाश्चित्रा उषसो अमृताश्च आगुः ।**
**जनयन्तो दैव्यानि व्रतान्यापृणन्तो अन्तरिक्षा व्यस्थुः ॥३॥**
**एषा स्या युजाना पराकात्पञ्च क्षितिः परि सद्यो जिगाति ।**
**अभिपश्यन्ती वयुना जनानां दिवो दुहिता भुवनस्य पत्नी ॥४॥**
**वाजिनीवती सूर्य्यस्य योषा चित्रा मघा राय ईशे वसूनाम्।**
**ऋषिष्टुता जरयन्ती मघोन्युषा उच्छति वह्निभिर्गृणाना ॥५॥**
**प्रति द्युतानामरुषासो अश्वश्चित्रा अदृश्रन्नुषसं वहन्तः ।**
**याति शुभ्रा विश्वपिशा रथेन दधाति रत्नं विधते जनाय ॥६॥**

सत्या सत्येभिर्महती महद्भिर्देवी देवेभिर्यजता यजत्रैः ।
रुजदृढाहानि ददद्रुस्त्रियाणां प्रतिगाव उषसं वावशन्त ॥७॥
नूनो गोमद्वीर वद्धे हि रत्नमुषो अश्वावत्पुरु भोजो अस्मे ।
मानो बर्हिः पुरुषता निदेकर्यूयं पात स्वस्तिभिः सदा नः" ॥८॥
७।७६ उदु ज्योतिरमृतं विश्वजन्यं विश्वानरः सविता देवो अश्श्रेत् ।
क्रत्वा देवानामजनिष्ट चक्षराविरकर्भुवनं विश्वमुषाः ॥१॥
प्रमे पन्था देवयाना अदृश्रन्नमर्धन्तो वसुभिरिष्कृतासः ।
अभूदु केतुरुषसः पुरस्तात्प्रतीच्यागादधिहर्म्येभ्यः ॥२॥
तानीदहानि बहुलान्यासन् या प्राचीनमुदिता सूर्य्यस्य ।
यतः परिजार इवा चरन्त्युषो ददृक्षे न पुनर्यतीव ॥३॥
त इद्देवानां सधमाद आसन्नृतावानः कवयः पूर्व्यासः।
गूढं ज्योतिः पितरो अन्वविन्दन्त्सत्यमन्त्रा अजनयन्नुषासम् ॥४॥
समान ऊर्वे अधिसङ्गतासः सं जानते न यतन्ते मिथस्ते।
ते देवानां न मिनन्ति व्रतान्यमर्धन्तो वसुभिर्यादमानाः ॥५॥
प्रति त्वा स्यौमैरीडते वसिष्ठा उषर्बुधः सुभगे तुष्टुवांसः।
गवां नेत्री वाजपत्नी न उच्छीषः सुजाते प्रथमा जरस्व ॥६॥
एषा नेत्री राधसः सूनृतानामुषा उच्छन्तीरिभ्यते वसिष्ठैः।
दीर्घश्रुतं रयिमस्मे दधाना यूयं पात स्वस्तिभिः सदा नः ॥७॥
७।७७ उषो रुरुचे युवतिर्न योषा विश्वं जीवं प्रसुवन्ती च रायै।
अभूदग्निः समिधे मानुषाणामर्कज्योतिर्बाधमाना तमांसि ॥१॥
विश्वं प्रतीची स प्रथा उदस्थाद्रुसद्वासो विभ्रती शुक्रमश्वैत् ।
हिरण्यवर्णा सुदृशी कसन् दृग्गवां माता नेत्र्यह्नामरोचि ॥२॥
देवानां चक्षुः सुभगा वहन्ती श्वेतं नयन्ती सुदृशीकमश्वम् ।
उषा अदर्शि रश्मिभिर्व्यक्ता चित्रामघा विश्वमनुप्रभूता ॥३॥
अन्ति वामा दूरे अमित्रमुच्छोर्वीं गव्यूतिमभयं कृधी नः ।
यावयद् द्वेष आभरा वसूनि चोदय राधो गृणते मघोनि ॥४॥
अस्मे श्रेष्ठिभिर्भानुभिर्विभाह्युषो देवि प्रतिरन्ती न आयुः ।
इषं च नो दधती विश्ववारे गोमदश्वावद्रथवच्च राधः ॥५॥
यां त्वा दिवो दुहितर्वर्धयन्त्युषः सुजाते मतिभिर्वसिष्ठाः ।
सास्मासुधा रयिमृष्वं बृहन्तं यूयं पात स्वस्तिभिः सदा नः ॥६॥

७।७८ "प्रति केतवः प्रथमा अदृश्रन्नूर्ध्वा अस्या अज्जयो विश्रयन्ते।
उषो अर्वाचा बृहता रथेन ज्योतिष्मता वामस्मभ्यं वक्षि ॥१॥
प्रति षीमग्निर्जरते समिद्धः प्रति विप्रासो मतिभिर्गृणन्तः ।
उषा याति ज्योतिषा बाधमाना विश्वा तमांसि दुरिताय देवो॥२॥
एता उत्याः प्रत्यदृश्रन्पुरस्ताज्ज्योतिर्यच्छन्तीरुषसो विभातीः ।
अजीजन्त्सूर्य्यं यज्ञमग्निमपाचीनं तमो अगादजुष्टम् ॥३॥
अचेति दिवो दुहिता मघोनी विश्वे पश्यन्त्युषसं विभातीम् ।
आस्थाद्रथं स्वधया युज्यमानं मायमश्वासः सुयुजो वहन्ति ॥४॥
प्रतित्वाद्य सुमनसो बुधन्तास्माकासो मधवानो वयं च ।
तिल्विलायध्वमुषसो विभातीर्यूयं पात स्वस्तिभिः सदा नः"॥५॥
७।७९ "व्युषा आ वः पथ्याजनानां पञ्चक्षितीर्मानुषीर्बोधयन्ती ।
सुसन्दृग्भिरुक्षभिर्भानुमश्रेद्धि सूर्य्यो रोदसी चक्षसावः ॥१॥
व्यञ्जते दिवो अन्तेष्वक्तून्विशो न युक्ता उषसो यतन्ते ।
सं ते गावस्तम आवर्तयन्ति ज्योतिर्यच्छन्ति सवितेव बाहू ॥२॥
अभूदुषा इन्द्रतमा मघोन्यजीजनत्सुविताय श्रवांसि।
वि दिवा देवा दुहिता दधात्यङ्गिरस्तमा सुकृते वसूनि॥३॥
तावदुषो राधो अस्मभ्यं रास्व यावत्सोतृभ्यो अरदो गृणाना।
यां त्वा जज्ञुर्वृषभस्यारवेण विदृलहस्य दुरो अद्रेरौर्णोः॥४॥
देवं देवं राधसे चोदयन्त्यस्मद्र्यक्सूनृता ईरयन्ती ।
व्युच्छन्ती नः सनये धियो या यूयं पात स्वस्तिभिः सदा नः॥५॥
प्रति स्तोमेभिरुषसं वसिष्ठा गीर्भिर्विप्रासः प्रथमा अबुध्रन् ।
विवर्तयन्तीं रजसी समन्ते आविष्कृण्वतीं भुवनानि विश्वा॥१॥
एषास्या नव्यमायुर्दधाना गूढ्वी तमो ज्योतिषोषा अबोधि।
अग्र एति युवतिरह्रयाणा प्राचिकितत्सूर्य्यं यज्ञमग्निम् ॥२॥
अश्वावतीर्गोमतीर्न उषासो वीरवतीः सदमुच्छरन्तु भद्राः।
घृतं दुहाना विश्वतः प्रपीता यूयं पात स्वस्तिभिः सदा नः"॥३॥
७।८१ "प्रत्यु अदृश्र्यायत्युच्छन्ती दुहिता दिवः ।
अपोमहि व्ययति चक्षसे तमो ज्योतिष्कृणोति सूनरी॥१॥
उदुस्त्रियाः सृजते सूर्य्यः सचाँ उद्यन्नक्षत्रमर्चिवत् ।
तवेदुषो व्युषि सूर्य्यस्य च सम्भक्तेन गमेमहि ॥२॥

**प्रति त्वा दुहितर्दिव उषो जीरा अभुत्स्महि ।**
**या वहसि पुरुस्यार्हं वनन्वति रत्नं न दाशुषे मयः ॥३॥**
**उच्छन्ती या कृणोषि मंहना महि प्रख्यै देवि स्वर्दृशे ।**
**तस्यास्ते रत्नभाज ईमहे वयं स्याम मातुर्न सूनवः ॥४॥**
**तच्चित्रं राध आभरोषो यद्दीर्घश्रुत्तमम् ।**
**यत्ते दिवो दुहितर्मर्तभोजनं तद्रास्व भुनजामहै ॥५॥**
**श्रवः सूरिभ्यो अमृतं वसुत्वनं वाजाँ अस्मभ्यं गोमतः ।**
**चोदयित्रि मघोनः सूनृतावत्युषा उच्छदपस्त्रिधः" ॥६॥**

## १४. महर्षि वसिष्ठ द्वारा उषा की स्तुति

पहले जो ऋषि वसिष्ठ राजा वरुण के पुरोहित थे जो बाद में सूर्यभवन में नियुक्त किये गये वह वसिष्ठ उषा की स्तुति करते हैं ॥१॥

ऋग्वेद के ७।७५ में ऋषि वसिष्ठ स्तुति करते हैं—

"यह उषा द्युलोक में प्रकट होकर विशिष्ट रीति से प्रकाशित होने लगती है। यह अपने तेज से अपनी महिमा को प्रकट करती हुई आ रही है। यह उषा शत्रुओं तथा अप्रिय अन्धकार को दूर करती है और चलने के मार्ग को प्रकाशित करती है ॥१॥

हे उषा ! आज हमारे महान् सुख के लिए उठ, हमें सौभाग्य प्रदान कर तथा विशिष्टता से युक्त धन हमें प्रदान कर। हे मानुषि देवि ! मर्त्यलोक के प्राणियों को यशस्वी और धनवान् पुत्र प्रदान कर ॥२॥

शोभनीय उषा की ये विचित्र और अमर प्रकाश किरणें फैल रही हैं । वे दिव्य नियमों का निर्माण कर रही हैं और अन्तरिक्ष को पूर्णता प्रदान करते हुए वहां उत्तम रीति से निवास करती हैं ॥३॥

यह उषा दूर रहकर भी पांच मानवों (चार वर्ण और निषाद) को अपने कार्य में प्रवृत्त करती है । लोगों के कार्यों का अवलोकन करती हुई यह द्युलोक की पुत्री उषा भुवनों की पालना करती है ॥४॥

यह बलवर्धक अन्न से युक्त तथा विलक्षण धन से युक्त है। यह सूर्य की पत्नी है, ऐश्वर्यों और धनों की स्वामिनी है। ऋषिगण जिसकी स्तुति करते हैं, ऐश्वर्यशालिनी उषा सबकी आयु का नाश करती है। (कालचक्र की गति) और अग्नि के साथ प्रशंसित होकर प्रकाशित हो रही है ॥५॥

तेजोमयी उषा को वहन करने वाले विचित्र घोड़े दिखाई दे रहे हैं। यह शुभ्रा उषा सर्वश्रेष्ठ सुन्दर रथ से जाती है। यह कर्मशील लोगों को रत्न और धन प्रदान करती है ॥६॥

यह उषा देवी सत्य का पालन करने वाली तथा पूजनीय है तथा सत्य का पालन करने वाले महान् पूजनीय देवों के साथ रहकर घोर अन्धकार को नष्ट करती है । गायों के लिए उषा प्रकाश देती है इसीलिए गाएँ उषा की कामना करती है ॥७॥

"हे उषा ! हमें गाएँ, अश्व, वीर पुत्रों से युक्त धन और विपुल भोजन सामग्री दो । हमारा यज्ञ समाज में निन्दनीय न होवे । तुम हमें सर्वदा कल्याण-साधनों से सुरक्षित रखो ॥८॥ (७/७५)

"अमर और सबका हित करने वाले, विश्व के नेता सविता देव ने तेज को आश्रय दिया है। वह देवों के लिए दृष्टिस्वरूप सूर्य शुभ कर्म के साथ उदय हुआ है और उषा भी सम्पूर्ण जगत् को प्रकाशित करती है ॥१॥

हिंसा न करने वाले और तेज से युक्त देवों के अनेक मार्ग मेरे द्वारा देखे गये हैं। पूर्व दिशा में उषा का ध्वजा रूपी प्रकाश फैलने लगा है और पूर्व दिशा में उषा ऊँची अट्टालिकाओं पर प्रकाशित हो रही है ॥२॥

हे उषा ! सूर्योदय के पूर्व बहुत काल तक तू प्रकाशित होती रहती है क्योंकि तू सूर्य रूप पति की सेवा करती है परन्तु पुनः यती-स्त्री के समान आचरण नहीं करती है ॥३॥

सत्य के पालनकर्त्ता विद्वान् और मन्त्र-सिद्ध सबके पिता जैसे पालन करते थे, वे देवों के साथ बैठ कर सोमपान करने वाले थे जिन्होंने छिपे हुए सूर्य के प्रकाश को प्राप्त किया है और उषा को प्रकट किया है ॥४॥

एक महान् कार्य करने के लिए वे एकत्रित होते हैं और अपना एक विचार रखते हैं, वे परस्पर कलह नहीं करते, वे देवों के नियमों का उल्लंघन नहीं करते और हिंसा न करते हुए ऐश्वर्य को प्राप्त करते हैं ॥५॥

हे सुभगे ! प्रातःकाल उठकर स्तुति की इच्छा करने वाले वसिष्ठ लोग स्तुतियों से तुम्हारी स्तुति करते है गायों को चलाने वाली और पालना करने वाली हो कर उषा हमारे लिए प्रकाशित हो। हे उत्तम कुल में उत्पन्न होने वाली उषा! सब देवों में तू श्रेष्ठ है॥६॥

यह उषा स्तुति करने वाले के दिव्य वचनों को प्रेरित करती है, यह अन्धकार को दूर करती है और स्तुतिकर्ताओं द्वारा प्रशंसित होती है हमें प्रशंसा के योग्य ऐश्वर्य प्रदान करती है। ऐसी हे उषा ! तुम हमारा सर्वदा कल्याण से रक्षण करो ॥७॥ (७।७६)

युवति स्त्री के समान यह उषा प्रथम प्रकाशित हो रही है। यह समस्त प्राणियों को संचय करने के लिए प्रेरित करती है। यह मनुष्यों को प्रकाशित करती है और अग्नि अंधकार को दूर करने वाली ज्योति को प्रकाशित करता है ॥१॥

यह उषा सम्पूर्ण विश्व के सम्मुख प्रकट हुई है, और यह तेजस्वी स्वच्छ वस्त्र पहन कर बढ़ रही है, यह स्वर्ण के समान देदीप्यमान और दर्शनीय तेज से युक्त है। गौ माता के समान आनन्ददायिनी और दिन का संचालन करने वाली उषा प्रकाशित हो रही है ॥२॥

देवों के तेज को धारण करने वाली सौभाग्यशाली सुन्दर श्वेत किरणों से युक्त सूर्य के घोड़ों को चलाने वाली उषा किरणों के रूप में स्पष्ट दिखाई देती है। यह उषा ऐश्वर्यवती है और सम्पूर्ण विश्व के संम्मुख बढ़ रही है ॥३॥

हमारे समीप धन को लाने वाली हे उषा ! हमारे शत्रुओं को छोड़कर प्रकाशित हो। हमारे लिए विस्तृत भूमि को अभय बनाओ, हमारे शत्रुओं को दूर करो और हमें धन से पूर्ण करो। हे ऐश्वर्यमयि ! स्तुति करने वाले के लिए धन प्रदान करो ॥४॥

हे उषा ! हमारे लिए श्रेष्ठ सूर्य की किरणों के साथ प्रकाशित हो। हमारी आयु वृद्धि करने वाली, सबके द्वारा वरण करने योग्य हे उषा ! हमारे लिए अन्न, गौ, घोड़े और रथ से युक्त धन प्रदान करो। हे द्युलोक की पुत्री, उत्तम कुल में उत्पन्न उषा ! वसिष्ठ लोग अपनी बुद्धि से तुम्हारी स्तुति करते हैं। ऐसी तू हमारे पास विपुल धन को धारण कर और सर्वदा कल्याणकारी साधनों से हमारी रक्षा कर" ॥६॥ (७।७७)

"इस उषा की प्रथम किरणें ध्वजा के समान दिखाई दे रही हैं। इसकी गतिशील किरणें ऊँचे स्थान पर आश्रय ले रही हैं यह उषा हमारी ओर बढ़ते हुए तेजस्वी रथ में बैठ कर मनुष्यों के पास आती है ॥१॥

ज्ञानी लोग स्तुतियों से स्तोत्र गान करते हुए अपने कर्म में प्रवृत्त हो रहे हैं। समृद्ध हुआ अग्नि बढ़ रहा है। यह उषा सम्पूर्ण अन्धकार को अपनी ज्योतिर्मयी किरणों से दूर करती हुई जाती है ॥२॥

ये उषाएँ प्रकाशित होती हुईं और तेज प्रदान करती हुईं हमारे सम्मुख दिखाई दे रही हैं। सूर्य, अग्नि और यज्ञ को उषा ने प्रकट किया है और कष्टकारी अंधकार को दूर किया है ॥३॥

द्युलोक की पुत्री और ऐश्वर्यमयी उषा आती है और सम्पूर्ण विश्व इस प्रकाशमयी उषा को देखते हैं। यह उषा अन्नयुक्त रथ पर चढ़ती है, जिसके श्रेष्ठ घोड़े गन्तव्य स्थान तक ले जाते हैं ॥४॥

हे उषा ! आज हमारे ऐश्वर्यवान् और बुद्धिमान् पुरुष तथा हम सब तेरी स्तुति करते हैं। तू प्रकाशित हो कर विश्व को स्नेह से युक्त कर, तू सदा कल्याण के साधनों से हमारा रक्षण कर ॥५॥ (७।७८)

"वह उषा लोगों को हित करने वाली है, जो विशेष रूप से प्रकट हुई है। यह पांच मानवों को जगाती है, श्रेष्ठ गायों के साथ तेज को धारण करती है और सूर्य भी अपने तेज से द्यावा-पृथिवी को बल देता है ॥१॥

ये उषाएँ अपने तेज को द्युलोक के अन्तिम भाग तक फैलाती हैं। एकत्रित प्रजा की तरह ये उषाएँ अंधकार को नष्ट करने के लिए प्रयत्न करती हैं। हे उषा ! तेरी किरणें अंधकार को नष्ट करती हैं । सूर्य अपनी बाहुरूपी किरणों को जिस तरह फैलाता है उसी तरह उषाएँ अपने तेज को फैलाती हैं ॥२॥

श्रेष्ठ ऐश्वर्यवती उषा प्रकट हुई है। इस उषा ने सबका कल्याण करने के लिए अन्न का निर्माण किया है। द्युलोक की पुत्री उषा ! अग्नि के समान तेज से युक्त होकर सुकर्म करने वाले को धन प्रदान करती है ॥३॥

हे उषा ! तूने जितना धन स्तुतिकर्ताओं को दिया था, उतना ही धन प्रसन्न होते हुए हमें भी प्रदान कर। सब तुझे बैल के शब्द से जानते हैं और सुदृढ़ पर्वत के द्वार को खोल कर तूने गायों को बाहर निकाला है ॥४॥

हे उषा ! तू प्रत्येक देव को धन के लिए प्रेरित करती है, हमारे सम्मुख सत्य वाणी को प्रेरित करती है। तू अंधकार को दूर करती हुई हमें धन देने की बुद्धि धारण कर। तू कल्याणकारी साधनों से हमारा रक्षण कर ॥५॥ (७।७९)

"ज्ञानी वसिष्ठ लोग अपनी प्रथम स्तुतियों और वाणियों से उषा को जगाते हैं। यह उषा द्यावा-पृथिवी को समान रूप से घुमाती हुई सम्पूर्ण भुवनों को प्रकाशित करती है ॥१॥

यह उषा नवीन आयु को धारण करती हुई अपने तेज से अंधकार को दूर करती हुई उदय होती है। लज्जारहित युवति के समान यह आगे चलती है और सूर्य, अग्नि और यज्ञ के सम्मुख प्रकट होती है ॥२॥

घोड़े गायें और वीर पुरुष से युक्त यह उषा कल्याण करने वाली है, यह सर्वदा हमें प्रकाशित करे। यह उषा घी को दुहने वाली चारों ओर से परिपुष्ट हुई है। हे उषा ! तू कल्याण युक्त साधनों से हमारा रक्षण कर" ॥३॥ (७।८०)

"अंधकार को दूर करने वाली द्युलोक की दुहिता उषा आती हुई दिखाई देती है। यह उषा घोर अंधकार को दूर करती है और सबके नेत्रों के लिए प्रकाश फैलाती है ॥१॥

सूर्य अपनी किरणों के साथ प्रकाश को ऊपर फैलाता है और उदय से पूर्व नक्षत्रों को तेजस्वी बनाता है। हे उषा ! तेरे और सूर्य के प्रकाशित होने पर हम अन्न को प्राप्त करेंगे ॥२॥

हे द्युलोक की पुत्री उषा ! हम शीघ्र कर्मों को करने वाले तुझे जगावेंगे। हे ऐश्वर्यशालिनि ! तू प्रशंसा के योग्य धन को वहन करती है और दानदाता के लिए सुख और धन प्रदान करती है ॥३॥

हे उषा ! तू महान् है, अंधकार को दूर करती है और अपने तेज से विश्व को जगाने के लिए प्रकाश फैलाती है। हम रत्नमयी तेरा स्तवन करते है। हम तुझे उसी तरह प्रिय हों जैसे माता को अपने पुत्र प्रिय होता है ॥४॥

हे उषा ! जो अत्यन्त यशस्वी और विचित्र धन है, तू हमें वह धन प्रदान कर। हे द्युलोक की पुत्री उषा ! तेरे पास जो मनुष्यों के लिए भोजन है, वह हमें प्रदान कर, हम वह भोजन करेंगे ॥५॥

हे उषा ! हम वीरों के लिए अमृतमय धन और यश प्रदान कर। हमें गायों से युक्त अन्न प्रदान कर। हे ऐश्वर्यमयी ! सत्यवाणी से युक्त उषा ! तू शत्रुओं का नाश करने वाली है ॥" ६॥ (७।८१)

## १५. प्रस्कण्वः काण्व उषसं स्तौति ।

प्रस्कण्वोपि च काण्वो महर्षिरुषसं परिष्टौति ।
काण्वाः सूर्य्यायतने परोक्षयन्ति स्म सूर्य्यविज्ञानम् ॥ १ ॥
१।४८ "सह वामेन न उषो व्युच्छा दुहितर्दिवः ।
सह द्युम्नेन बृहता विभावरिरापादेवि दास्वती ॥ १ ॥
अश्वावतीर्गोमतीर्विश्व सुविदो भूरि च्यवन्त वस्तवे ।
उदीरय प्रतिमा सूनृता उषश्चोदराधो मघोनाम् ॥ २ ॥
उवासोषा उच्छाच्च नु देवी जीरा रथानाम् ।
ये अस्या आचरणेषु दध्रिरे समुद्रे न श्रवस्यवः ॥ ३ ॥
उषो ये ते प्रयामेषु युञ्जते मनो दानाय सूरयः ।
अत्राह तत्कण्व एषां कण्वतमो नाम गृणाति नृणाम् ॥४ ॥
आ घा योषेव सूनर्युषा याति प्रभुञ्जती ।
जरयन्ती वृजनं पद्वदीयत उत्पातयति पक्षिणः ॥५ ॥
वि या सृजति समनं व्यर्थिनः पदं न वेत्योदती ।
वयो नकिष्टे पप्तिवांस आसते व्युष्टौ वाजिनीवति ॥ ६ ॥
एषा युक्तः परावतः सूर्य्यस्योदयनादधि ।
शतं रथेभिः सुभगोषा इयं वियात्यभिमानुषान् ॥ ७ ॥
विश्वमस्या नानाम चक्षसे जगज्ज्योतिष्कृणोति सूनरी ।
अपद्वेषो मघोनी दुहिता दिव उषा उच्छदपस्त्रिधः ॥८ ॥
उष आ भाहि भानुना चन्द्रेण दुहितर्दिवः ।
आवहन्ती भूर्यस्मभ्यं सौभगं व्युच्छन्ती दिविष्ठषु ॥ ९ ॥
विश्वस्य हि प्राणनं जीवनं त्वे वि यदुच्छसि सूनरी ।
सा नो रथेन बृहता विभावरि श्रुधि चित्रामघे हवम् ॥ १० ॥
उषो वाजं हि वंस्व यश्चित्रो मानुषे जने ।
तेना वह सुकृतो अध्वराँ उप ये त्वा गृणन्ति वह्नयः ॥११ ॥
विश्वान्देवाँ आवह सोमपीतयेऽन्तरिक्षादुषस्त्वम् ।
सास्मासु धा गोमदश्वा वदुक्थ्य मुषो वाजं सुवीर्यम् ॥ १२ ॥
यस्या रुशन्तो अर्चयः प्रति भद्रा अदृक्षत ।
सो नो रयिं विश्ववारं सुपेशसमुषा ददातु सुगम्यम् ॥ १३ ॥

य विद्धि त्वामृषयः पूर्व ऊतये जुहूरेऽवसे महि ।
सा नः स्तोमो अभिगृणीहि राधसोषः शुक्रेण शोचिषा ॥१४॥
उषो यदद्य भानुना विद्वारा वृणवो दिवः ।
प्र नो यच्छ तादवृकं पृथुच्छर्दिः प्रदेवि गोमती रिषः ॥१५॥
सं नो राया बृहती विश्वेश सामिमिक्ष्वा समिलाभिरा।
संद्युम्नेन विश्वतुरोषो महि संवाजै वाजिनीवती" ॥१६॥

(२) "उषो भद्रेभिरागहि दिवश्चिद्रोचनादधि ।
वह त्वरुणप्सव उप त्वां सोमिनो गृहम्" ॥१॥
सुपेशसं सुखं रथं यमध्यस्था उषस्त्वम् ।
तेना सुश्रवसं जनं प्रावाद्य दुहितर्दिवः ॥२॥
वयश्चित्ते पतत्रिणो द्विपज्चचतुष्पदर्जुनि ।
उषः प्रारन्नृतूँ रनुदिवो अन्तेभ्यस्परि ॥३॥
व्युच्छन्ती हि रश्मिभिर्विश्वमाभासि रोचनम् ।
तां त्वां मुषर्वसूयवो गीर्भिः कण्वा अहूषत ॥४॥

## १५. कंण्वपुत्र प्रस्कण्व द्वारा उषा की स्तुति

कण्व-पुत्र महर्षि प्रस्कण्व भी उषा की स्तुति करते हैं। सूर्यभवन में कण्वपुत्र सूर्य से सम्बद्ध विज्ञान की परीक्षा करते हैं ॥१॥

ऋग्वेद के १।४८ में महर्षि प्रस्कण्व द्वारा उषा की स्तुति की गई है—

"हे द्युलोक की पुत्री उषा ! तू हमारे लिए वामान्न के साथ प्रकाशवती बन। हे विभावरि देवी ! महान् तेज के साथ दान देने वाली तू बड़े वैभव से प्रकाशित हो ॥१॥

घोड़ों और गायों से युक्त, समस्त प्रकार के धन को प्राप्त करने वाली उषाएँ प्रजा का हितसाधन करने के लिए अनेक प्रकार से प्रकाशित होती हुई मेरे प्रति सुन्दरवाणी का उच्चारण करें। हे उषा ! हमें धनवानों के योग्य धन प्रदान कर ॥२॥

जिस उषा ने (विश्व) में निवास किया है, वह उषा रथों को चलाने वाली है, वह और भी अधिक प्रकाशित होवे। समुद्र में धन की इच्छा वाले जैसे नौकाएँ चलाते है, वैसे ही यह उषा अपने चलने योग्य रथ को चलाती है ॥३॥

हे उषा ! जो विद्वान् तेरे आगमन-समय के लिये अपना धन-मन लगा देते हैं, उन मनुष्यों में सर्वाधिक विद्वान् कण्व ऋषि यहाँ स्तुति करते हैं ॥४॥

उत्तम गृहिणी स्त्री के समान पालन करती हुई उषा आ रही है। वह उषा सबको शक्तिशाली बनाती हुई अपने पांवों को चलाती है और पक्षियों को उड़ाती है ॥५॥

जो उषा श्रेष्ठ मन वाले लोगों को प्रेरणा देती है। धन की इच्छा करने वालों को प्रेरित करती है। प्रेरणा देने वाली उषा एक स्थान पर पद स्थिर नहीं करती है ॥६॥

यह सूर्योदय पूर्व ही अपने रथों को जोड़ती है। यह सौभाग्यशालिनी उषा मनुष्यों के प्रति सौ रथों से जाती है ॥७॥

सम्पूर्ण विश्व इस उषा को नेत्रों से (देखते ही) नमस्कार करते हैं । वह उषा श्रेष्ठ स्त्री है, यह प्रकाश फैलाती है। यह उषा द्युलोक की पुत्री है, ऐश्वर्यशालिनी है, यह हिंसक शत्रुओ को दूर करती है ॥८॥

द्युलोक की पुत्री उषा! आनन्ददायिनी किरणों से तू प्रकाशित हो। दिन के नित्य कर्मों के लिए अन्धकार को दूर करती है ॥९॥

हे उत्तम नेतृत्व करने वाली उषा ! तू अन्धकार को दूर करती है, तब सम्पूर्ण विश्व का जीवन-प्राण तुझ में ही रहता है। हे विचित्र ऐश्वर्य और धनवाली देवी उषा ! ऐसी तू अपने महान् रथ से हमारी स्तुति सुन ॥१०॥

हे उषा ! मनुष्यों के पास जो विचित्र धन है, उस धन को तू स्वीकार कर। जो अग्नियाँ (स्तुतिकर्ता) तेरी स्तुति गाते हैं, उनसे सन्तुष्ट होकर सुकृत लोगों को यज्ञ के पास ले जा ॥११॥

हे उषा ! तू सोमपान के लिये समस्त देवों को अन्तरिक्ष से ले आ। हे उषा ! तू गायों और घोड़ों से युक्त प्रशंसनीय अन्न-बल को हमारे अन्दर धारण कर ॥१२॥

जिसकी सुन्दर कल्याणकारी किरणें दिखाई दे रही हैं, ऐसी वह उषा हमें सबके द्वारा वरणीय सुन्दर और आनन्ददायी धन प्रदान करे ॥१३॥

हे महान् तेजस्वी उषा ! जो प्राचीन ऋषि तेरी रक्षा और अन्न के लिये प्रार्थना करते थे, वह तू साफल्य, शौर्य और तेज से युक्त होकर हमारी स्तुतियों की प्रशंसा कर ॥१४॥

हे उषा ! तूने जब अपने प्रकाश से द्युलोक के दोनों द्वारों को खोल दिये हैं। हमें रहने के लिए विशाल घर प्रदान कर। हे उषा! हमें गायों से युक्त धन प्रदान कर ॥१५॥

हे उषा ! महान् और प्रशंसनीय धन से समृद्ध कर। हमें गायों से युक्त कर। हे अन्न से युक्त श्रेष्ठ उषा ! हमें शत्रुनाशक तेजस्वी धन और अन्न-धन से सम्पन्न कर॥" १६॥ (१।४८)

"हे उषा ! द्युलोक के देदीप्यमान स्थान से कल्याणकारी मार्गों से आ। लाल रंग के घोड़े तुझे सोमयज्ञ के स्थान पर पहुँचा देवें ॥१॥

हे उषा ! तू जिस शोभनीय सुखदायी रथ पर बैठती है, उस रथ से हे द्युलोक की पुत्री उषा ! आज उत्तम अन्न वाले मनुष्य की भली प्रकार रक्षा कर ॥२॥

हे श्वेतवर्णा उषा ! तुम्हारे चलने के अनुसार दो पांवों वाले (मनुष्य) और चतुष्पत् (पशु) और उड़नेवाली पक्षी भी द्युलोक तक स्वागतार्थ उड़ते हैं ॥३॥

हे उषा ! अन्धकार को दूर करती हुई सम्पूर्ण विश्व को प्रकाशित करती है। ऐसी तुम्हे धनार्थी कण्व बुलाते हैं।" ॥४॥ (१।४९)

## १६. कक्षीवान् दैर्घतमस उषसं स्तौति ।

दीर्घतमा औतथ्यो बृहस्पतेर्भ्रातृपुत्रो यः ।
सूर्य्यायतने पश्यति कर्म भरद्वाजवत् सोपि ॥१॥
१।१२३॥ (१) "पृथूरथो दक्षिणाया अयोज्यैनं देवासो अमृतासो अस्थुः।
कृष्णा दुदस्था दर्या विहायाश्चिकित्सन्ती मानुषाय क्षपाय ॥१॥
पूर्वा विश्वस्माद्भुवनादबोधी जयान्ती वाजं बृहती सनुत्री ।
उच्चाव्यख्यद्युवतिः पुनर्भूरोषा अगन्प्रथमा पूर्वहूतौ ॥२॥
यदद्य भागं विभजासि नृभ्य उषोदेवि मर्त्यत्रा सुजाते ।
देवो नो अत्र सविता दमूना अनागसो वोचति सूर्य्याय॥३॥
गृहङ् गृहमहना यात्यच्छा दिवे दिवे अधि नामा दधाना ।
सिषासन्ती द्योतना शश्वदागादग्रमग्रमिद्भजते वसूनाम् ॥४॥
भगस्य स्वसा वरुणस्य जामिरुषः सुनृते प्रथमा जरस्व ।
पश्वा सदध्यायो अघस्य धाता जयेम तं दक्षिणया रथेन॥५॥
उदीरतां सूनृता उत्पुरन्धीरुदग्नयः शुशुचानासो अस्थुः।
स्पार्हा वसूनि तमसाप गूढाविष्कृण्वन्त्युषसो विभातीः ॥६॥
अपान्यदेत्यभ्यन्यदेति विषुरुपे अहनी सञ्चरेते ।
परीक्षितो स्तमो अन्या गुहाकर द्यौ दुषाः शोशुचता पथेन ॥७॥
सदृशोरद्य सदृशीरिदु श्वो दीर्घं सचन्ते वरुणस्य धाम ।
अनवद्यास्त्रिंशतं योजनान्येकैका क्रतुं परियान्त सद्यः ॥८॥
जानत्यह्नः प्रथमस्य नाम शुक्रा कृष्णा दजनिष्टश्वितीची ।
ऋतस्य योषा न मिनाती धामाहरहर्निष्कृतमाचरन्ती ॥९॥
कन्येव तन्वा शाशदानां एषि देवि देवमियक्षमाणम् ।
संस्मयमाना युवतिः पुरस्तादाविर्वक्षांसि कृणुषे विभाति ॥१०॥
सुसङ्काशा मातृमृष्टेव योषा विस्तन्वं कृणुषे दृशेकम् ।
भद्रा त्वमुषो पितरं व्युच्छनतत्ते अन्या उषसो नशन्त॥११॥
अश्वावतीर्गोमती विश्ववारा यतमाना रश्मिभिः सूर्यस्य ।
परा च यन्ति पुनराच यन्ति भद्रा नाम वहमाना उषासः" ॥१२॥
(१।१२४।३।६।७।८।९)

**"एषा दिवो दुहिता प्रत्यदर्शि ज्योतिर्वसाना समना पुरस्तात् ।**
**ऋतभ्य पन्था मन्वति साधु प्रजानतीव न दिशो मिनाति ॥१॥**
**एवेदेषा पुरुतमा दृक्षे कं ना जामिं न परिवृणक्ति जामिम् ।**
**अरेपसा तन्वा शाशदाना नार्भादीषते न महो विभाती ॥२॥**
**अभ्रातेवः पुंस एति प्रतीची गर्तारुगिव सनये धनानाम् ।**
**जायेव पत्य उशती सुवासा उषा हस्रेव निरिणीते अप्सः ॥३॥**
**स्वसा स्वस्रे ज्यायस्यै योनिमारैगपैत्यस्याः प्रतिचक्ष्येव ।**
**व्युच्छन्ती रश्मिभिः सूर्यस्या ञ्ज्यङ्क्तेसमनगा इव व्राः ॥४॥**
**आसां पूर्वासामहसु स्वसृणामपरापूर्वामभ्येति पश्चात् ।**
**ताः प्रत्नवन्नभ्यसीर्नूनमस्मे रेवदुच्छन्तु सुदिना उषासः"॥५॥**

## १६. कक्षीवान् दीर्घतमा द्वारा उषा की स्तुति

बृहस्पति के भाई के पुत्र औतथ्य दीर्घतमा, जो सूर्यभवन में भरद्वाज के समान सूर्य से सम्बद्ध कर्म को देखते हैं, उषा की स्तुति करते हैं ॥१॥

"उषा, जो दक्षिणा (चतुर) है, इसका रथ योजित हो गया है। इस रथ पर अमर देवगण आसीन हो गए हैं। यह विशिष्ट और श्रेष्ठ उषा मनुष्यों के सूखपूर्वक निवास के लिये प्रयत्नशील होती हुई अन्धकार से ऊपर उठ रही है ॥१॥

यह उषा समस्त प्राणियों के लिए जागती है। यह विशाल दान करने वाली है। यह उषा महान् धन को जीतने वाली है। यह उषा युवति है, जो पुनः पुनः उत्पन्न होने वाली है। प्रथम हवन में प्रथम यह उषा आकर उच्च स्थान से देखने लगी ॥२॥

हे उत्तम कुलीना उषा ! मानव की पालना करने वाली, आज यज्ञ के जिस भाग को तू मनुष्यों को देती है, वहां संसार को दान देने वाला सविता देव हमारा निष्पाप होना सूर्य से बोले ॥३॥

यह उषा प्रतिदिन घर-घर जाती है और अपना नाम धारण करती है। यह उषा प्रातः कालीन हविर्भाग का सेवन करने वाली होती हुई निरन्तर आती है और धनों के अग्र भाग का सेवन करती है ॥४॥

सुन्दर वाणी वाली उषा तू भग और वरुण की बहिन है, ऐसी तू उषा स्तुत्य होवे। तत्पश्चात् पापी शत्रु बंदी बनाया जावे और शत्रु को हम तेरी चतुराई से जीत लेवें ॥५॥

सुन्दर वाणी बोली जावे, विशाल बुद्धियाँ क्रियाशील हों, अग्नियाँ प्रदीप्त होकर प्रज्वलित होवें । देदीप्यमान उषा अंधकार से आवृत प्रशंसनीय धन को प्रकाशित करे ॥६॥

जब विपरीत स्वरूप (अन्धरयुक्त) वाली रात्री और देदीप्यमान उषा प्रतिदिन क्रम से विचरण करती हैं तब (रात्रि का अन्धकार) एक ओर आ जाता है। संचरणशील रात्रि और उषा

में से एक रात्रि तो अंधकार की गुहा सबको आच्छादित कर लेती है और उषा देदीप्यमान रथ से प्रकाशित होती है ॥७॥

आज और कल समान रूप से ये शुद्ध उषाएँ निरन्तर वरुण के दीर्घाकार वाले स्थान की सेवा करती है। ये एक एक उषा सूर्य के आगे-आगे तीस योजन तक निरंतर चलती रहती है ॥८॥

यह उषा दिन के प्रथम भाग (प्रातःकाल) का महत्त्व जानती हुई, शुभ्र और तेजस्वी उषा रात्रि के घोर अंधकार में से प्रकट होती है। यह उषा युवति है तथा सत्य व्रत से कभी विचलित नहीं होती है तथा प्रतिदिन अपने नियत स्थान पर चलती रहती है ।।९॥

हे उषा ! अपनी काया को स्पष्ट (स्वच्छ) रूप से प्रकट करने वाली कन्या के समान इच्छित सुख देने वाले पति के पास जाती है। हंसती हुई युवति स्त्री पति के सम्मुख सौम्य मुद्रा में अपने वक्षःस्थल को स्पष्ट रूप सें दिखाती है ॥१०॥

माता से शुद्ध की हुई (संस्कारित) सुन्दर स्त्री के समान देदीप्यमान तू अपने स्वच्छ शरीर को सबके सामने प्रकट करती है। हे उषा ! तू कल्याण करने वाली है, तू प्रकाश का वितरण कर। तेरे समान अन्य उषाएँ देदीप्यमान नहीं हो सकती हैं ॥११॥

घोड़ों और गायों से युक्त, सबके द्वारा वरण करने योग्य, सूर्य की रश्मियों से प्रकाश फैलाने वाली, कल्याणकारी नाम को धारण करने वाली उषाएँ दूर तक जाती हैं और पुनः लौटती हैं" ॥१२॥ (१।१२३।१-१२)

"यह उषा द्युलोक की पुत्री, देदीप्यमान उज्ज्वल वस्त्र धारण करने वाली, स्वच्छ मन वाली पूर्व दिशा में दिखाई देने लगती है। यह उषा ऋत के मार्ग पर चलने में योग्य है। जिस प्रकार ज्ञानवती स्त्री जाती है उसी प्रकार यह उषा चलती है और दिशाओं में कोई बाधा नहीं पहुँचाती है ॥३॥

विस्तार को प्राप्त होती हुई उषा प्रकाश वितरण करने के लिये परजातीय का त्याग नहीं करती है और स्वजातीय का भी त्याग नहीं करती है। पापरहित शरीर से प्रकाशित होती हुई उषा छोटे अथवा बड़े का त्याग नहीं करती है, अपितु दोनों को प्रकाशित करती है ॥६॥

भ्राता से हीन स्त्री जैसे निराश्रित होकर पिता आदि के पास जाती है, धनों की प्राप्ति के लिये न्यायालय में जाती है, सुन्दर वस्त्र धारण करके स्त्री पति के पास जाती है, वैसे ही उषा हंसती हुई स्त्री के समान अपनी ज्योति को प्रकाशित करती है ॥७॥

जैसे एक छोटी बहिन अपनी बड़ी बहिन के लिये स्थान खाली करती है, वैसे ही (रात्रि) इस उषा को देखते ही दूर हट जाती है। सूर्य की किरणों से अन्धकार को दूर करती हुई यह उषा एक साथ प्रकाश फैलाने वाले विद्युत्समूह के समान प्रकाशित होती है ॥८॥

इन पहले की बहिनों में से दिन में दूसरी और बाद में (पीछे से) पहले वाली जाती है। वे उषाएं प्राचीन भी हैं और नवीन भी हैं, वे निश्चय ही हमारे लिये धन के साथ शुभ दिन प्रकाशित करती रहे॥" ९॥ (१।२४।३-६-७-८)

## १७. अष्टादंष्ट्रो वैरूप इन्द्रं स्तुवन्नुषसं स्तौति।

१—"सचन्त यदुषसः सूर्येण चित्रामस्य केतवो रामविन्दन् ।
आ यन्नक्षत्रं ददृशे दिवो न पुनर्यतो न किरद्धा नु वेद्" ॥१॥
एषां कतिपयमन्त्रा आधिदैवतपक्ष उपनेयाः ।
सर्वे त्वपरे मन्त्रा अधिभूतं समनुगच्छन्ति ॥१॥

## १७. विरूप के पुत्र अष्टादंष्ट्र द्वारा इन्द्र की स्तुति करते हुए उषा की स्तुति

"जब उषाएँ सूर्य के साथ मिलती हैं, तब सूर्य की किरणों ने आश्चर्यकारक अद्‌भुत वर्णों की शोभा प्राप्त की। जब आकाश में नक्षत्र दिखाई नहीं देता है, तब सर्वत्र व्याप्त सूर्य की किरणों को कोई भी नहीं जानता है, यह सत्य है।" ॥१॥

इनमें से कुछ मन्त्र अधिदैवत के पक्ष में लिये जाने चाहिये और अन्य सभी मन्त्र अधिभूतार्थ में समझने चाहिये ॥१॥

## १८. आप्त्योऽधिदैवतमुषसं स्तौति ।८।४७। (१४।१८)

केचिन्मन्त्रा उषसस्त्वधिदैवतमेव पर्याप्ताः ।
आप्त्यस्त्रितो यथोचे संधे सूक्तेऽन्ततोऽष्टमगे ॥१॥
यच्च गोषु दुः ष्वप्न्यं यच्चास्मे दुहितार्दिवः ।
त्रिताय तद्विभावर्याप्त्याय परावहानेहसो व उतयः सुऊतयो व ऊतयः ॥८॥
४७।१५"

"निष्कं वा घा कृण्वते स्रजं वा दुहितर्दिवः ।
त्रिते दुःष्वप्न्यं सर्वमाप्त्ये परिद्मस्यनेहसो व ऊतयः सुऊतयो व ऊतयः ॥८॥
४७।१५"

"तदन्नाय तदयसे तं भागमुपसेदुषे ।
त्रिताय च द्विताय चोषो दुःष्वप्न्यं वहानेहसो व ऊतयः सुऊतयो व ऊतयः" ॥८॥
४७/१६

"यथा कलां यथाशफं यथा ऋणं सन्नमयामसि ।
एवादुःष्वप्न्यं सर्वमाप्त्ये सं नयामय नेहसो व ऊतयः सुऊतयो व ऊतयः" ॥८॥
४७/१८

"अजैष्माद्यासनाम चाभूमानागसो वयम् ।
उषो व यस्मादुःष्वप्न्यादभैष्मायतदुच्छत्वनेहसो व ऊतय सुऊतयो व ऊतयः" ॥
८।४७।१८

## १८. महर्षि आप्त्य द्वारा अधिदैवत उषा की स्तुति

कुछ वेदमन्त्र पूर्ण रूप से अधिदैवत उषा की स्तुति से ही सम्बद्ध हैं जैसा कि त्रित आप्त्य ऋषि ने अष्टम मण्डल के सैंतालीसवें सूक्त में कहा है ॥१॥

"हे द्युलोक की पुत्री ! विभावरि ! गायों में और हममें जो दुष्वप्न हों उन्हें मुझ त्रित आप्त्य से दूर करो। तुम्हारी रक्षाएँ दोषरहित हैं, तुम्हारी सुरक्षाएँ उत्तम सुरक्षा है ॥१४॥

द्युलोक की पुत्री ! आभूषण बनाने वाले सुनार अथवा माला बनाने वाले माली के जो दुःष्वप्न हों तुम उन सभी को मुझ त्रित आप्त्य से दूर भगाती है। तुम्हारी रक्षाएँ पापरहित हैं, तुम्हारी सुरक्षाएँ उत्तम सुरक्षाएँ हैं ॥१५॥

वह अन्न लेने वाला, वह कर्म करने वाला, उस अन्न भाग को स्वीकार करने वाला तुम उस त्रित और द्वित के लिए दुःष्वप्नों को दूर ले जाओ । तुम्हारी रक्षाएँ पापरहित हैं, तुम्हारी सुरक्षाएँ उत्तम सुरक्षाएँ हैं। (जो अन्न पाप से युक्त होता है, उस अन्न का भोग करने वाला अथवा अंश को भी स्वीकार करने वाला सदैव पाप का भागी होता है। अतः उसके पाप नष्ट हों) ॥१६॥

जिस प्रकार ब्याज और ऋण के मूलधन को हम पूर्णरूप से दे देते हैं, उसी तरह तुम मुझ आप्त्य से समस्त दुःष्वप्न दूर ले जाती हो। तुम्हारी रक्षाएँ पापरहित हैं, तुम्हारी सुरक्षाएँ उत्तम सुरक्षाएँ हैं ॥१७॥

आज हमने विजय प्राप्त की है, हमने आज लाभ प्राप्त किया है। आज हम पापरहित हो गये हैं । हे उषा ! हम जिस दुःष्वप्न से भयभीत हैं, वह हमसे दूर हो। तुम्हारी रक्षाएँ पापरहित हैं, तुम्हारी सुरक्षाएं उत्तम सुरक्षाएँ हैं ॥१८॥ (८।४७।१४-१८)

## १९. विज्ञानशालास्थितात् सूर्य्यचक्रद्वयादेकस्य देवेन्द्रेण परीहरणम्।

## १९. विज्ञानशाला-स्थित सूर्यचक्र-द्वय में से एक चक्र का देवेन्द्र के द्वारा हरण

## २०. उषःकारणात् सूर्य्याधिष्ठाने दस्यूनामाक्रमणमिन्द्रकुत्साभ्यां तन्निबर्हणं च ।

**उषा विलज्जा चरतीति शुष्णो बबन्ध तां प्रेम्णि कदाप्यभीक्ष्य।**
**तत्प्रेमपाशानुविकर्षितः सन्नुषः समीपं स उपैत्यभीक्ष्णम् ॥१॥**

सूर्य्यनिवृत्त्या कृष्णो विरतोऽभूत् किन्तु तत्पश्चात्।
सूर्य्यायतने शुष्णो यातायातं व्यधादुषोहेतोः ॥२॥
शुष्णो दस्युः सूर्य्यं बहुधागत्य व्यमर्दयद् धृष्टः ।
अकुतोभयः स सूर्य्यद्वारं पिदधे निजह्नुवे सूर्य्यम् ॥३॥
इन्द्रः शुष्णाक्रमणं सूर्य्यापह्नुतिमुपद्रवातिशयम् ।
बार्हस्पत्यस्य गिरा श्रुत्वा सद्यः समाययौ सूर्य्यम् ॥४॥
दासाक्रमणनिरोधोपायानृषि सदसि चिन्तयंस्तत्र ।
सूर्य्यसदनरक्षार्थं कमपि नृपं मार्गयामास ॥५॥
तत्रावोचदगस्त्यः सौराच्चक्रद्वयादेकम् ।
दिवि नीत्वा परचक्रं स्थापयितुं कुत्सरक्षणे युक्तम् ॥६॥
"वह कुत्समिन्द्र यस्मिञ्चाकन्त्स्यु मन्यू ऋज्रा वातस्याश्वा ।
प्रसूरश्चक्रं बृहतादभीकेऽभिस्पृधो यासिषद् वज्रबाहुः" ॥ (१।१७४।५)
रपक्तविरिद्रार्कं सातौक्षां दासायोपवर्हणीं कः ।
करत् तिस्रो मघवा दानुचित्रानिदुर्योणे कुयवाचं मृधिश्रेत् ॥८॥
मुषाय सूर्य्यं कवे चक्रमीशान ओजसा।
वह शुष्णाय वधं कुत्सं वातस्याश्वैः ॥९॥ (१।१७५।४)
श्रुष्मिन्तमो हि ते मदो द्युम्निन्तम उत क्रतुः।
वृत्रध्ना वरिवोविदा मंसीष्ठा अश्वसातमः ॥१०"॥ (१।१७५।५)
इत्यगस्त्यपरामर्शं युयुत्सुरनुमोदयन् ।
हत्वैकं चक्रमन्यस्य रक्षायै कुत्समाह्वयत् ॥७॥
गत्वोशनसा साकं कुत्सगृहं तं न्ययोजयत् त्रातुम् ।
वातजवाश्वैः सूर्य्यस्थानेऽत्रानाय्य चादिशत् कुत्सम् ॥८॥
गान्धारमद्रभूपान् न्युङ्क्त कांश्चिच्च कुत्ससहकर्तॄन् ।
वार्षागिरान् दर्भानि ध्वसन्ति पुरुषन्ति पूर्वांश्च ॥९॥
इन्द्रस्तत्र तदानीं दासाक्रान्तिं निरोधयितुम् ।
सहदेवैः कुत्सेन च सूर्य्यस्थानादताडयच्छुष्णम् ॥१०॥
स यथाऽयमिन्द्र एतं सह कुत्सेन न्यवर्हयच्छुष्णम् ।
शाक्त्यो हि गौरवीतिः स्मारयतीन्द्राय तत् स्तोतुम् ॥११॥

"उशना यत् सहस्यैरयातं गृहमिन्द्रजूजुवानेभिरश्वैः।
वन्वानो अत्र सरथं ययाथ कुत्सेन देवैरवनोर्हशुष्णम् (५।२९।९)
(गौरवीति शाक्त्य)

षष्टिः षष्टिश्चेत्थं मरुतां सेनासु कल्पिता व्यूहाः ।
त्रिःषष्टिर्मरुतोऽत्राभिक्रमणे प्रस्तुता आसन् ॥१२॥

## २०. उषा के कारण सूर्यसदन में दस्युओं का आक्रमण तथा इन्द्र और कुत्स द्वारा उसका निर्वाह

उषा लज्जारहित होकर विचरण करती हैं, उसको किसी समय शुष्ण दैत्य ने देखकर अपने प्रेम-पाश में बांध लिया। उस दैत्य के प्रेम-पाश में बंधा हुआ आकर्षित होकर वह पुनः पुनः उषा के पास आता था ॥१॥

सूर्य की निवृत्ति से कृष्ण नाम का दस्यु सूर्यसदन में लौट गया परन्तु पश्चात् सूर्यायतन में उषा के कारण शुष्ण नाम के दस्यु ने अनेक बार आकर सूर्यचक्र का मर्दन किया॥२॥

धृष्ट शुष्ण दस्यु ने अनेक बार आकर सूर्यचक्र का मर्दन कर दिया। उसने निर्भय होकर सूर्य को छिपाने के लिये सूर्य-द्वार को ढक दिया ॥३॥

इन्द्र शुष्ण के आक्रमण को, सूर्य की अपह्नुति को तथा अत्यधिक उपद्रव को देखकर बृहस्पति के पुत्र की वाणी को सुनकर शीघ्र ही सूर्यचक्र के पास आया ।।४॥

दासों द्वारा किये गये आक्रमण के निराकरण के उपाय के संबंध में वहां सूर्यसदन में ऋषियों की सभा में विचार-विमर्श हुआ। सूर्यसदन की रक्षा के लिये किसी राजा को नियुक्त किया ॥५॥

तब ऋषि अगस्त्य ने सूर्यचक्र-द्वय में से एक को द्युलोक में ले जाकर कुत्स की रक्षा के लिये दूसरे चक्र की स्थापना करने को उचित समझा ॥६॥

"ऋग्वेद के प्रथम मण्डल में—

"हे इन्द्र ! तू जिस यज्ञ में जाना चाहता है, उसी में सुखाभिलाषी, सीधे चलने वाले, वायु के समान गति वाले घोड़ों को कुत्स के पास ले जा। सूर्य उसी के पास अपना चक्र चलावे और वज्रबाहु इन्द्र शत्रुओं की ओर जावे" ॥५॥

हे इन्द्र ! कवि ने स्तुति करते समय तेरी प्रशंसा की। तूने दासों के लिये पृथिवी को सोने का स्थान बना दिया। मधवा इन्द्र ने तीनों स्थानों को दान से विचित्र बना दिया। दुर्योण के युद्ध में कुयवाच को मार दिया" ॥७॥ (१।१७४।५-७)

"हे कवे ! तूने अपने बल से सूर्य का चक्र छीन लिया। तू सबका स्वामी है। तू वायु के घोड़ों से शुष्ण को मारने के लिये कुत्स के पास अपना वज्र ले जा ॥४॥

हे इन्द्र ! तेरा मद सबके लिए बल प्रदान करने वाला है और तेरा कर्म विपुल अन्न देने वाला है। तू अश्वों का दान देने में प्रसिद्ध है, अतः तू हमें वृत्र को मारने वाले और धन देने वाले शस्त्र प्रदान कर" ॥५॥ (१।१७५।४-५)

इस प्रकार अगस्त्य द्वारा की गई परामर्श का युद्धेच्छुओं ने अनुमोदन किया, जिसके अनुसार एक चक्र का हरण करके चक्र की रक्षा के लिए कुत्स को बुलाया गया ॥७॥

उशनस् ऋषि के साथ कुत्स के घर जाकर सूर्यचक्र की रक्षा के लिए कुत्स को नियुक्त किया गया। पवनगति से चलने वाले अश्वों से सूर्यचक्र को सूर्य-संस्था में लाकर कुत्स को उसकी रक्षा का आदेश दिया ॥८॥

कुत्स के साथ कार्य करने वाले वृषागिर के पुत्रों, दभीति, ध्वसन्ति, पुरुषन्ति इत्यादि सहित गान्धार और मद्र देश के कुछ राजाओं को नियुक्त किया गया ॥९॥

दासों द्वारा किये जाने वाले आक्रमणों का निराकरण करने के लिए देवों और कुत्स के साथ इन्द्र ने शुष्ण दस्यु को सूर्य-स्थान से प्रताड़ित कर दिया ॥१०॥

उस इन्द्र ने जिस तरह से कुत्स के साथ शुष्ण को प्रताड़ित किया, उस प्रसंग को शाक्त्य गौरवीति ऋषि इन्द्र की स्तुति करने के लिये स्मरण करते हैं ॥११॥

"हे इन्द्र ! जब तू और उशना दोनों शत्रुओं को मारने वाले और वेगवान् घोड़ों से घर गये, तब तुम दोनों कुत्स और देवों के साथ एक ही रथ पर गये और तुमने शुष्ण का संहार किया" ॥ (५।२९।९)

इस प्रकार मरुतों की सेना में साठ-साठ मरुद्गणों की व्यूहरचना की गई तथा तरेसठ मरुत् वहाँ अभिक्रमण के लिए तैयार रहते थे ॥१२॥

## २१. सूर्य्यसंस्थासंरक्षणार्थो देवेन्द्रकृतः स्थानिकः प्रबन्धः ।

ये द्वेचक्रे सूर्यस्तत्रैकं दिवि समाधातुम् ।
दस्योः शङ्कित इन्द्रो हत्वाऽन्यत् कुत्सरक्षणे न्यदधात् ॥१॥
प्रथमस्य मथकसूक्ते चतुर्थमन्त्रे तदेतदाम्नातम्।
पञ्चममण्डलधारासूक्तस्य च दशममन्त्रेऽपि ॥२॥
सूर्य्यस्यास्य विधाने नियुक्त आसीत् तदैतशः सुष्विः।
सूनर्य्युषोऽभिधाना पुत्री दिव उषस उपचारे ॥३॥
चक्रं हत्वापीन्द्रः कृपयाऽरक्षत् तमेतशं मर्त्यम् ।
उषसं त्ववधीदुषसः शकटं भंक्त्वा विपाशि निक्षिप्य॥४॥
उषसो दिवः सुतायाः प्रेमवशादेव गतागतं चक्रे ।
शुष्णः सूर्य्यस्थाने दासाक्रमणे निमित्तमेषोषाः ॥५॥

अत एवेन्द्रः क्रुद्धस्तदुषोऽधिकृतं तदेकरविचक्रम् ।
स्वर्गे निनाय शकटं वाजावहमक्षिपद् विपाशायाम् ॥६॥
उषसः संबन्धादिह सर्वविधानं व्यवर्जयत् किन्तु ।
एतशहयानुवाहितचक्रमरक्षत् तदैतशाधिकृतम् ॥७॥
एतच्च वामदेवस्त्रिशे सूक्ते चतुर्थमण्डलगे ॥४।३०॥
उषसो निवर्हणं तद् व्याचष्टे शकटभङ्गं च ॥८॥
"यत्रोत बाधितेभ्यश्चक्रं कुत्साय युध्यते।
मुषाय इन्द्रसूर्य्यम् ॥ (४।३०।४)
यत्रोत मर्त्याय कमरिणा इन्द्र सूर्य्यम् ।
प्रावः शचीभिरेतशम् ॥ (४।३०।६)
एतद्धे दुतवीर्यमिन्द्र चकर्थ पौंस्यम् ।
स्त्रियं यद्दुर्हणा युवं बधीर्दुहितरं दिवः॥ (४।३०।८)
दिवश्चिद् घा दुहितरं महान्महीयमानाम् ।
उषासमिन्द्र संपिणक ॥ (४।३०।९)
अपोषा अनसः सरत्सम्पिष्टादह विभ्युषी ।
नियत्सीं शिश्नथद्वृषा ॥ (४।३०।१०)
एतदस्या अनः शये सुसम्पिष्टं विपाश्या ।
ससारसीं परावतः ॥" (४।३०।११)
सूर्य्यस्य दस्युगणतो रक्षार्थं ये न्ययुज्यन्त।
ते खलु कुत्साधीना राजानः सूर्य्यमासेदुः ॥९॥
अधितिष्ठति तं सूर्य्यम् कुत्सदभीति ध्वसन्ति तुर्वीति ।
सह राजचक्रमेवं वार्षागिर पज्जराज कुलम् ॥१०॥
इत्थं सूर्य्यस्थाने विधाय शान्ति कृतेऽखिले सुस्थे ।
सबृहस्पतिरियमिन्द्रः समरुत्सेनोऽभ्यगात्स्वर्गम् ॥११॥

## २१. सूर्यसंस्था की रक्षा के लिए देवेन्द्र द्वारा किए गए स्थानीय प्रबन्ध

जो दो सूर्यचक्र थे, उनमें से एक को द्युलोक में स्थापित करने के लिए दस्युओं से शंकित होकर इन्द्र ने इस चक्र का हरण करके कुत्स की रक्षा में अन्य स्थान पर स्थापित कर दिया ॥१॥

ऋग्वेद के प्रथमण्डल के मथक सूक्त के चतुर्थ मन्त्र में तथा पंचम मण्डल के धारा सूक्त की दशम ऋचा में भी इसका वर्णन किया गया है ॥२॥

इस सूर्य की व्यवस्था के लिए सुष्वि नाम का राजा एतश नियुक्त किया गया। द्युलोक की पुत्री सूनरी नाम की उषा इसकी परिचर्या में नियुक्त हुई ॥३॥

चक्र का हरण करके इन्द्र ने कृपा करके उस मनुष्य एतश की रक्षा की और उषा को मार डाला और उसकी गाड़ी को तोड़ कर विपाशा में फेंक दिया ॥४॥

द्युलोक की पुत्री उषा के प्रेम के वशीभूत होकर ही शुष्ण ने आवागमन किया था, इसीलिए यह उषा ही सूर्यस्थान में दासों के आक्रमण का कारण थी ॥५॥

अतः इन्द्र ने क्रुद्ध होकर इस उषा द्वारा अधिकृत उस एक सूर्यचक्र को स्वर्ग में ले जाकर उसकी घोड़ो द्वारा वहन की जाने वाली गाड़ी को विपाशा में फेंक दिया ॥६॥

उषा से सम्बद्ध समस्त कार्यों का बहिष्कार कर दिया गया, किन्तु उस एतश मनुष्य द्वारा अधिकृत तथा एतश नाम के घोड़ों द्वारा वहन किये जाने वाले सूर्य-चक्र की इन्द्र ने रक्षा की ॥७॥

उषा का अन्त उसकी गाड़ी के नष्ट होने के सम्बन्ध में वामदेव ऋषि ऋग्वेद के ४।३० में वर्णन करते हैं ॥८॥

"हे इन्द्र ! शत्रु के साथ युद्ध करने वाले कुत्स की रक्षा के लिए जिस युद्ध में तूने सूर्यचक्र का हरण करके रक्षा की ॥४॥

जिस स्थान पर तूने मनुष्यों के सुखदाता सूर्य को प्रेरित किया और एतश को अपनी शक्ति से विशेष रूप से सुरक्षित किया ॥६॥

हे इन्द्र ! तूने जो यह वीरतापूर्वक पुरुषार्थ से युक्त कार्य किया, (उसके अनुसार) तूने तेरा संहार करने की इच्छा रखने वाली द्युलोक की पुत्री उषा को मारा ॥८॥

हे इन्द्र ! तू महान् है। द्युलोक की महिमा से युक्त पुत्री उषा के रथ को तूने नष्ट कर दिया, ऐसा सत्य है ॥९॥

बलशाली इन्द्र ने उषा के रथ को तोड़ डाला, तब भयभीत उषा अपनी टूटी हुई गाड़ी (रथ) से दूर हो गई ॥१०॥

इस उषा का यह टूटा हुआ रथ (गाड़ी) विपाशा नदी के किनारे पर पड़ा है और वहां से यह उषा दूर भाग गई ॥११॥

(उषा का रथ तोड़ने से तात्पर्य है कि जो कन्याएँ मर्यादा का उल्लंघन करती हैं, उनको दण्ड दिया जाता है। इसी भावार्थ से उषा को कन्या बताई गई है और उस पर प्रतिबन्ध रखने वाला सूर्य है, जो उसके स्वैर गमन को प्रतिबन्धित करता है।) ४।३०।६-८-९-१०

दस्युगण से सूर्य की रक्षा करने के लिए जिनको नियुक्त किया गया था, वे राजागण कुत्स के अधीन थे वे सूर्य के पास पहुँच गए॥९॥

कुत्स, दभीति, ध्वसन्ति, तुर्वीति और वृषागिर के पुत्रों सहित पांच राजाओं का समूह उस सूर्य की रक्षा के लिए नियुक्त था ॥१०॥

इस प्रकार उस सूर्यस्थान में शान्ति स्थापित करके समस्त प्रकार की सुव्यवस्था हो जाने पर बृहस्पति तथा देवसेना के साथ वह इन्द्र स्वर्ग को प्रस्थान कर गया ॥११॥

## २२. पृथिव्यां प्रतिष्ठापितसूर्य्यद्वयादेकस्य सूर्य्यस्य दिव्यारोपणम्।

एकं चक्रं कुत्साभिरक्षणे तत्र संस्थाप्य ।
अपरं चक्रं हत्वा तं दिवमारोहयत् सूर्य्यम् ॥१॥
प्रान्यच्चक्रमवृहः सूर्य्यस्य कुत्सायान्यद् वरिवो यावतेऽकः।
अनासो दस्यूं रमृणो वधेन निदुर्य्योण आवृणङ् मृध्रर्वाचः" ॥२॥
(५।२९।१०)

## २२. पृथिवी पर प्रतिष्ठापित सूर्यद्वय में से एक सूर्य का दिव्यारोपण

कुत्स की रक्षा में एक सूर्य को वहां स्थापित करके दूसरे सूर्यचक्र का हरण करके द्युलोक में आरोपित कर दिया गया ॥१॥

"हे इन्द्र ! तूने सूर्य के एक चक्र को पृथक् किया और कुत्स को धन देने के लिए अन्य चक्र का निर्माण किया। हे इन्द्र ! तूने नासिकारहित (चिपटी नाक वाले पहाड़ों में रहने वाले) दस्युओं को शस्त्र से मारा । तूने युद्ध में दुर्वचन बोलने वालों का संहार किया ॥२॥ (५।२९।१०)

## २३. अग्निपुरस्कृतानां देवानां स्वर्गे सहगमनम् ।

तत्सूर्यचक्रं तु मनुष्यलोकाद्दिवि प्रणेतुं विहिते विमर्शे ।
अग्नादयस्तत्र सहोपगन्तुं चक्रुः समारम्भमनेकदेवाः ॥१॥
(११।६५।१) "अग्निरिन्द्रो वरुणो मित्रो अर्यमावायुः पूषा सरस्वती सजोषसः।
आदित्या विष्णुर्मरुतः स्वर्बृहत् सोमो रुद्रो अदितिर्ब्रह्मणस्पतिः॥
इन्द्राग्नी वृत्रहत्येषु सत्पती मिथो हित्वानातन्वा समोकसा ।
अन्तरिक्षं मह्यापप्रुरोजसा सोमोधृतश्रीमहिमानमीरयन्" ॥
दिवस्पतिर्यः पृथिवीपतिर्यः प्रधानतो दासवधोद्यतौ तौ।
सोमोऽन्तरिक्षस्य पतिर्घृतश्रीस्त्रयोन्तरिक्षं विपुलं तदाक्षुः॥२॥
"ब्रह्म गामश्वं जनयन्त ओषधीर्वनस्पतीन् पृथिवीं पर्वताँ अपः ।
सूर्य्यं दिवि रोहयन्तः सुदानवः आर्याव्रता विसृजन्तो अधिक्षमि ॥५॥

स्वर्णरमन्तरिक्षाणि रोचना द्यावाभूमीं पृथिवीं स्कम्भुरोजसा।
पृक्षा इव महयन्तः सुरातयो देवाः स्तवन्ते मनुषाय सूरयः" ॥ ६ ॥
दिव्यन्तरिक्षे भुवि च प्रचक्रुर्ज्योतींषि भूमिं च सुसज्जितां ते।
ये स्वर्णरास्तान् व्यदधुः सुदीप्तान् कृतोत्सवान् राजनिदेशयोगात्॥३॥
विश्वेपि देवा दिवि सम्प्रयातुं प्रतिष्ठमानाहि मनुष्यलोकात्।
नृभ्यो वसूनि व्यतरन् प्रहर्षात् तेभ्यः स्तवन्ते स्म च मानुषेभ्यः॥४॥
दिवोऽधिकारो मरुतां यथासीद् यथान्तरिक्षेऽधिकृतश्च वातः।
यथाप्सु चाब्धौ वरुणस्तथाग्निर्भूम्याः पतिर्दीर्घतमा जगाद ॥५॥
यद्यप्यमरावत्यां देवसभायां सुधर्म्मायाम् ।
धिष्ण्यानधितिष्ठन्ति हि दिक्पाला लोकपालाश्च ॥६॥
सन्ति तथापि ततोऽन्ये चत्वारो लोकपतयोऽमी ।
स्वे स्वे लोके प्रत्यासन्नाः शवसोनपात् संज्ञाः ॥७॥
शवसोनपात् स शास्ता यः स्थानीयः प्रबन्धकर्ता स्यात्।
राजप्रतिनिधिभूतः प्रान्ताध्यक्षः पुराकाले ॥८॥
योऽग्निः स देवोऽधिकृतः पृथिव्यां मनुष्यलोकेऽधिपतिर्नियुक्तः।
वह्निः स देवेभ्य इतः प्रदानं प्रगृह्य दिव्यर्पयति प्रणीय ॥९॥
"त्वमग्ने यज्ञानां होता विश्वेषां हितः।
देवेभिर्मानुषे जने ॥
यो अग्निः सप्त मानुषः श्रितो विश्वेषु सिन्धुषु॥
तमागन्मत्रिपस्त्यं मन्धातुर्दस्युहन्तारमग्निं यज्ञेषु पूर्व्यम्।
नभन्ता मन्यके समे"—
इत्थं ब्रूते काण्वो नाभाकस्त्रिषु समुद्रकूलेषु ॥
भवनानि त्रीण्यग्नेर्मन्त्रकृतः सप्तमानुषान् सभ्यान्॥१०॥
मनुष्यलोकाधिपतित्वहेतोरग्निः प्रधानः स इतः पृथिव्याः॥
चक्रप्रणीतौ दिवि तेन केतुः सूर्य्यप्रणेतृत्वममुष्य वक्ति॥११॥
"अग्ने नक्षत्रमजरमासूर्य्यं रोहयो दिवि॥
दधज्ज्योतिजनेभ्यः"—(१० । १५६ । ४)
तान् प्रस्थितान् दिव्यमरान्मनुष्यास्ते स्वस्तिवाकैर्बहुधाऽभ्यनन्दन्॥
यूयं समं धीभिरितः प्रयान्तः स्वः प्राप्य तत् स्वस्तिगिरो जुषध्वम् ॥१२॥

वैकुण्ठस्तु तदानीमासीदिन्द्रोऽमरावत्याम्।
स्वर्गेऽपराजितायां दिशि तस्यासीदियं नगरी ॥२ ॥
तत्र स गत्वा कुत्सो महेन्द्रभवनं पुरः समासाद्य।
काण्वनिवेदितसूक्तान्यस्मै प्रणयादुपाजह्रे ॥३ ॥
इन्द्रेण पृष्टवृत्तः स्वं तत् कष्टं निवेदयामास ॥
येन स विधिना कुत्सो हतराज्यो दीनतामापत् ॥४ ॥

## (८) तदनन्तर दस्युओं से पीड़ित आर्यों का इन्द्र की शरण में गमन

इस प्रकार विचार करते हुए विह्वल वह कुत्स अत्यन्त विश्वस्त और प्रणयवाक्यों से युक्त होता हुआ अन्यत्र कहीं आश्रयस्थान न देखते हुए अमरावती को इन्द्र के लिए (इन्द्र से प्रार्थना करने के लिए) प्रस्थान कर गया ॥१ ॥

उस समय अमरावती में वैकुण्ठ नाम का इन्द्र था। उस वैकुण्ठ इन्द्र की यह नगरी उत्तर दिशा में स्वर्ण में स्थित थी ॥२ ॥

उस कुत्स ने वहाँ देवेन्द्र के भवन में पहुँचकर, आगे जाकर कण्व द्वारा निवेदित उन सूक्तों का प्रणामपूर्वक इन्द्र को उच्चारण कर दिया ॥३ ॥

इन्द्र के द्वारा पूछे जाने पर कुत्स ने जिस विधि से वह राज्यविहीन होकर इस प्रकार दीनावस्था को प्राप्त हुआ, अपने इस कष्ट को निवेदित कर दिया ॥४ ॥

## (९) इन्द्राय कुत्सप्रमुखानां स्वदुःखाश्रावणम्।

कौत्से राष्ट्रे दस्युभिः सिन्धुपश्चात्प्रन्ते नानोपद्रवा अक्रियन्त।
क्षेत्राणां चाप्स्रोतसां चावरोधास्तार्णात्रादिस्तूपदुर्निग्रहाश्च ॥१ ॥
सिन्धुश्लिष्टा या सरस्वत्यमुष्याः कूलस्थाया पूः सरस्वत्यपूर्वा।
तस्यां यासीद् सूर्यसंस्था वशिष्ठाधीना तां च प्रोद्धताम्ते न्यगृह्णन् ॥२ ॥
सोहं कुत्सोऽन्ये च राजान आर्या एवं भूयो दस्युभिः पीड्यमानाः ॥
स्वत्राणार्थं स्वर्गराजं भवन्तं प्राप्ता नत्वाऽभ्यर्थयामः शरण्यम् ॥३ ॥
कुरुते च घोषणामिह मानुष्येषा प्रजा परितः ॥
अवधीत् पुरा पणीन् यो मानस्थानं प्रभुः स इन्द्रो नः ॥४ ॥
"यत्पाञ्जन्यया विशेन्द्रे घोषा असृक्षत।
अस्तृणाद् बर्हणा विपो उर्यो मानस्य सक्षयः ॥" (८ ।६३ ।७)

## (९) कुत्सादि का इन्द्र को अपना दुःख निवेदन करना

सिन्धु के पश्चिमी प्रान्त में कुत्स के राष्ट्र में दस्युओं द्वारा अनेक उपद्रव किए गए।

खेतों और जल के स्रोतों को अवरुद्ध कर दिया गया । तृण (चारा) और अन्न के स्तूपों का निग्रह कर लिया गया ॥१ ॥

सिन्धु नदी के निकट जो सरस्वती नदी है, उसके तट पर अपूर्व सरस्वती नाम की नगरी थी, उसमें वसिष्ठ मुनि के अधीन जो सूर्यसंस्था थी, उसको उन उद्धतों ने अपने अधिकार में कर लिया ॥२ ॥

ऐसा वह मैं कुत्स हूँ। अन्य आर्य राजा भी इस प्रकार बार-बार दस्युओं से पीड़ित होते हुए, अपनी रक्षा के लिए आप स्वर्गाधिपति इन्द्र की शरण में आकर, नमस्कार करके प्रार्थना करते हैं ॥३ ॥

यह मानुषी प्रजा चारों ओर से घोषणा करती है, कि प्राचीन काल में जिसने पणियों का वध किया था, वह मानस स्थान (हमारा रक्षक) इन्द्र ही हमारा अधिपति है ॥४ ॥

"जब पंचजन (चार वर्ण और निषाद) प्रजा के द्वारा इन्द्र के लिए स्तुतियाँ की जाती हैं, तब वह इन्द्र अपनी सामर्थ्य से समस्त शत्रुओं को मारता है। सबका स्वामी ज्ञानवान् वह इन्द्र सबके द्वारा सत्कृत हो ॥" (८/६३/७)

## (१०) देवेन्द्रस्य दस्युनिग्रहणार्थं भारतवर्षे सपरिकरमागमनम्।

### १- दस्युनिग्रहार्थमिन्द्रस्याभिक्रमणम्।

इत्थं कुत्साभ्यर्थनातो दयार्द्रः प्रौढो रक्षां संप्रतिश्रुत्य तेषाम्।
कुत्सं सख्येनाभ्युपेत्य प्रतस्थे मारुत्येन्द्रः सेनयाऽभिक्रमार्थी ॥१ ॥
आश्रितदीनजनार्थं स्वार्थमयैवाभिन्यते यो हि।
स सखा सख्यं त्वाहुः पक्षग्रहणं सहायकत्वेन ॥२ ॥
कुत्समुखेन श्रुत्वा दस्यूनामुग्रतामयं घोराम्।
तन्निग्रहाय बुद्धिं चक्रे जनताभिरक्षार्थम् ॥३ ॥
सद्यः स हि प्रतस्थे सह कुत्सेनाश्वमारुह्य।
दस्युकुलं प्रतिकर्तुं यानायादिश्य मारुतीं सेनाम् ॥४ ॥
इन्द्रस्य निषधिगिरौ समुपनिवेशः।
वेगेनाविश्रान्तैरहर्निशं धावमानैस्तौ।
इन्द्राकुत्सावश्वैस्त्र्यहेण हिमगिरिमुपाययतुः ॥१ ॥
कुत्सस्तस्येन्द्रस्य हि निषधिगिरौ विश्रमस्थानम्।
प्रागेव कल्पयित्वा तमुपेतं त्र सादयन्नाह ॥२ ॥
"योनिष्ट इन्द्र निषदे अकारि तमा निषीद स्वानोर्नावा।
विमुच्यावयोऽवसायाश्वान् दोषाविस्तोर्वहीयसः प्रपित्वे ॥"(१ ।१०४ ।१)
दोषावस्तोरश्वान् वहीयसो यदवदत् स कुत्स इह।
तेन ज्ञायत इन्द्रस्यागमने मार्गे विश्रमो नासीत् ॥३ ॥

# (१०) देवेन्द्र का दस्युओं के निग्रह के लिए भारतवर्ष में अपने परिकर (सेना) सहित आगमन

## १—दस्युनिग्रह के लिए इन्द्र का अभिक्रमण

इस प्रकार कुत्स की प्रार्थना से द्रवीभूत उस प्रौढ़ इन्द्र ने उन आर्यों की रक्षा की प्रतिज्ञा को सुनकर कुत्स को अपना मित्र समझकर देवसेना के साथ अभिक्रमण करने की इच्छा से प्रस्थान किया ॥१ ॥

आश्रित दीन जनों के अर्थ को अपने अर्थ के रूप में जो मानता है, वही मित्र होता है तथा सहायक रूप में पक्ष•ग्रहण करना ही सख्य भाव है ॥२ ॥

कुत्स के मुख से दस्युओं के उग्र और बर्बरतापूर्ण संग्राम को सुनकर उनका दमन करने के लिए जनता की रक्षा करने के लिए इन्द्र ने अपनी बुद्धि लगाई (क्रोधित हुआ) ॥३ ॥

तत्काल वह इन्द्र घोड़े पर सवार होकर प्रस्थान कर गया और दस्युकुल का प्रतिकार करने के लिए मारुति सेना (देव सेना) को प्रयाण के लिए आदेश देकर प्रस्थान किया ॥४ ॥

## २—इन्द्रस्य निषधपर्वते स्कन्धावारम्

**गान्धारेऽस्मिन्देशे श्वेतगिरिप्रान्तमागत्य।**
**निपधे स्कन्धावारं कृत्वेन्द्रो व्यश्रमयत् तत्र ॥५ ॥**
**इन्द्रो न्यषीददस्मिन्निषदनतो निषद् इत्यभूत्प्रथितः ।**
**निषदेति वैदिकाख्या तदपभ्रंशात्तु 'निषध' संज्ञाऽभूत् ॥६ ॥**

## (२) इन्द्र का निषधपर्वत पर उपनिवेश (स्कन्धावार)

विश्रामरहित (निरन्तर), वेगपूर्वक, दिन-रात दौड़ते हुए कुत्स और इन्द्र दोनों अपने घोड़ों से तीन दिन में हिमालय पर्वत पर पहुंच गए ॥५ ॥

कुत्स इन्द्र के लिए निषध पर्वत पर विश्राम का स्थान पहले से ही निश्चित करके उस इन्द्र को वहाँ ले गया और वहाँ स्थित करके बोला ॥६ ॥

"हे इन्द्र ! इस (योनि) स्थान को तेरे बैठने के लिए बनाया है, इसलिए इस स्थल पर पहुँच कर रात-दिन दौड़ने वाले घोड़ों को खोलकर तथा उनको बन्धनमुक्त करके उस स्थान पर हिनहिनाते घोड़े के समान आकर बैठे ॥" (१/०४/१) ॥

निरन्तर दिन-रात दौड़ने वाले घोड़ों के लिए उस कुत्स ने जो कहा (कि यहाँ इन्हें विश्राम कराओ) इससे ज्ञात होता है कि इन्द्र के आगमन के मार्ग में कोई मार्गविश्राम नहीं था ॥७ ॥

इस गान्धार देश में श्वेतगिरि के पर्वत प्रान्त में आकर निषध में इन्द्र ने अपना स्कन्धावार (सेना का पड़ाव) करके विश्राम किया ॥८ ॥

इन्द्र ने यहाँ विश्राम किया, इस निषद अर्थात् आकर बैठने (पड़ाव) के कारण ही यह प्रान्त निषद नाम से प्रसिद्ध हुआ॥ निषद एक वैदिक नाम है और इसके अपभ्रंश से ही इसका नाम निषध पड़ गया॥९॥

## ३— निषधपर्वताभिज्ञानम्।

अद्यत्वे यो देशः पामीरः कथ्यते स पुरा।
मेरूः कदाचिदासीत्तेन प्राग् मेरुरुक्तः सः॥१॥
काश्मीरादुत्तरतोऽष्टत्रिंशे तूत्तराक्षांशे।
सार्धात्सप्तत्यंशाद् 'ग्रिनविच' देशान्तरात् पूर्वात्॥२॥
तन्मध्यादिषु वेदव्यासार्द्धं मण्डलं यत् स्यात्।
द्वीपानामन्तःस्थं जम्बूद्वीपं तमाह सप्तानाम्॥३॥
दक्षिणातः प्राग् मेरोर्या प्रथते पर्वतश्रेणी।
पूर्वापरायताद्रिस्तस्या भागास्त्रयो भाव्याः॥४॥
भारतवर्षादुत्तरदिशि यः पूर्वापरो महाशैलः।
पूर्वाब्धेराक्रोश्चात्सिन्धुनदान्तो हिमालयः सोऽस्ति॥५॥
'अफगानस्थानस्य' प्रत्यक् सीमान्तविस्तृतो योऽद्रिः।
स हि हेमकूट उक्तस्तत्पश्चान्निषध आयवनात्॥६॥
अपि चाष्टोत्तरशतकाद् 'ग्रिनविच' पूर्वांशतः समारभ्य।
आषट् सप्तत्यंशं योऽद्रिः स हिमालयो नाम॥७॥
तस्मादुत्तरतो यो विंशशतांशात्तु पूर्वतः प्रभृति।
द्वापञ्चाशं यावद् विततोऽसौ हेमकूटोस्ति॥८॥
तस्मादुदक् तु सप्तत्यंशात् त्रिंशांशकं यावत्।
नानापर्वतनिचितः कुलपर्वत एष निषधोऽस्ति॥९॥
अपि च 'स्याम' समुद्रात् पारस्याख्यातगः स हेमाद्रिः।
'चीन' समुद्रा'ल्लोहित'सिन्ध्वन्तो हेमकूटोऽस्ति॥१०॥
सिन्धुनदादिनिषधः प्रथते भूमध्यसागरं यावत्।
इत्थं पर्वतमाला त्रिविधा प्राग्मेरुदक्षिणे ख्याता॥११॥
एते कुलाचलाः स्युस्त्रयोऽपि ताः श्रेणयस्तिस्त्रः।
एकैकस्यां श्रेण्यां शाखापादाद्रयोऽसंख्याः॥१२॥
गान्धारोत्तरसीम्नि प्रथते या हेमकूटाद्रेः।
कृष्णगिरिः शाखाद्रिर्भवति चतुस्त्रिंशकेऽक्षांशे॥१३॥
तत उत्तरतोऽर्द्धांशे 'श्वेतगिरि'स्तस्य शाखाद्रिः।

स च पेशावरगजनीमध्यस्था 'च्छ्वेतगिरि'तोऽन्यः ॥१४ ॥
श्वेतोदरः स नाम्ना गजनी यस्यान्तिके नगरी।
कृष्णगिरेरुत्तरतः श्वेतगिरिः पाण्डुरो नाम्ना ॥१५ ॥
तस्माच्छ्वेतगिरेरपि र्योंशेनैकेन तूत्तरस्थोऽद्रिः।
मधुपर्वतः स उक्तः स च निषधस्यास्ति शाखाद्रिः ॥१६ ॥
सार्धे पञ्चत्रिंशेऽक्षांशे मुरुघावनद्यान्यम्।
युक्तो मधुस्त्रिषष्टिप्राये देशान्तरे पूर्व्ये ॥१७ ॥
'योवकडिया' प्रदेशान्नैर्ऋत्येऽवस्थितो यो वा।
याम्येऽस्ति 'मार्गियाना' प्रदेशतः पर्वतः समधुः ॥१८ ॥
अपि पश्चिमोत्तरेऽस्मादस्ति 'गुलिस्तान' पर्वतो विततः।
भारतवर्षीयार्या यं 'पुष्पक'पर्वतं ब्रुवते ॥१९ ॥
एषोऽस्ति 'मार्गियाना' प्रदेशतः पश्चिमे न्यस्तः।
पूर्वोस्ति कश्यपाब्धेः पुष्पकगिरिरुत्तरः 'खुरासानात्' ॥२० ॥
षट्त्रिंशादक्षांशादंशत्रयमस्ति पश्चिमोत्तरतः।
पुष्पकगिरिस्ततोऽन्यो दक्षिणतः पर्वतः कपिलः ॥२१ ॥
षट्त्रिंशादक्षांशात् सप्तत्रिंशांशकं यावत्।
आरभ्य सप्तपञ्चाशांशाद्देशान्तरोनषष्ट्यन्ते (५७-५९) ॥२२ ॥
कपिलोऽपि पर्वतोऽसावैशान्यां 'पार्थिया' प्रान्तात्।
पुष्पकगिरितो याम्ये सौम्ये देशात् खुरासानात् ॥२३ ॥
मधुपुष्पककपिलेषु त्रिषु शाखा गिरिषु निषधस्य।
ऐन्द्रः स्कन्धावारः कृत्स्नेनासीद् विनिर्दिष्टः ॥२४ ॥
मधुपर्वते तु शिविरो देवेन्द्रस्याथ 'मारुती' सेना।
पुष्पकगिरौ सहायकसेनानिहिता तु कपिलाद्रौ ॥२५ ॥

## ३—निषध पर्वत की पहचान

आज जो देश पामीर कहा जाता है, वह किसी समय मेरु पर्वत था। इसी से वह प्राग्मेरु कहा गया है ॥१।

काश्मीर से उत्तर की ओर ३८ डिग्री उत्तर अक्षांश पर तथा ग्रीन वीच से ७१ १/२ डिग्री पूर्वी देशान्तर पर (यह निषध पर्वत स्थित) है ॥२ ॥

उनके मध्य में जो ४५ व्यासार्ध मण्डल बनता है, उस स्थल को सात द्वीपों में से जम्बूद्वीप कहते हैं ॥३ ॥

प्राग्मेरु से दक्षिण में जो पर्वतश्रेणी फैली हुई हैं, उसके पूर्व से पश्चिम तक जो पर्वत है, उसके तीन भाग समझने चाहिये ॥४॥

भारतवर्ष से उत्तर दिशा में जो पूर्व और पश्चिम तक विशाल पर्वत है, वह पूर्व समुद्र से क्रोंच पर्वत तक सिन्धु नदी पर्यन्त हिमालय पर्वत है ॥५॥

अफगानिस्थान की पश्चिमी सीमा तक जो विशाल पर्वत फैला हुआ है, वही हेमकूट पर्वत यवन देश पर्यन्त पश्चिम की ओर निषध पर्वत कहा गया है ॥६॥

ग्रीनवीच के एक सौ आठ पूर्वी देशान्तर पर्यन्त तथा छियत्तर अंश तक जो पर्वत है, वह हिमालय पर्वत है ॥७॥

उसके उत्तर में १२० डिग्री अक्षांश पूर्व से प्रारम्भ करके ५२ डिग्री अक्षांश तक विस्तृत यह हेमकूट पर्वत है ॥८॥

उस हेमकूट के उत्तर में ७० डिग्री अक्षांश से ३० डिग्री अक्षांश तक अनेक पर्वतों से बना यह निषध पर्वत एक कुल-पर्वत (पर्वतों का समूह) है ॥९॥

और भी स्याम समुद्र से पारस नाम के स्थान तक वह हिमालय पर्वत है। इसी प्रकार चीन सागर से लाल सागर पर्यन्त हेमकूट पर्वत है ॥१०॥

सिन्धु नदी से लेकर भूमध्य सागर पर्यन्त निषध पर्वत है। इस प्रकार प्राग्मेरु से दक्षिण में तीन प्रकार की पर्वतमाला है ॥११॥

ये तीनों पर्वतमालाएँ ही कुलाचल (पर्वतों का समूह) है, जिन तीनों की ही तीन तीन पर्वत श्रेणियाँ हैं और एक एक श्रेणी में असंख्य शाखा पर्वत है ॥१२॥

गान्धार देश की उत्तर सीमा पर हेमकूट पर्वत से २४ डिग्री अक्षांश पर जो पर्वत व्याप्त है, वह कृष्णगिरि नाम का शाखा पर्वत है ॥१३॥

उस कृष्णगिरि के उत्तर में अर्ध अंश पर इसी कृष्णगिरि का शाखा पर्वत "श्वेतगिरि" नाम का पर्वत है। यह श्वेतगिरि पेशावर और गजनी देश के मध्य स्थिति श्वेतगिरि से भिन्न है ॥१४॥

जिस पर्वत के समीप गजनी नाम की नगरी है, वह पर्वत श्वेतोदर नाम से कहा गया है। कृष्णगिरि के उत्तर में जो श्वेतगिरि है, वह पाण्डुर नाम का पर्वत है ॥१५॥

उस श्वेतगिरि से एक अक्षांश उत्तर में स्थिति जो पर्वत है, वह मधु पर्वत कहा गया है, वह निषध पर्वत का शाखा पर्वत है ॥१६॥

३५ १/२ डिग्री अक्षांश पर मरूघाव नदी से युक्त मधु पर्वत है, जो प्रायः ६३ डिग्री अंश पूर्वी देशान्तर पर "योवकुडिया" प्रदेश के नैर्ऋत्य कोण में स्थित है तथा दक्षिण में मार्गियाना प्रदेश में स्थित पर्वत है, वह समधु पर्वत है ॥१७-१८॥

इससे भी पश्चिमोत्तर में "गुलिस्तान" नाम का पर्वत फैला हुआ है, उसे भारतीय आर्य "पुष्पक" पर्वत कहते हैं ॥१९॥

यह पुष्पक गिरि मार्गियाना प्रदेश से पश्चिम में कश्यप समुद्र (कैश्पियन सी) से पूर्व में खुरासान से उत्तर में स्थित है ॥२० ॥

३६ डिग्री अक्षांश से तीन अक्षांश पश्चिमोत्तर में जो पुष्पक गिरि है, वह दूसरा पुष्पक गिरि है। उससे दक्षिण में कपिल नाम का पर्वत है ॥२१ ॥

३६ डिग्री अक्षांश से ३७ डिग्री अक्षांश पर्यन्त ५७ डिग्री अक्षांश ५९ डिग्री अशं देशान्तर पर पार्थिया प्रान्त से ईशान कोण में, पुष्पक गिरि के दक्षिण में और खुरासान से उत्तर में कपिल नाम का पर्वत है ॥२२-२३ ॥

निषध के इन मधु, पुष्पक और कपिल नाम के तीनों शाखा पर्वतों में कुत्स द्वारा ऐन्द्र स्कन्धावार का निर्देश किया गया है ॥२४ ॥

मधु पर्वत पर देवेन्द्र का शिविर था तथा मारुति सेना पुष्पकगिरि पर और कपिल गिरि पर सहायक सेना रखी गई ॥२५ ॥

## ४— निषिधगिरौ विश्रान्तायेन्द्राय कुत्सस्तत्कालेतिकर्तव्यतामनुमन्त्रयामास।

**इन्द्रागमनं श्रुत्वा भूयस्युपसर्पतीह जनतेयम्।**
**निज निकार्य्यपथान् प्रतिगमयैतां कार्य्यसंसिद्ध्यै ॥१ ॥**
**देवाश्च दासजनता क्रोधं प्रतिकृत्यनः प्राग्वत्।**
**संपादयन्तु वर्णं कुत्सः प्रोचे तदित्थमिन्द्राय ॥२ ॥**
**"ओत्येनर इन्द्रमूतये गुर्नूचित्तान्त्सद्यो अध्वनो जगम्यात्।**
**देवासो मन्युं दासस्य श्चम्नन्ते न आचक्षन्त्सुविताय वर्णन् ॥"(१ ।१०४ ।२)**

## ४—निषध पर्वत पर विश्राम करते हुए इन्द्र के लिए कुत्स की तात्कालिक कर्तव्यता हेतु मन्त्रणा

इन्द्र के आगमन को सुनकर बहुत सी जनता यहाँ आई। उस जनता को अपने अपने कार्य पथों पर कार्य की सिद्धि के लिए भेज दिया गया ॥१ ॥ देवगण दास जनता के क्रोध का प्रतिकार करके पूर्ववत् वर्ण का सम्पादन करे, ऐसा कुत्स ने इन्द्र के लिए कहा ॥२ ॥

"वे मनुष्य संरक्षण के लिए इन्द्र के पास आये। इन्द्र ने उन्हें शीघ्र ही उसी समय उत्तम मार्गों पर चलाया, देवगण असुर के क्रोध को नष्ट करें तथा वे देव यज्ञ के लिए वरणीय इन्द्र को हमारे पास ले आवें ॥" ॥१/१०४/२ ॥

## (५) स्वागतीयसभां प्रस्तुत्य नाभाककृता इन्द्राग्न्योः स्वागतप्रशस्तयः।

**अथ नाभाकः काण्वो निषधगिराविन्द्रमेतमुपगम्य।**
**युतमग्निना मनुष्येश्वरेण तत्स्वागतं चक्रे ॥१ ॥**
**अपि शुष्णपीडितोऽयं शुष्णं प्रति वर्द्धितं निजक्रोधम्।**

आवेदयन् सहैव च तद्वधमुद्वेगतोऽर्थयामास ॥२ ॥

८ ।४० "इन्द्राग्नी युवं सुनः सहन्ता दासयो रयिम्।
येन दृळहा समत्वा वीलु चित्साहिषीमह्यग्निर्वनेववात इन्नभन्नामन्यके समे ॥१ ॥
नहि वां वव्रयामहेऽथेन्द्रमिद्यजामहे। शविष्ठं नृणां नरम्।
सनः कदाचिदर्वता गमदावाजसातये। गमदा मेधसातये। नभन्ता मन्यके समे ॥२ ॥
ताहि मध्यं भराणामिन्द्राग्नी अधिक्षितः।
ता उ कवित्वना कवीपृच्छ्यमाना सखीयते ।संधीतमश्नुतं नराः। नभन्ता मन्यके समे॥
अभ्यर्च नाभाकवदिन्द्राग्नी यजसागिरा।
ययोर्विश्वमिदं जगदियं द्यौः पृथिवीमह्युपस्थे विभृतोवसु। नभन्ता मन्यके समे ॥७ ॥

५—प्रब्रह्माणि नाभाकवदिन्द्राग्निभ्यामिरज्यत।

या सप्तबुध्नमर्णवं जिह्मवारमपोर्णुत। इन्द्र ईशान ओजसा। नभन्ता मन्यके समे॥
स्वागतमिन्द्राग्निभ्यामित्थं कृत्वा स नाभाकः।
शुष्णवधाय विशेषादिन्द्रं प्रोवाच तत्प्रवक्ष्यामि ॥८ ॥

## स्वागतीय सभा को प्रस्तुत करके नाभाक द्वारा इन्द्र और अग्नि के स्वागत की प्रशस्ति

तदनन्तर नाभाक कण्व ने निषध पर्वत पर इन्द्र के पास आकर मनुष्येश्वर अग्नि के साथ इन्द्र का स्वागत किया ॥१ ॥

शुष्ण से पीड़ित इस नाभाक काण्व ने शुष्ण के प्रति बढ़ते हुए अपने क्रोध को निवेदित किया साथ ही उस शुष्ण के वध के लिए भी उद्वेगपूर्वक प्रार्थना की ॥२ ॥

ऋग्वेद के अष्टम मण्डल के चालीसवें अध्याय में इन्द्र के इस स्वागत का वर्णन मिलता है — ऋषि नाभाक — काण्व स्तुति करते हैं — " हे शत्रु संहर्ता इन्द्र और अग्नि तुम दोनों हमें उत्तम धन दो, जिससे हम युद्धों में विशाल सेना को भी उसी प्रकार नष्ट कर दें, जिस प्रकार वायु और अग्नि मिलकर वनों को नष्ट कर देते हैं। हमारे अन्य शत्रु भी इसी तरह नष्ट हो जावें ॥१ ॥

हे इन्द्र और अग्नि ! हम तुम दोनों का अपमान नहीं करते हैं, अपितु मंनुष्यों में श्रेष्ठ. मनुष्य, श्रेष्ठ बलशाली इन्द्र का यजन करते हैं। वह इन्द्र अन्न के लिए तथा यज्ञ के लिए घोड़ों से हमारे पास कब आएगा? जिससे हमारे अन्य शत्रु स्वयमेव नष्ट हो जावें ॥२ ॥

वे इन्द्र और अग्नि युद्ध के मध्य में निवास करते हैं। हे नेताओं ! अपने ज्ञान से ज्ञानी बने हुए, सबके द्वारा पूछे जाने वाले तुम दोनों अपने उपासक, तुमसे मित्रता चाहने वाले के हितार्थ उसके कर्म को स्वीकार करो तथा हमारे अन्य सभी शत्रु नष्ट हो जावें ॥३ ॥

हे मनुष्य ! तू भी नभाक ऋषि के समान इन्द्र और अग्नि की स्तुति कर, जिन दोनों में यह सारा विश्व समाया हुआ है, यह द्युलोक और पृथिवी लोक समाया हुआ है। जो इन्द्र और अग्नि अपने पास धन को धारण करते हैं, (उनके आश्रम से) अन्य शत्रु स्वयमेव नष्ट हो जाएंगे ॥४ ॥

मनुष्य इन्द्र और अग्नि के लिए नाभाक ऋषि के समान स्तुति करता है (प्रेरित करता है) इन दोनों देवों ने सात पर्त के ढके हुए द्वार वाले सागर (मेघ) को खोला। इन्द्र अपने ओज और तेज की सहायता से शासन करता है। अतः अन्य शत्रु स्वयमेव नष्ट हो जाएंगे ॥५ ॥ (८/४०/१-५)

इस प्रकार इन्द्र और अग्नि का स्वागत करके उस नाभाक ऋषि ने इन्द्र को विशेष रूप से शुष्ण का वध करने के लिए जो कहा, वह मैं कहूँगा ॥८ ॥

## इन्द्रस्यातिथ्यपरिचर्य्या।

इन्द्रः स्वाराणिनषधे तिष्ठटन्नासीत्सा कुत्सस्य।
अतिथिस्तेन सकुत्सः पर्य्यचरत् तं हि सर्वतोभावैः ॥१ ॥
देवानामविशेषात् प्राशनसमयास्त्रयो दिवा नियताः।
प्रातः सवनं माध्यन्दिनसवनं वा तृतीयसवनं वा ॥२ ॥
कुत्सो विश्वामित्रं न्ययोजयत् तस्य भोजनाद्यर्थे।
प्रातःसवने मध्यन्दिनसवनेऽथो तृतीयसवने च ॥३ ॥
ऋभुरथ विभ्वावाजः पूषा वैतस्य देवराजस्य।
सहभोजने नियुक्ताः पर्वतहर्य्यश्वपूर्वकाश्चान्ये ॥४ ॥
पूषा पशुशालानामध्यक्षः किन्तु सोऽस्ति हर्य्यश्वः।
देवेन्द्रः प्रियवाहनहर्य्यश्वान् यो विशेषतोऽधीष्टे ॥५ ॥
इन्द्राय यत्र धानास्तृतीयसवने प्रदीयन्ते।
तत्रर्भवे च वाजायेन्द्रहरिभ्यां च दीयन्ते ॥६ ॥
इन्द्रस्य पानभोजनसमये तत्र च मरुद्गणः सर्वः।
पिबति च सोममपूपं भुङ्क्ते चानुग्रहादैन्द्रात् ॥७ ॥
भोजनसामग्र्या ये धर्त्तारस्ते जनाः प्रयस्वन्तः।

सोमादिपानदाने परिचरितारस्तु जरितारः ॥८॥
सर्वेषां सोऽध्यक्षो विश्वामित्रो महर्षिरिन्द्रं तम्।
आमन्त्र्य सूक्तवाकैर्मधुवाकैश्चोपचरति स्म ॥९॥

## ६— इन्द्र की आतिथ्य परिचर्या

निषध में स्वराट् इन्द्र कुत्स के आतिथ्य में ठहरा हुआ था और कुत्स ने इन्द्र की सम्पूर्ण भाव से (पूर्णरूपेण) परिचर्या की ॥१॥

देवों के अवशेष रूप से भोजन के लिए दिन में तीन समय निश्चित किये गये हैं। वे हैं — प्रातःसवन, माध्यन्दिन सवन और सायंसवन ॥२॥

कुत्स ने भोजन के लिए तीनों सवनों में (प्रातः, माध्यन्दिन और सायं) ऋषि विश्वामित्र को नियुक्त किया ॥३॥

वैतस देवराज के साथ भोजन करने में ऋभु, विभ्वा, वाज और पूषा नियुक्त किये गये। इसके अतिरिक्त पर्वत, हर्यश्व आदि भी नियुक्त किये गये ॥४॥

सामान्यतः पूषा नाम का देवता पशुशालाओं का अध्यक्ष था, किन्तु देवेन्द्र के प्रियवाहन हर्य्यश्वों का जो विशेष रूप से संरक्षण करता था, वह हर्य्यश्व था ॥५॥

इन्द्र के लिए जहाँ तृतीय सवन में धान दिये जाते थे, वहाँ इन्द्र के घोड़ों तथा वाज और ऋभु को भी धान दिये जाते थे ॥६॥

वहाँ इन्द्र के पान और भोजन के समय समस्त मरूद्गण सोमपान करता था और इन्द्र की कृपा से सोम और अपूप (मधुर खाद्य) का भोजन करता था ॥७॥

भोजनसामग्री को जो धारण करने वाले (व्यवस्थापक) थे, वे प्रयस्वान् कहलाते थे। इसके अतिरिक्त सोम आदि पेय को देने में जो सेवकगण थे, वे जरिता कहलाते थे।।८॥

और इन सबके अध्यक्ष महर्षि विश्वामित्र थे, जिन्होंने इस इन्द्र को बुलाकर सूक्त वाणी से और मधुरवाणी से इन्द्र की परिचर्या की ॥९॥

## (७) तत्र विश्वामित्रकृतो देवेन्द्राय भोजनसमये मधुवाकः।

३।५२ "धानावन्तं करम्भिणमपूपवन्तमुक्थिनम् ॥
इन्द्र प्रातर्जुषस्व नः ॥१॥
पुरोडाशं पचत्यं जुषस्वेन्द्रा गुरस्व च।
तुभ्यं हव्यानि सिस्रते ॥२॥
पुरोडाशं च नोघसो जोषयासे गिरश्च नः।
वधूयुरिव योषणाम् ॥३॥
पुरोडाशं सनश्रुत प्रातः सावे जुषस्व नः।

इन्द्रक्रतुर्हि ते बृहन् ॥४ ॥
माध्यन्दिनस्य सवनस्य धानाः पुरोडाशमिन्द्रकृष्वेह चारुम् ।
प्रयत्स्तोता जरिता तूर्ण्यर्थो वृषायमाण उपगोर्भिरीट्टे ॥५ ॥
तृतीये धानाः सवने पुरुष्टुत पुरोडाशमाहुतं मामहस्व नः ।
कृभुमन्तं वाजवन्तं त्वा कवे प्रयस्वन्त उपशिक्षेम धीतिभिः ॥६ ॥
पूषण्वते च कृमा करम्भं हरिवते हर्य्यश्वाय धानाः ।
अपूपमद्धि सगणो मरुद्भिः सोमं पिब वृत्रहाशूर विद्वान ॥७ ॥
प्रतिधाना भरत तूपमस्मै पुरोडाशं वीरतमाय नृणाम् ।
दिवे दिवे सदृशोरिन्द्र तुभ्यं वर्धन्तु त्वां सोमपेयाय धृष्णो ॥८ ॥"

३-६०-१-७ विश्वामित्रकृतस्तृतीयसवने ऋभुत्रयपरितोषार्थः प्राशनीयो मधुवाकः ।
"इहेह वो मनसा वन्दुता नर उषिजो जग्मुरभि तानि वेदसा ॥
याभिर्मायाभिः प्रतिजूति वर्पसः सौधन्वना यज्ञियं भागमानश ॥१ ॥
याभिः शचीभिश्चमसाँ अपिंशत यया धिया गामरिणीति चर्मणः ।
येन हरी मनसा निरतक्षत तेन देवत्वमृभवः समानश ॥२ ॥
इन्द्रस्य सख्यमृभवः समानशुर्मनोर्नपातो अपसोदधन्विरे ।
सौधन्वनासो अमृतत्वमेरिरे विष्ट्वी शमीभिः सुकृतः सुकृत्यया ॥३ ॥
इन्द्रेण याथ सरथं सुते सचाँ अथो वशानां भवथा सहश्रिया ।
नवः प्रतिमै सुकृतानि वाघतः सौधन्वना ऋभवो वीर्याणि च ॥४ ॥
इन्द्र ऋभुभिर्वाजवद्भिः समुक्षितं सुतं सोममा वृषस्वा गभस्तयोः ।
धियेषितो मघवन्दाशुषो गृहे सौधन्वनेभिः सह मत्स्वानृभिः ॥५ ॥
इन्द्र ऋभुमान्वाजवान्मत्स्वेह नोऽस्मिन्त्सवने शच्या पुरुष्टुत ।
इमानि तुभ्यं स्वसराणि येमिरे व्रता देवानां मनुषश्च धर्मभिः ॥६ ॥
इन्द्र ऋभुभिर्वाजिभिर्वाजयन्निह स्तोमं जरितुरुपयाहि यज्ञियम् ।
शतं केतेभिरिषिरेभिरायवे सहस्रणीथो अध्वरस्य होमनि ॥७ ॥

## (७) वहाँ भोजंन के समय देवेन्द्र के लिए विश्वामित्र द्वारा रचित मधुर वचन

ऋग्वेद के तृतीय मण्डल के बावनवें सूक्त में ऋषि विश्वामित्र देवेन्द्र के लिए मधुर वचन कहते हैं — " हे इन्द्र ! हमारे धान, दही और पूओं से युक्त प्रशंसनीय सोम रस को प्रातः काल के समय पी ॥१ ॥

हे इन्द्र ! भली प्रकार पकाए गए पुरोडाश को खाकर तू बलवान् बन, ये हव्य तुझे दिए जाते हैं ॥२ ॥

हे इन्द्र ! हमारे इन पुरोडाश को खाकर जैसे स्त्री की कामना करने वाला स्त्री को प्राप्त करता है, उसी तरह हमारी स्तुतियों का तून सेवन कर ॥३ ॥

हे इन्द्र ! प्रातःकाल के सवन में तू हमारे बहुश्रुत (प्रसिद्ध) पुरोडाश को खा, क्यों कि तेरे कर्म महान् हैं ॥४ ॥

हे इन्द्र ! क्यों कि यज्ञ को प्रेरणा देने वाला, बलवान् तथा स्तुतिकर्ता स्तोता अपनी वाणी से तेरी स्तुति करता है, तू यहाँ यज्ञ में मध्याह्न के यज्ञ का धान तथा उत्तम पुरोडाश को खा ॥५ ॥

हे कवि इन्द्र ! तू सायंकालीन सवन में हमारे द्वारा आहुत महत्वपूर्ण धान का पुरोडाश खा। ऋभुओं वाले तथा अन्नवाले, अन्न की इच्छा करने वाले हम स्तुतियों से प्रशंसा करते हैं ॥६ ॥

हे इन्द्र ! तू पुष्टिदाता है, कष्ट निवारक है, तथा हरिनामक घोड़ोंवाला है, तेरे लिए हमने दही और धान से मिश्रित सोम को तैयार किया है। हे वृत्र को मारने वाले, शूरवीर और विद्वान इन्द्र ! तू मरूद्गण के साथ आकर सोम-पान कर तथा अपूपभक्षण कर। ।७ ॥

मनुष्यों में सर्वश्रेष्ठ वीर इन्द्र के लिए पर्याप्त धान (ख़ील) तथा पुरोडाश प्रदान करो। हे शत्रुसंहर्ता इन्द्र ! हम एकत्र बैठकर प्रतिदिन स्तुति करते हैं, उनसे तू सोमपान के लिए वृद्धि को प्राप्त कर" ॥८ ॥ (३/५२/१-९८) ॥

तृतीय सवन (सन्ध्याकालीन भोजन के समय) में ऋभुओं के सन्तोष के लिए विश्वामित्र द्वारा रचित भोजनोचित मधुर वाणी की रचना की गई ॥

ऋग्वेद के तृतीय मण्डल में ऋषि विश्वामित्र स्तुति रचना करते हैं —

हे ऋभुओं ! आप शत्रुओं पर आक्रमण करके अपना तेज प्रकट करने वाले, उत्तम धनुष को धारण करने वाले हो जिन महिमा से युक्त कर्मों से आप य्रज्ञिय भाग को प्राप्त करते हो, उन कर्मों को जो मनुष्य त्रान पूर्वक करते हैं, उनके साथ तुम्हारी बन्धुता यहीं होती है ॥१ ॥

हे ऋभुओं ! आपने अपनी जिन शक्तियों से चमसों को सुन्दर रूप प्रदान किया, जिस बुद्धि से तुमने चर्म से गाय को बनाया है, जिस मन से घोड़ों को बलवान् बनाया है, इसीलिए आपने देवत्व प्राप्त किया है ॥२ ॥

ऋभुओं ने इन्द्र की मित्रता को प्राप्त किया है और उसे दारण भी किया है। ये ऋभु मनोबल को गिरने नहीं देते है और उत्तम कर्म करने वाले हैं। धनुष को धारण करके सुकृत करने वाले ऋभुगण ने अपनी शक्तियों और उत्तम कर्मों से अमरता को प्राप्त किया ।.३ ॥

हे उत्तम धनुष को धारण करने वाले तथा बुद्धिमान ऋभुगण ! तुम सोमयाग में इन्द्र के साथ एक ही रथ पर बैठकर जाते हो। जो तुम्हें प्राप्त करना चाहता है, उसके पास

धन और ऐश्वर्य के साथ जाते हो। तुम्हारे सुकृत और पराक्रम की कोई उपमा नहीं है ॥४ ॥

हे इन्द्र ! (वाजवद्भिः ऋभुभिः) बल से युक्त ऋभुओं के साथ (समुक्षित सुतं सोमं) भली प्रकार से निचोड़े गये सोम को (गभस्त्योः आवृषस्व) हाथों में धारण कर। हे मधवन् ! (धिया दूषितः) अपनी उत्तम बुद्धि से प्रेरित (सौधन्वनेभिः नृभिः) उत्तम धुनर्धर मनुष्यों के साथ (दाशुष गृहे मत्स्व) दानदाता के धर में जाकर आनन्दित हो ॥५ ॥

हे (पुरूष्टुत) बहुतों के द्वारा स्तुत्य इन्द्र ! ऋभुओं से युक्त, बलशाली तथा शक्तिमान् होकर यहाँ हमारे इस यज्ञ में आनन्दित हो। ये दिन और मनुष्यों तथा देवों के कर्म तथा नियम भी तेरे कारण ही चलते हैं ॥६ ॥

हे इन्द्र ! तू बलवान् ऋभुओं के साथ सबको बलशाली बनाता हुआ स्तोता के इस पूजनीय यज्ञ में आ। हे इन्द्र ! तू हजारों उत्तम मार्गों को जानता है। तू सौ अत्यन्त तीव्रगामी घोड़ों से आयु प्रदान करने के लिए इस हिंसा रहित यज्ञ में आ ॥७ ॥(३/६०/१-७) ॥

## देवमेदेन सोमपानसमयभेदः ।

**समयः पृथगिव नियतो देवानां सोमपानाय।**
**आसीदित्यावेदितमाथर्वणनवमकाण्डेऽपि। (अथर्व१ ।९ ।१) ॥१ ॥**
**"यथा सोमः प्रातः सवने अश्विनोर्भवति प्रियः।**
**एवा मे अश्विनावर्च आत्मनि ध्रियताम् ॥२ ॥(९ ।१ ।११)**
**यथा सोमो द्वितीये सवन इन्द्राग्न्योर्भवति प्रियः।**
**यथा सोमस्तृतीये सवन ऋभूणां भवंति प्रियः ॥३ ॥"(९ ।१ ।१३)**

## (८) देवों के भेद के अनुसार सोम-पान के समय में भेद

देवों के सोम पान के लिए अलग अलग ही समय निर्धारित था, ऐसा अथर्ववेद के नवें काण्ड में भी स्पष्ट किया गया है ॥१ ॥

"जैसे अश्वि देवों को प्रातः सवन में सोम पान करता प्रिय होता है। अतः उसी तरह वे अश्वि देवता मुझे अपने प्रीत स्थान प्रदान करें (मेरी आहुति स्वीकार करें) ॥२ ॥

जैसे इन्द्र और अग्नि को द्वितीय सवन (मध्याहन काल का सोमपान का समय) में सोमपान करना प्रिय होता है।

जैसे ऋभुओं को तृतीय सवन (सायंकालीन सोमपान का समय) में सोम-पान करना प्रिय लगता है ॥"३ ॥(९/१/१३)

## (९) निषधगिरौ समरारम्भणीयः सोमाभिषव प्रमहाख्यः- प्रागुत्तेजकवीरपानमहोत्सवः।

तत्रेन्द्रस्य प्रीत्यै संमानार्थं महोत्सवं कुत्सः।
सोमाभिषवं नामाऽऽतेनेऽत्युत्साहसंभारैः ॥१॥
युद्धात्पूर्वं पश्चादासीन्नियतं तु वीरपानं प्राक्।
उद्दिश्य वीरपानं कुत्सेनायं महोत्सवः क्लृप्त ॥२॥
धानापूपकरम्भामिक्षादध्याशिरादयो भोज्याः।
सोमाग्रपेयणूर्वा गुणकीर्तनभक्तिसूक्तान्ताः ॥३॥
महतो यो माहात्म्यं दर्शयितुं क्रियत उत्सवस्तं हि।
प्रमहं मह इति चाहुः सूनृतवाङ् महसि पानमशनं च ॥४॥
तत्रानेकसहस्राण्यासन्निन्द्राय सोमकुम्भानाम्।
विनिमयनार्था गावः प्रणयवचांसि च निवेदनीयानि ॥५॥
विनिमयनव्यवहाराञ्जस्यार्थं राजशासनप्रख्यम्।
अद्य यथा पश्यामस्ताम्रपणं रौप्यणं स्वर्णम् ॥६॥
एवं देवयुगे प्रागासीद् गोनाम विनिमयद्रव्यम्।
तद् गौरेव हिरण्यं वान्यद्वेत्येवमनुचिन्त्यम् ॥७॥
अद्येव पूर्वकाले क्रयविक्रयवत् प्रभूपहारेऽपि।
विनिमयनीयद्रव्याण्यावेद्यन्ते स्म ता गावः ॥८॥
आराध्याः संभ्रान्ताः संभावितसज्जनाश्च समवेत्य।
प्रणयप्रदेयमर्थं स्वैः स्वैः काव्यैः सहार्पयामासुः ॥९॥
येयं प्रथते वैदिकमन्त्राणां संहितात्रितयी।
काव्यानि तान्यृषीणामित्युक्तं शतपथेऽष्टमे काण्डे ॥१०॥
(शत॰ ८ कां। ३ प्र॰ ३ ब्रा॰ ४ कं॰)
तत्र च कुत्सुनियुक्तो विश्वामित्रो महर्षिरुत्थाय।
दस्युवधायेन्द्रायावदेयदभ्यर्थनासूक्तम् ॥११॥
शुष्मिन्तरमं च वनुते दस्युभ्यः स्वगृहराष्ट्ररक्षार्थम्।
भोज्यान्नलाभहेतोर्द्युम्निनियुक्तिं च सोर्थते सोमम् ॥१२॥

# (९) निषध गिरि पर युद्ध के प्रारम्भ में किया जाने वाला प्रमह नाम का सोभाभिषव। युद्ध पूर्व सोमपान द्वारा वीर्यस्थापना अथवा उत्तेजना उत्पन्न करने के लिए उत्सव

तब वहाँ कुत्स ने इन्द्र की प्रसन्नता के लिए और सम्मान करने के लिए सोमाभिषव नाम का उत्सव अत्यन्त उत्साह से मनाया ॥१ ॥

प्राचीन समय में युद्ध से पूर्व और पश्चात् सोमपान (वीरपान) उत्साह वर्द्धन के उद्देश्य से नियत किया गया था। इसलिए कुत्स ने यह वीरपान नाम का महोत्सव सम्पन्न किया ॥२ ॥ धान, अपूप, करम्भ (दही मिश्रित भोज्य पदार्थ), आमिक्षा (दधि, छाछ अथवा छेना) और दध्याशिर आदि भोजन ते, जिनसे पहले सोमपान किया जाता था, तत्पश्चात् गुणों का बखान और भक्ति (प्रशंसा) सूक्त होते थे ॥३ ॥

महान् व्यक्ति के माहात्म्य को प्रदर्शित करने के लिए यह उत्सव मनाया जाता था। उस उत्सव को मह कहा जाता हैष इस मह में पान भोजन और मांगलिक प्रवचन होते हैं ॥४ ॥

वहाँ इन्द्र के लिए अनेक सहस्र सोम कुम्भ, विनिमय के उद्देश्य से गायें (गौमूल्य कल्पित द्रव्य) और प्रणय - वचन - निवेदन किये गये ॥५ ॥

आज जिस तरह हम देखते हैं, कि विनिमय, व्यवहार, सम्मान तथा राज व्यवस्था के कार्यों के लिए तांबा, यांजी और सोने की मुद्राएँ होती हैं, उसी तरह प्राचीन देवयुग में गो नाम का विनिमय द्रव्य होता था। वहाँ गाय, स्वर्ण अथवा कोई अन्य द्रव्य विनिमय के रूप में दिया जाता था, यह विचारणीय है ॥६-७ ॥

आज की तरह पूर्वकाल में भी क्रय-विक्रय की तरह महापुरूषों की भेंट में भी जो विनिमय योग्य द्रव्य भेंट दिये जाते थे, वह गौ ही होती थी ॥८ ॥ आराध्य, सम्भ्रान्त, सम्मानित और सज्जनों ने एकत्रित होकर प्रणय रूप में देने योग्य द्रव्यों को अपने अपने काव्यों (स्तुतियों) के साथ प्रस्तुत किया ॥९ ॥

वैदिक मंत्रों की जो तीनों संहिताएँ प्रसिद्ध हैं, वे ऋषियों के काव्य थे, ऐसा शतपथ के अष्टम काण्ड में कहा गया है ॥१० ॥

वहाँ कुत्स द्वारा नियुक्त महर्षि विश्वामित्र ने उठकर दस्यु निग्रह के लिए इन्द्र से अभ्यर्थना सूक्त का उच्चारण किया। दस्युओं से अपने गृहराष्ट्र की रक्षा की रक्षा के लिए दैदीप्यमान् इन्द्र से तथा भोज्यान्न लाभ हेतु सोम की नियुक्ति हेतु प्रार्थना की ॥११-१२ ॥

## १०- वीरपानप्रमहे विश्वामित्रकृतो दस्युवधाभ्यर्थनासूक्तपाठः ।३ ।३७ ॥

विश्वामित्रो भोजनादिप्रबन्धाध्यक्षः क्लृप्तस्तेन पानोत्सवस्य।
अध्यध्यक्षः सोऽभवत् तत्सभायां सग्धेरन्तेऽभ्यर्थनां सोऽध्यवोचत् ॥१ ॥
३ ।३७। "वार्त्रहत्याय शवसे पृतनाषाह्याय च
इन्द्रत्वा वर्तयामसि ॥१ ॥
अर्वाचीनं सुते मन उत चक्षुः शतक्रतो।
इन्द्र कृण्वन्तु वाघतः ॥२ ॥
नामानि ते शतक्रतो विश्वाभिर्गीर्भिरीमहे।
इन्द्राभिमातिषाह्ये ॥३ ॥
पुरुष्टुतस्य धामभिः शतेन महयामसि।
इन्द्रस्य चर्षणीधृतः ॥४ ॥
इद्रं वृत्राय हन्तवे पुरुहूतमुपब्रुवे।
भरेषु वाज सातये ॥५ ॥
वाजेषु सासहिर्भव त्वामी महे शतक्रतो।
इन्द्रवृत्राय हन्तवे ॥६ ॥
द्युम्नेषु पृतनाज्ये पृत्सुतूर्षु श्रवःसु च।
इन्द्र साक्ष्वामि मातिषु ॥७ ॥
शुष्मिन्तमं न ऊतये द्युम्निनं पाहि जागृविम्।
इन्द्रसोमं शतक्रतो ॥८ ॥
इन्द्रियाणि शतक्रतो याते जनेषु पञ्चसु।
इन्द्र तानि त आ वृणे ॥९ ॥
अगन्निन्द्रश्रवो बृहद् द्युम्नं दधिष्व दुष्टरम्।
उत्ते शुष्मं तिरामसि ॥१० ॥
अर्वावतो न आ गह्यथो शक्रं परावतः।
ऊलोको यस्ते अद्रिव इन्द्रेह तत आ गहि" ॥११ ॥

## (१०) वीर-पान-महोत्सव में विश्वामित्र द्वारा रचित दस्युओं का वध करने के लिए प्रार्थना सूक्त

उस पानोत्सव का भोजन इत्यादि का प्रबन्धाध्यक्ष विश्वामित्र को नियुक्त किया गया।वह उस सभा में अध्यक्षों का अध्यक्ष हुआ और सहभोज के अन्त में उससे प्रार्थना वचन कहे ॥१ ॥

ऋग्वेद के ३/३७ में विश्वामित्र कहते हैं —

"हे इन्द्र ! हम तुझे वृत्र को मारने के लिए, बल के लिए और शत्रुओं का संहार करने के लिए प्रेरित करते हैं ॥१ ॥

हे (शतक्रतो) सैकड़ों कर्मों को करने वाले इन्द्र ! स्तुति करने वाले तेते उत्तम मन और नेत्रों को नवीन बनावें (उज्जवल बनावें) ॥२ ॥

हे (शतक्रतो) सैकड़ों कर्मों को करने वाले इन्द्र ! युद्ध में तेरे (नमानि) बलों को हम सम्पूर्ण प्रार्थना के सूक्तों से भांगते हैं ॥३ ॥

(पुरूष्टुतस्य) बहुतों के द्वारा स्तुत्य सैंकड़ों तेजों से युक्त, मनुष्यों को धारण करने वाले इन्द्र की हम स्तुति करते हैं ॥४ ॥

बहुत लोगों द्वारा बुलाये जाने वाले इन्द्र को युद्धों में अन्न की प्राप्ति के लिए तथा वृत्र को मारने के लिए मैं बुलाता हूँ ॥५ ॥

हे सैंकड़ों कर्मों को करने वाले इन्द्र ! तू युद्धों में शत्रुओं को हराने वाला बन। मैं वृत्र को मारने के लि तुझे बुलाता हूँ ॥६ ॥

हे इन्द्र ! (अभिमातिषु प्रतनाज्ये) शत्रुओं को हराने वाले युद्ध में (द्युम्नेषु श्रवःसु च) अन्न प्राप्त होने वाले युद्धों में तथा (पृत्सुतूर्षु) अन्य युद्धों में तू शत्रुओं को मार ॥७ ॥

हे शतक्रतो ! बलयुक्त, तेजस्वी और चेतना देने वाले सोम को हमारे संरक्षण के लिए पी ॥८ ॥

हे (शतक्रतो) सैकड़ों कर्मों को करने वाले इन्द्र ! पाचं जनों (चार वर्ण और निषाद) में जो तेरी शक्ति है, उन शक्तियों को मैं स्वीकार करता हूँ ॥९ ॥

हे इन्द्र ! यह महान् अन्न तेरे पास (अगन्) जाए, तथा तू शत्रुओं द्वारा कठिनाई से पार करने योग्य तथा तेजस्वी इस सोम को धारण कर, हम तेरे बल को बढ़ाते हैं ॥१० ॥

हे वज्रधारी इन्द्र ! तू (अर्वावतः) समीप के देशों से हमारे पास आ तथा (परावतः) दूर के देशों से हमारे पास आ तथा जो तेरा लोक है, उस लोक से हमारे पास आ" ॥११ ॥ (३/३७/१-११)

## (११) नाभाकः काण्वोऽपि दस्युवधाद्यभ्यर्थनासूक्तमुवाच

### (८/४०/—१२)

ऋ.८/४० "अपि वृश्च पुराणवद् व्रततेरिव गुष्पितमोजो दासस्य दम्भय।
वयं तदस्य सम्भृतं वस्विन्द्रेण विभजेमहि नभन्तामन्यके समे ॥ ६ ॥
यदिन्द्राग्नी जना इमे विह्वयन्ते तना गिरा।
अस्माकेभिर्नृभिर्वयं सासह्याम पृतन्यतो वनुयाम वनुष्यतो नभन्ताम
न्यके समे ॥ ७ ॥

या नु श्वेताववो दिव उच्चरात उप द्युभिः।
इन्द्राग्न्योरनु व्रतमुहाना यन्ति सिन्धवो यान्त्सी वन्धादमुञ्चतां न
भन्ता मन्यके समे ॥ ८ ॥
पूर्वीष्ट इन्द्रोपमातयः पूर्वीरुत प्रशस्तयः सूनो हिन्वस्य हरिवः।
वस्वो वीरस्यापृचो या नु साधन्त नो धियो नभन्तामन्यके समे॥ ९ ॥
तं शिशीता सुवृक्तिभिस्त्वेषं सत्वानमृग्मियम्।
उतो नु चिद्य ओजसा शुष्णस्याण्डानि भेदति जेषत्स्वर्वतीरपो
नभन्तामन्यके समे ॥१० ॥
तं शिशीता स्वध्वरं सत्यं सत्वानमृत्वियम्।
उतो नु चिद्य ओहत आण्डा शुष्णस्य भेदत्यजैः स्वर्वतीरपो
नभन्तामन्यके समे ॥११ ॥
एवेन्द्राग्निभ्यां पितृवन्नवीयो मन्धातृवदङ्गिरस्वदवाचि।
त्रिधातुना शर्म्मणा पातमस्मान्वयं स्याम पतयो रयीणाम्" ॥ १२ ॥

## (११) नाभाक काण्व दस्युओं का वध करने हेतु रचित प्रार्थना सूक्त

ऋग्वेद के ८/४० में नाभाक काण्व ने प्रार्थना सूक्त की रचना की

"हे इन्द्र ! पहले के समान ही तू शत्रुओं को उसी तरह काट जिस तरह से बेल से ढ़के हुए तने को काटते हैं। तू दास के तेज को नष्ट कर। हम इन्द्र के साथ इस शत्रु के छिपे हुए उस धन को प्राप्त करें तथा अन्य शत्रु स्वयमेव नष्ट हो जावे ॥ ६ ॥

जब ये मनुष्य अपनी वाणी तथा शरीर से इन्द्र और अग्नि को बुलाते हैं, तब हम अपने वीर सैनिकों की सहायता से शत्रुसेना को पराजित करें। हमारी प्रशंसा करने वालों की हम भी प्रशंसा करें। अन्य शत्रु स्वयमेव नष्ट हो जावें ॥ ७ ॥

जो सत्त्वगुण से युक्त इन्द्र और अग्नि हैं, वे अपने तेजों से द्युलोक के नीचे, आस-पास तथा ऊपर भी विचरण करते हैं। जिन नदियों को इन इन्द्राग्नी ने चारों ओर के बन्धन से छुड़ाया, उन्हीं के कर्मानुसार हवि देने वाले चलतें हैं। अन्य शत्रु स्वयेव नष्ट हो जावें ॥ ८ ॥

हे (हरिवः सूनो इन्द्र) वज्रधारी तथा सबको उत्पन्न करने वाले इन्द्र ! तू अपने प्रसन्नकर्ता को धन प्रदान कर। तेरी उपमाएँ और प्रशंसाएँ बहुत हैं, जिन प्रशंसाओं ने हमारी बुद्धियों को श्रेष्ठ बनाया है। अन्य शत्रु स्वयमेव नष्ट हो जावें ॥ ९ ॥

और जिस इन्द्र ने अपने तेज से शुष्ण नाम के असुर की सन्तानों को मारा है तथा जिसने शब्द करती हुई नदियों को जीता है, उस इन्द्र को, जो तेजस्वी, बलशाली ऋचाओं द्वारा स्तुत्य है, उत्तम वचनों से तथा उत्तम विधि से तेजस्वी करो। अन्य शत्रु स्वयमेव नष्ट हो जावें ॥ १० ॥

जो (ओहत) सर्वत्र विचरण करता है तथा शुष्ण नाम के असुर की सन्तानों को मारता है, जिसने शब्द करती हुई नदियों को जीता है, उस उत्तम मार्ग को बताने वाले, अविनाशी, बलशाली और स्तुति करने योग्य इन्द्र को तेजस्वी करो। अन्य शत्रु स्वयमेव नष्ट हो जावें ॥११॥

इस प्रकार मैंने इन्द्र और अग्नि के लिए पिता के समान, मान्धाता के समान तथा अंगिरा के समान नवीन स्तुति की है, वे दोनों (इन्द्र और अग्नि) तीनों धातुओं से (सोना, चाँदी और तांबा) समृद्ध हमारी रक्षा करें और ऐश्वर्यों के स्वामी हो ॥१२॥ (८/४०/६ - १२)

## (१२) ततो दस्युनिग्रहोपायचिन्तायां कुत्सेनोपायप्रदर्शनम्।

**अथ सुप्रसन्न इन्द्रो दस्यूनामभिजनस्थितिप्रचारादि।**
**अपि तद्दमनोपायाद्यध्यवसातुं परामृक्षत् ॥ १ ॥**
**व्यज्ञपयत्तु स कुत्सो निषधादस्मात्तु पूर्वतः सरिताम्।**
**पारेऽङ्कुस्यादीनां प्रस्यासन्ने 'शिफा' नद्याः ॥ २ ॥**
**कुयवग्रामं जाने किन्त्वङ्कुस्यादयोतिदुष्पाराः।**
**बलवज्जलसंवेगाः सन्ति पथि प्राणहारिणः ॥ ३ ॥**
**यद्यपि सरित्प्रवाहो हस्तद्विशतीमितोस्ति विस्तारे।**
**किन्तु तथापि न नौभिर्गन्तुं शक्योन्तरश्मभिर्घातात् ॥ ४ ॥**
**जलवेगप्राबल्यादुच्चावचभूमिसञ्चारात्।**
**सरितां पारं गन्तुं न बाहुतरणात्समर्थन्ते ॥ ५ ॥**
**दस्यव एते निपुणा गिरिशिखरप्रोतदोलवर्तन्याः ।**
**शिक्याभिर्मशकैर्वा यातायातं प्रकुर्वन्ति ॥ ६ ॥**
**दासातिरिक्तजनता त्वासां पारं समर्थते नैतुम्।**
**तत्कृतदोलनिपातादवहनतो मशकशिक्यानाम् ॥ ७ ॥**
**दोलाद्यारूढा अपि बहवो नद्यां निपातिता द्वेषात्।**
**तस्मात्तेषां ग्रामाः सहसा द्रष्टुं न शक्यन्ते ॥ ८ ॥**
**मध्ये च बहवो दासा मार्गं च सन्ति रुन्धानाः।**
**तस्मात्तेषां ग्रामा दुरधिगमा दुर्गमाः सन्ति ॥ ९ ॥**
**आसां ततो नदीनां निस्तारार्थं नियुज्यन्ताम्।**
**आहूय राष्ट्रशूराः आर्या वनरक्षिणः कुशलाः ॥ १० ॥**
**दासानां पथि चरतां व्यामोहार्थं नियुज्यन्ताम्।**
**कृतदासवेषभूषास्तद्भाषायां च शिक्षिता मरुतः ॥ ११ ॥**

## (१२) तदनन्तर दस्युनिग्रह के उपायसम्बन्धी विचार में कुत्स द्वारा निराकरण हेतु सुझाव

तदनन्तर इन्द्र ने प्रसन्न होकर दस्युओं के अभिजन (वंश, कुल, निवास एवं उत्पत्ति), स्थिति, प्रचार (विचरण करना, घूमना-फिरना) और उनका दमन करने हेतु उपाय सम्बन्धी प्रयत्न करने के लिए विचार किया ॥१॥

कुत्स ने विज्ञापित किया कि इस निषध पर्वत से पूर्व नदियों के पार अंजसी आदि नदियों के समीप "शिफा" नदी के निकट कुयव नाम के ग्राम को मैं जानता हूँ, किन्तु अंज़सी आदि नदियों का पार करना अत्यन्त ही दुष्कर है। इन नदियों का जल-प्रवाह अतिप्रबल है और वह जल-प्रवाह मध्य मार्ग में प्राण-घातक हो जाता है। ॥२-३॥

यद्यपि नदी के प्रवाह का विस्तार दो सौ हाथियों के माप का है, तथापि नदी में पाषाणखण्डों के घात के कारण नावों से भी जाना सम्भव नहीं है ॥४॥

तीव्र जल-प्रवाह के प्राबल्य से, भूमि के मार्ग के असमतल (ऊँची-नीची) होने से नदी को तैरकर भी पार करना सम्भव नहीं है ॥५॥ ये दस्युगण अत्यन्त ही चतुर हैं, पर्वत-शिखर पर आर-पार विचरण करने के लिए छींको अथवा मशकों से यातायात करते हैं ॥६॥

दासों से भिन्न जनता तो इन नदियों के पार जाने में समर्थ नहीं है, क्योंकि उन लोगों द्वारा बनाए गए झूलों के गिर जाने से तथा मशकों को वहन न कर सकने से (पारगमन में असमर्थ थे) ॥७॥

झूलों पर चढ़े हुए भी अनेक (दासभिन्न जनता) लोगों को द्वेष के कारण नदी में गिरा दिया जाता था। इसलिए वे उनके ग्रामों को सहसा नहीं देख सकते हैं ॥८॥

मध्य मार्ग में अनेक दास मार्गावरोधक होते थे। इसलिए उनके ग्राम दुष्प्राप्य और अप्रवेश्य थे ॥९॥

इसलिए इन नदियों को पार करने हेतु राष्ट्र के शूरवीर आर्यो और कुशल वन रक्षकों को बुलाकर नियुक्त किया जाना चाहिये ॥१०॥

मार्ग में विचरण करते हुए दासों को व्यामोहित (भ्रमित, परेशान अथवा वश में) करने के लिए दासों की वेशभूषा और उनकी भाषा को जानने वाले मरुतों (देवों) को नियुक्त किया जावे ॥११॥

## (१३) ततो दस्युनिग्रहार्थं कुत्सप्रदर्शितमार्गाश्रयणम्।

**इत्थं कुत्सादिष्टमार्गं स इन्द्रः सम्यग् मत्त्वा तत्तथैवादिदेश।**
**दस्यूनेतान् संनिगृह्य स्वराज्ये भूयोऽप्यार्यान् धातुमाधात् प्रतिज्ञाम् ॥१॥**

सिन्धोः पारे नैषधेऽद्रौ स इन्द्रः स्कन्धावारं विश्रमाय प्रकल्प्य।
गूढं दस्युस्थानमादौ विचेतुं विज्ञान् द्रोण्यां प्रेषयामास चारान् ॥२॥
काले भूयस्यप्यनिश्चित्य तेषां शैलद्रोणीगह्वरस्थान्निकेतान् !
प्रत्यावृत्तास्ते चरा आयुराजप्रेष्यारण्याभिज्ञवेशानकुर्वन् ॥३॥
आसीदायुः प्राक् प्रतिष्ठानराजो हेमाद्रिस्थे पञ्चगौरप्रयागे।
ये तद्भृत्याः केऽप्यटव्यां नियुक्तास्ते खल्वासन् दस्युजातीयजीवाः॥ ४॥

## (१३) तदनन्तर दस्युओं के निग्रह के लिए कुत्स द्वारा प्रदर्शित मार्ग का आश्रय ग्रहण करना

इस प्रकार कुत्स द्वारा प्रदर्शित मार्ग को उचित मान कर इन्द्र ने तदनुसार इन दस्युओं को कैद करके फिर से आर्यों को अपने राज्य में प्रतिष्ठित होने की आज्ञा दी ॥१॥

सिन्धु के पार निषध पर्वत पर उस इन्द्र ने विश्राम के लिए स्कन्धावार बना कर सर्वप्रथम दस्युओं के गुप्त स्थानों की खोज करने के लिए जानकार गुप्तचरों को पर्वत की द्रोणि (घाटी) में भेजा ॥२॥ बहुत समय व्यतीत हो जाने पर भी उन दस्युओं की पर्वत घाटियों और कन्दराओं में स्थित निवासस्थानों की जानकारी न होने पर जब वे गुप्तचर वापस आ गये तब आयुराज नाम के राजा के सेवकों, जो अरण्य-भ्रमण में निपुण थे, जंगली वेष धारण किये हुये थे, को भेजा ॥ ३॥

प्राचीन समय में आयु नाम का राजा प्रतिष्ठान नगर का राजा था, जो हिमालय पर्वत में पंचगौरप्रयाग में स्थित था, उसके जो सेवक थे, उनमें से कुछ जंगल में नियुक्त थे और वे दस्यु जाति से सम्बद्ध थे ॥४॥

## (१४) आयुराजस्य प्रतिष्ठानं पुराधिष्ठातुः परिचयः।

गन्धर्वराजपौत्रो बुधपुत्रो यः पुरूरवा राजा।
तत्पुत्र आयुरासीद् गन्धर्वेशः प्रतिष्ठाने ॥१॥
'गौरी' नदीसमीपे मूजवतः पर्वतादर्वाग्देशे।
गान्धारे प्रागासीदिदं प्रतिष्ठानमायुपुरम् ॥२॥
अधुना केचिद्ब्रुवते भारतवर्षीयमध्यरेखाप्राक् ।
'झूसी'-'प्रायाग'-सविधे पुरं प्रतिष्ठानमित्यलीकं तत् ॥३॥
राजा ययातिरवसद् वार्धक्ये तं प्रयागमभ्येत्य।
तस्य निवासस्थानं विदुः 'प्रतिष्ठान' मित्यन्यत् ॥४॥
अस्मिन् भारतवर्षे सन्ति हि 'बाह्लीक''वैतुला'दीनि।
बाह्लीक-वैतुलादि-प्रतिकृतिरूपाणि तद्वदन्यत्तत् ॥ ५॥

**जाह्नवदेशप्रथिता 'जाह्नवी' नाम या गङ्गा ।**
**तस्याः कूले मुख्यं पुरं प्रतिष्ठानमासीत्तत् ॥ ६ ॥**
**अत्र प्रमाणजातं निदर्शितं पौरवख्यातौ ।**
**आयुः पौरूरवसो दासानपि कांश्चिदीष्टे स्म ॥ ७ ॥**
**इन्द्रस्तस्मादायुराड्वन्यवर्गात्तेषां भाषावेशभूषादि साम्यम् ।**
**संपाद्य स्वांस्तत्र वर्गे स्थानं तेषामध्यवास्यत् क्रमेण ॥८ ॥**

## (१४) प्रतिष्ठानपुर के अधिष्ठाता आयुराज का परिचय

गंधर्वराज का पौत्र, बुधपुत्र जो पुरुरवा नाम का राजा था, उसका पुत्र आयु था, जो प्रतिष्ठान नगर में गंधर्वों का अधिपति था ॥ १ ॥

गौरी नदी के पास मूजवान् पर्वत के पार्श्व भाग में गांधार प्रदेश में प्राचीन समय में आयुराजा का यह प्रतिष्ठान का नाम का नगर था ॥ २ ॥

आज कुछ लोग कहते हैं, कि भारतवर्ष की मध्य रेखा के पूर्व "झूसी" और "प्रयाग" के पास प्रतिष्ठान नाम का नगर है, परन्तु ऐसा कहना मिथ्या है ॥३ ॥

राजा ययाति ने वृद्धावस्था में जिस प्रयाग में आकर निवास किया, उसे प्रतिष्ठान कहतें हैं, परन्तु वह (ययाति राजा का निवास-स्थान) कोई अन्य नगर था ॥४ ॥

इस भारतवर्ष में "बाह्लीक" और "वैतुल" नगरों की प्रतिकृति रूप "बाह्लीक" और "वैतुल" इत्यादि नगर हैं, वैसे ही वह प्रतिष्ठान नाम का नगर भी अन्य ही है ॥५ ॥

"जाह्नव" देश में प्रसिद्ध "जाह्नवी" नाम की जो गंगा थी, उसके किनारे यह प्रतिष्ठान नाम का मुख्य नगर था ॥६ ॥

इस सम्बन्ध में "पौरव-ख्याति" में प्रमाण दिया गया है कि पुरूरवा-पुत्र आयुराजा दासों पर भी स्वामित्व रखता था ॥७ ॥

उस आयुराजा के वन्य वर्गों से उनके भाषा और वेशभूषा से समानता करके इन्द्र ने उनको अपने नगर में प्रविष्ट करा कर उनके निवासस्थानों में क्रम से अधिवास किया ॥८ ॥

## (१५) अप्रतिरथमहोवाकः ।

**अथ तत्र देवसेना मारुत्या सेनया सयुक् सज्जा ।**
**समराङ्गणेऽवतरितुं प्रतीक्षते स्म प्रभोराज्ञाम् ॥ १ ॥**
**अथ समराय मरुद्भिः सयुजं निषधात् प्रतिष्ठमानं तम् ।**
**प्रोत्साहयितुं चैन्द्रोऽप्रतिरथ उपासते स्म ॥ २ ॥**
**आभिक्रमिकः सुभटः प्रास्थानिकसमयमालक्ष्य ।**
**राजनियत्याऽभ्यूचेऽप्रतिरथ ऐन्द्रो महोवाकम् ॥३ ॥**

## (१५) अप्रतिरथ महोवाक्

तदनन्तर वहाँ देवसेना मारुती सेना के साथ सुसज्जित होकर समराङ्गण में उतरने के लिए प्रभु की आज्ञा की प्रतीक्षा कर रही थी। ॥१॥

अब युद्ध के लिए मरुतों के साथ निषध देश से प्रस्थान करते हुए उसे प्रोत्साहित करने के लिए ऐन्द्र अप्रतिरथ ने उपासना की ॥२॥

अभिक्रमण करने वाले सुभट (अप्रतिरथ) ने प्रस्थान-समय को देखकर राजाज्ञा से अप्रतिरथ ऐन्द्र महोवाक् का उच्चारण किया ॥३॥

## (१६) युद्धयात्रारम्भे राजपुरुषेणाप्रतिरथेनाप्रतिरथसूक्तपाठः।

१०/१०३ "आशुः" शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम्।
संक्रन्दनोऽनिमिष एक वीरः शतं सेना अजयत्साकमिन्द्रः ॥१॥
संक्रंदनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना।
तदिन्द्रेण जयत तत्सहध्वं युधो पर इषुहस्तेन वृष्णा ॥२॥
स इषुहस्तैः स निषङ्गिभिर्वशी संस्रष्टा स युध इन्द्रो गणेन।
संसृष्टजित्सोमपा बाहुशर्ध्युग्रधन्वा प्रतिहिताभिरस्ता ॥३॥
बृहस्पते परि दीया रथेन रक्षोहामित्राँ अप बाधमानः।
प्रभञ्जन्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम् ॥४॥
बलविज्ञायः स्थविरः प्रवीरः सहस्वान्वाजी सहमान उग्रः।
अभिवीरो अभिसत्वा सहोजा जैत्रमिन्द्र रथमातिष्ठ गोवित् ॥५॥
गोत्रभिदं गोविदं बज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा।
इमं सजाता अनुवीरयध्वमिन्द्रं सखायो अनुसंरभध्वम् ॥६॥
अभि गोत्राणि सहसा गाहमानोऽढयो वीरः शतमन्युरिन्द्रः।
दुश्च्यवनः पृतनाषाळयुध्योस्माकं सेना अवतु प्र युत्सु ॥७॥
इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः षुर एतु सोमः।
देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम् ॥८॥
इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुतां शर्द्ध उग्रम्।
महामनसा भुवनच्यवानाङ्घोषो देवानाञ्जयतामुदस्थात् ॥९॥
उद्धर्षय मघवन्नायुधान्युत्सत्वनां मामकानां मनांसि।
उद्वृत्रहन्वाजिनां वाजिनान्युद्रथानां जयतां यन्तु घोषाः ॥१०॥
अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु।

अस्माकं वीरा उत्तरे भवन्त्स्माँ उ देवा अवता हवेषु ॥११॥
अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि।
अभिप्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम् ॥१२॥
अवसृष्टा परा पत शरव्ये ब्रह्मसंशिते।
गच्छामित्रान्प्रपद्यस्व मामीषां कञ्चनोच्छिषः॥ (६/७५/१६)
प्रेता जयता नर इन्द्रो वः शर्म्म यच्छतु।
उग्रा वः सन्तु बाहवोऽनाधृष्या यथासथ॥(१०/१०३/१३)
असौ या सेना मरुतः परेषामभ्यैति न ओजसा स्पर्द्धमाना।
ताङ्गूहत तमसापव्रतेन यथामी अन्यो अन्यन्नजानन्॥
यत्र बाणाः सम्पतन्ति कुमारा विशिखा इव॥
तत्रा नो ब्रह्मणस्पतिरदितिः शर्म्म यच्छतु विश्वाहा शर्म्म यच्छतु।
(६/७५/१७)
मर्म्माणि ते वर्मणा छादयामि सोमस्त्वा राजामृतेनानु वस्ताम्।
उरोर्वरीयो वरुणस्ते कृणोतु जयन्तं त्वानु देवा मदन्तु॥" (६/७८/१८)

## (१६) युद्धयात्रा के प्रारम्भ में राजपुरुष अप्रतिरथ द्वारा अप्रतिरथसूक्त का उच्चारण

ऋग्वेद के दशम मण्डल के अध्याय संख्या १०३ में ऋषि इन्द्र-स्तुति करते हैं -

"शीघ्रता से शत्रुओं पर आक्रमण करने वाला, सर्वव्यापी, वृषभ के समान भयंकर, बलवान्, मनुष्यों को विचलित करने वाला, शत्रुओं को रुलाने वाला, सर्वदा चैतन्य और महान् वीर इन्द्र सैकड़ों सेनाओं को एक साथ जीतता है॥१॥

वह इन्द्र शत्रुओं को रुलाने वाला, सर्वदा चैतन्य, विजय की इच्छा करने वाला, युद्धशील तथा शत्रुओं से पराजित नहीं होने वाला है। उस इन्द्र की सहायता से विजय प्राप्त करो। हे युद्धप्रिय मनुष्यों ! वह इन्द्र हाथ में धनुष धारण करता है तथा बलवान् है।।२॥

वह इन्द्र धनुष और तलवार धारण करने वाले मरुतों के साथ रहता है। वह इन्द्र शत्रुसमूह में युद्ध के लिए प्रवेश करने वाला है। वह शत्रुओं को जीतने वाला, सोमपायी, बाहुबल से सम्पन्न, उग्र धनुर्धारी, फैंके हुए बाणों से शत्रु का नाश करता है॥३॥

हे बृहस्पते ! तू रथ से आगे बढ़। तू राक्षसों को मारने वाला है, अमित्रों का संहर्ता है, शत्रु की सेना को नष्ट करने वाला है, मारने वाला है और युद्ध में विजय प्राप्त करने वाला है। ऐसा वह बृहस्पति देव हमारे रथों की रक्षा करने वाला बने॥ ४॥

हे इन्द्र ! तू शक्ति को पहचानने वाला है, सबका जीवनाधार है, श्रेष्ठ वीर है, तेजस्वी है, अन्न से सम्पन्न है, वेगवान् है, शक्तिशाली शत्रु को भी पराजित करने वाला, वीरों

से घिरा हुआ, सेवकों से युक्त (सहोजाः गोवित्) उत्साह और गायों से युक्त है। ऐसा तू विजय दिलाने वाले रथ पर बैठ॥ ५॥

हे एकत्रित हुए वीरों ! मेघों को फाड़ने वाले, पर्वतों को फोड़ने वाले, वज्र हाथ में धारण करने वाले अथवा वज्र के समान भुजाओं वाले, युद्ध में विजय प्राप्त करने वाले, अपनी वीरता से शत्रुओं का संहार करने वाले इन्द्र की वीरता का अनुसरण करो। हे मित्रों ! इन्द्र का अनुसरण करके अपना कार्य करो ॥६॥

इन्द्र अपनी शक्ति से मेघों में प्रवेश करता है। वह इन्द्र शत्रुओं के लिए दयाहीन है, वीर, क्रोध करने वाला, विचलित न होने वाला तथा शत्रुसेना का संहार करने वाला तथा जिसके साथ कोई युद्ध नहीं कर सकता है, ऐसा वह इन्द्र युद्ध में हमारी सेना की रक्षा करें ॥७॥

इन्द्र इन समस्त सेनाओं का नायक है। अतः बृहस्पति, चतुर सेना, यज्ञ और सोम उसके आगे रहें तथा मरुत् शत्रु का संहार करने वाली, विजय प्राप्त करने वाली देवसेना के अग्र भाग में जावे ॥८॥

बलवान् इन्द्र का, राजा वरुण का, आदित्यों का, मरुतों का श्रेष्ठ बल हमें प्राप्त हो। महान् मनस्वी, तीनों लोकों को कंपित कर देने वाले सम्पूर्ण विश्व के संचालक, विजयी देवों की विजयध्वनि गूंज रही है॥ ९॥

हे मघवन् ! हमारे आयुधों को उत्साहित कर। मेरे वीर सैनिकों के मन को उत्साहित कर। हे वृत्रघ्न इन्द्र ! हमारी सेना के अश्वों का बल बढ़े। विजय प्राप्त कराने वाले रथों की ध्वनि गूंजे॥ १०॥

वह इन्द्र हमारी ध्वजा पताकाओं के एकत्रित हो जाने पर रक्षा करता है। जो हमारे बाणधारी सैनिक हैं, उनकी विजय हो। हमारे वीर सैनिक उत्तम कोटि के हों। हे देवों !युद्ध में हम सब की रक्षा करो ॥११॥

हे (अप्वे) पापाभिमानी देवता ! तू इन शत्रुओं के हृदय को मोहित करती हुई उनके शरीर के अंगों को पकड़ ले। इनके साथ तू दूर तक जा। तू इनकी तरफ आगे बढ़ती जा। इनके हृदयों में शोकाग्नि प्रज्वलित कर तथा इन अमित्रों को घोरतम अन्धकार में दुःखी कर" ॥१२॥ (१०/१०३/१-१२)

"हे तीक्ष्ण बाण ! तुझे ज्ञान द्वारा तीक्ष्ण बनाया गया है (मन्त्रप्रभाव से तीक्ष्ण किया गया है), अतः तू छोड़ा जाने पर जा और शत्रुओं पर जाकर गिर। इन समस्त शत्रुओं में से किसी को भी जीवित मत बचा ॥" (६/७५/१६)

"हे मनुष्यों (वीरों) तुम आगे बढ़ो और विजय प्राप्त करो। इन्द्र हमें प्रसन्न करे। तु उग्र होओ,जिससे तुम कभी पराजित न होओ ॥" (१०/१०३/१३)

यह जो मरुतों की सेना शत्रुओं से स्पर्धा करती हुई पराक्रमपूर्वक जा रही है, उस को अंधकार से दूर, ऐसे घरों को मिलाओं, जिससे वे एक दूसरे को पहचान न सकें।

"शिखारहित (अत्यन्त तीक्ष्ण) कुमारों के समान जहाँ बाण गिरते हैं, वहाँ उस युद्ध-भूमि में इन्द्र, बृहस्पति और अदिति हमें सुख प्रदान करें ॥" (६/७५/१७)

"कवच से तेरे समस्त मर्मस्थलों को आवृत करता हूँ। राजा सोम अपने अमरता के गुण से तेरे पास निवास करता रहे। वरुण तेरे लिए अच्छे से अच्छा अथवा श्रेष्ठ धन प्रदान करे। विजय प्राप्त करने के पश्चात् समस्त देव आनन्दित होवें ॥" (६/७५/१८) ॥

## (१७) नृमेधपुरुमेधौ बृहद्गानेन देवेन्द्रमभिष्टोतुं देवेन्द्रसहचारिणं प्रधानामात्यमिन्द्रतनूनपातं मरुद्गणं तावदभ्यर्थयेते।

८/८६ "बृहदिन्द्राय गायत मरुतो वृत्रहन्तमम्।
येन ज्योतिरजनयन्नृतावृधो देवं देवाय जागृवि ॥१ ॥
अपाधमदभिशस्तीरशस्ति हाथेन्द्रो द्युम्न्याभवत्।
देवास्त इन्द्र सख्याय येमिरे बृहद्भानो मरुद्गण ॥२ ॥
प्र व इन्द्राय बृहते मरुतो ब्रह्मार्चत।
वृत्रं हनति वृत्रहा शतक्रतुर्वज्रेण शतपर्वणा" ॥३ ॥

## (१७) नृमेध और पुरूमेध ऋषियों द्वारा बृहद्गान से देवेन्द्र की स्तुति करने के लिए देवेन्द्र के सहचारी प्रधानामात्य मरुद्गण, जो शरीरबल के रक्षक थे, की प्रार्थना

ऋग्वेद के ८/८९ में ऋषिद्वय स्तुति करते हैं -

"हे यज्ञवर्धक मरुतो ! जिस सामगान से तुमने सदैव देदीप्यमान रहने वाली ज्योति को उत्पन्न किया, उस शत्रुसंहर्ता बृहत् साम को उस इन्द्र देव के लिए गाओ ॥१ ॥

हे देदीप्यमान मरुद्गणों ! दुष्टों का नाश करने वाले इन्द्र ने समस्त शत्रुओं को मारा और वह तेजस्वी बना। हे इन्द्र देव ! सभी तेरी मित्रता की अभिलाषा से तेरे पास आते हैं ॥२ ॥

हे मरुतो ! उस महान् इन्द्र के लिए स्तोत्र गाओ। वह इन्द्र सैकड़ों कर्म करने वाला तथा वृत्र को मारने वाला है। वह इन्द्र तीक्ष्ण अथवा सैंकड़ों धार वाले वज्र से शत्रु के मारता है ॥ ३ ॥

## (१८) अथेन्द्राय तौ बृहद्गानं गायतः ।

अप्रतिरथे प्रयुक्ते मारुत्या सेनयेन्द्रमासक्तम् ॥
उपतस्थाते तु बृहद्गानं गातुं नृमेधपुरुमेधौ ॥१ ॥

८/८९ "अभिप्रभर धृषता धृषन्मनः श्रवश्चित्ते असद्बृहत् ॥
अर्षन्त्वापो जवसा वि मातरो हनो वृत्रं जया स्वः ॥४॥
यज्जायथा अपूर्व्य मघवन्वृत्रहत्याय ॥
तत्पृथिवीमप्रथयस्तदस्तभ्ना उत द्याम् ॥५॥
तत्ते यज्ञो अजायत तदर्क उत हस्कृतिः ॥
तद्विश्वमभिभूरसि यज्जतं यच्च जन्त्वम् ॥६॥
आमासु पक्वमैरय आ सूर्यं रोहयो दिवि।
धर्मं न सामन्तपता सुवृक्तिभिर्जुष्टं गिर्वणसे बृहत्" ॥७॥
८/९० आनो विश्वासु हव्य इन्द्रः समत्सु भूषतु ॥
उप ब्रह्माणि सवनानि वृत्रहा परमज्या ऋचीषमः ॥१॥
त्वं दाता प्रथमो राधसामस्यसि सत्य ईशानकृत् ॥
तुविद्युम्नस्य युज्या वृणीमहे पुत्रस्य शवसो महः ॥२॥
ब्रह्मा त इन्द्र गिर्वणः क्रियन्ते अनतिभ्दुता ॥
इमा जुषस्व हर्यश्व योजनेन्द्र या ते अमन्महिं ॥३॥
त्वं हि सत्यो मघवन्ननानतो वृत्रा भूरि न्यृञ्जसे ॥
स त्वं शविष्ठ वज्रहस्त दाशुषेऽर्वाञ्चं रयिमा कृधि ॥४॥
त्वमिन्द्र यशा अस्यृजीषी शवसस्यपते ॥
त्वं वृत्राणि हंस्यप्रतीन्येक इदनुत्ता चर्षणीधृता ॥५॥
तमु सुत्वा नूनमसुर प्रचेतसं राधो भागमिवेमहे ॥
महीव कृत्तिः शरणा त इन्द्र प्रते सुम्ना नो अश्नवन्" ॥६॥

## (१८) तदनन्तर उन दोनों द्वारा इन्द्र के लिए बृहद्गान का गायन

अप्रतिरथ स्तुतिगान के होने के पश्चात् नृमेध और पुरूमेध बृहद्गान गाने के लिए उपस्थित हुए ॥१॥

ऋग्वेद के ८/८९ में दोनों ऋषियों द्वारा गाई गई स्तुति उद्धृत है :-

"हे दृढ़ मन वाले इन्द्र ! जो तेरा श्रेष्ठ अन्न है, उस श्रेष्ठ अन्न को अपने शक्तिशाली मन से खूब (अधिक मात्रा में) प्रदान कर। हे इन्द्र ! तू वृत्र को मारकर जलों को जीत, जिससे माता के समान ये जल वेग के साथ प्रवाहित होंवे ॥ ४ ॥

हे अपूर्व ऐश्वर्यशाली इन्द्र ! तूने वृत्र नाम के असुर को मारने के लिए अपने जिस शौर्य को प्रदर्शित किया था, उसी शौर्यबल से इस पृथिवी को विस्तृत किया तथा उसी बल से द्युलोक को स्थिर किया ॥ ५ ॥

हे इन्द्र ! वह यज्ञ तेरे लिए हुआ और वे वषट्कारपूर्वक मन्त्र भी तेरे लिए ही बोले गये। इस सम्पूर्ण विश्व में जो कुछ उत्पन्न हुआ है अथवा जो कुछ होने वाला है, वह सम्पूर्ण विश्व हे इन्द्र ! तेरे ही अधिकार में है ॥ ६ ॥

हे इन्द्र ! तूने गायों में पौष्टिक दुग्ध को स्थापित किया है और इस द्युलोक में सूर्य को स्थापित किया। हे मनुष्यों ! जिस तरह प्रवर्ग्य याग को वर्धित किया जाता है, उसी तरह इस इन्द्र को भी बृहत् नामक प्रिय लगने वाले सामगान से तथा उत्तम स्तोत्रों से बढ़ाओ ॥ ७ ॥ (८/८९/४-७)

"वह इन्द्र वृत्र को मारने वाला, श्रेष्ठ धनुष की प्रत्यंचा वाला, सोमपान करने वालों में सर्वश्रेष्ठ तथा समस्त युद्धों में आहूत करने योग्य है, वह ब्रह्म नामक मन्त्रों को तथा यज्ञों को अलंकृत करे ॥ १ ॥

हे इन्द्र ! तू सर्वश्रेष्ठ धन का दान देने वाला है। तू सत्यस्वरूप तथा सबका शासक है। हम अत्यन्त ऐश्वर्यवान्, तेजस्वी, बल के पुत्र और महान् इन्द्र से उसके देने योग्य धन की कामना करते हैं ॥ २ ॥

हे स्तुति करने योग्य, घोड़ों से युक्त इन्द्र देव ! जो अत्यन्त अद्भूत नहीं है, ऐसे ब्रह्म नाम के साम को मननपूर्वक गाते हैं, तदनुरूप कार्य करते हैं, अतः हे इन्द्र ! तू उन योजनाओं का पालन कर ॥ ३ ॥

हे ऐश्वर्यवान् इन्द्र ! तू सत्यस्वरूप है, अतः कोई शत्रु तुझे झुका नहीं सकता है, तू (अपनी विपुल शक्ति से) बहुत से वृत्रों (शत्रुओं) का संहार करता है। हे शूरवीर और वज्रधारी इन्द्र ! तू दान देने वाले के लिए समृद्धि को उसकी ओर प्रेरित करता है ॥ ४ ॥

हे देवों के स्वामी अथवा बलों के अधिपति इन्द्र ! तू यशस्वी तथा सोमपान करने वाला है। तू अकेला ही वज्र को धारण करते हुए अपराजेय तथा कभी युद्ध से पलायन न करने वाले शत्रुओं को भी मार देता है ॥ ५ ॥

हे (असुर) प्राणों की रक्षा करने वाले इन्द्र ! हम अपने हिस्से के समान तुझ बुद्धिमान् इन्द्र से धन की कामना करते हैं। हे इन्द्र ! तुझसे हम तेरे समस्त प्रकार को सुखों को मांगते हैं, क्योंकि तेरी शरण हमारे लिए एक महान् कवच (रक्षासाधन) के समान है ॥ ६ ॥ (८/९०)

## (१९) निषधात् प्रस्थितेनेन्द्रेण आदौ सरयुपारस्थमार्य्यराजद्वयं निहतम्।

**निषधाद्रिगिरेः प्रतस्थे मारुत्या देवसेनया च सह।**
**महतोत्साहेनेन्द्रोऽश्विविष्णुयुक् कुत्सयुग् बृहस्पतियुक् ॥१॥**
**दस्यूनिन्द्रो हन्तुं शैलानेवाभियातुकमोऽपि।**

मध्ये मार्गं प्रथमं द्वावार्यौ प्रतिययौ हन्तुम् ॥२॥
आर्य्याविमौ नरेशावार्य्यकुलध्वंसनोपायान्।
परिदर्शयतस्तेषां दासानां प्रेमवशभूतौ ॥३॥
इत्याकर्ण्य स इन्द्रः प्रथमं तावेव धर्षितुं चकमे।
रुग्भैषज्यात्पूर्वं रुक्प्रभवोत्सादनं श्रेयः ॥४॥
सरयोः सरितः पारे क्वचिदार्यावर्णचित्ररथौ।
भूपो वसतः स्मैतौ दाससखौ तद्धितप्रवणौ ॥५॥

## (१९) निषध से प्रस्थान करने से पूर्व इन्द्र ने सरयु पार स्थित दो आर्यो का संहार किया

निषधाद्रि पर्वत ठहरने के पश्चात् मारुति सेना के (देवसेना के) साथ बड़े उत्साह से इन्द्र ने अश्वि, विष्णु, कुत्स और बृहस्पति के साथ प्रस्थान किया ॥१॥

इन्द्र ने दस्युओं को मारने के लिए पर्वतों पर ही जाने का इच्छुक होते हुए भी मध्य मार्ग में दो आर्यों को मारने के लिए प्रतिदान (विरुद्ध गमन) किया, क्योंकि ये दोंनो आर्य राजा दासों के प्रेम के वशीभूत होकर उनको आर्यों के नाश का उपाय दिखाते थे ॥२-३॥

यह सुनकर इन्द्र ने पहले उन्हीं आर्यों का ध्वंस करने की इच्छा की क्योंकि रोग की चिकित्सा से पूर्व रोग की उत्पत्ति के कारणों को नष्ट करना श्रेयस्कर होता है ॥४॥

सरयू नदी के पार कहीं अर्ण और चित्ररथ नाम के दो आर्य राजा थे, जो दस्युओं के मित्र थे और वे उनके हितसाधन में रत थे ॥५॥

## (२०) सरयुनदीपरिचयः।

आत्रेयः श्यावश्वः सरयुं सह पठति सिन्धुना कुभया।
क्रुम्वाथगयः प्लातोऽपि सिन्धुनापि च सरस्वत्या ॥१॥
"मावोरसाऽनितभा कुभा क्रुमुर्मावः सिन्धुर्निरीरमत।
मावः परिष्ठात् सरयुः पुरीषिण्यस्मे इत् सुम्नमस्तुवः॥ (५/५३/९)
सरस्वती सरयुः सिन्धुरुर्मिभिर्महो महीरवसा यन्तु वक्षणीः।
देवीरापो मातरः सूदयित्वो घृतवत्पयो मधुमन्नो अर्चत"॥ (१०/६४/९)
एतेनेयं सरयुः सिन्धुगता काचिदन्तरिक्षेऽस्ति।
न तु साऽयोध्याप्रान्तस्थिता श्रुता कुत्रचिद्वेदे ॥ २॥
तक्षशिलानगरी तलवहना या सिन्धुसंगमना।
सा सरयुरिति सत्यव्रताख्यसामश्रमी प्राह ॥ ३॥

अपरे त्वेतां सरयुं हिन्दुकुशपर्वतप्रभवाम्।
प्राहुस्तथाहि तस्याः परिचयमित्थं विजानीयात् ॥ ४ ॥
वेदे यक्षुर्योक्ता चक्षर्जम्बूश्च सा पुराणोक्ता।
'अक्सस'-इति तां म्लेच्छा आहु 'रमू' इति च तामाहुः ॥ ५ ॥
तस्या दक्षिणकूले यक्ष: पू 'रोक्सियाना' ख्या।
तद्देशस्था उक्ता यक्षव इति वेदमन्त्रे प्राक् ॥ ६ ॥
एतानेव तु पश्चान्म्लेच्छा विदु 'रोक्सियानी' ति।
यक्षव आर्य्या आसन् पश्चान्म्लेच्छा बभूवुस्ते ॥ ७ ॥
यक्षुष उदक् तु शिग्रुर्नदी 'सुगद' उच्यते म्लेच्छैः।
यक्षुषि सैति च सुगदप्रान्तोयं 'सुगदियाना' ख्या ॥ ८ ॥
सुगदनदी यद्गिरितः प्रवहति 'सुगदी' स पर्वतः कथितः।
तद्गिरिशिखरे स ऋषिर्मार्कण्डेयः पुरायुगे न्यवसत् ॥ ९ ॥
अथ 'हिन्दुकुश'-'सुगदानिया' न्तरे यक्षुषोऽवाच्याम्।
प्रान्तोस्ति वक्द्रियाना हिन्दूकुशजा नदीह 'दर्गिदुसा' ॥ १० ॥
वाह्लीक एव 'वक्ट्रा' नाम्नाख्यातः पुरा म्लेच्छैः।
स च वाह्लीकप्रान्तस्तैरुक्तो 'वक्ट्रिया' नाम्ना ॥ ११ ॥
शैलद्वयान्तराले प्रवहन्त्युत्तरमुखी तु 'दर्गिदुसा'।
तृत्सुः सा तत्प्रान्ते 'जरियस्या' सैव 'वक्ट्रा' पूः ॥ १२ ॥
प्रान्तोस्ति 'मार्गियाना' पश्चिमतो 'वक्ट्रिया' प्रान्तात्।
तत्र च हिन्दूकुशजा 'मरग्युसो' दङ्मुखी नदी वहति ॥ १३ ॥
४-योऽर्वाक् तु मार्गियानाप्रान्ताद् हिन्दूकुशोऽस्य दक्षिणतः।
उद्भूय पश्चिमां प्रागथोत्तरामनु तु या नदी वहति ॥ १४ ॥
प्राक्सीम्नि 'हरसियाना' प्रान्तस्यौ 'च्छुस' नदीन्तु यान्वेति।
या च 'सरीफी' पर्वतपश्चिमपार्श्वानुगोत्तरां याति ॥ १५ ॥
'अरियुस' नदी तु सोक्ता सरयुः स्यात् सा नदी वेदे।
दक्षिणतोऽस्या: प्रान्त: प्रथते वा एरियानेति ॥ १६ ॥
प्रागेतदेरियानाप्रान्तात् प्रत्यक्तटे सुलेमानात्।
प्रान्तो य इण्डियाख्यस्तत्र वसन्ति स्म भारतीयाः प्राक् ॥ १७ ॥
फरहनदीनिर्गमने पारस्यानां तु 'पर्सिया' नगरी।
तस्या उत्तरतः सा सरयुर्या 'मरियुसं' प्राह ॥१५॥

# (२०) सरयु नदी का परिचय

आत्रेय श्यावश्व कुभा नदी के साथ सरयु का उल्लेख करते हैं। क्रुमु और गय नामक जो झरना है, उसका सिन्धु, और सरस्वती के साथ किया है ॥ १ ॥

ऋग्वेद में वर्णन है - "हे वीर मरुत् ! तुम्हें तेजोहीन और मलिन रसा नामक नदी रममाण न करे तुम्हें क्रुमु (वेगपूर्ण) सिन्धु नदी बीच में ही न रोक दे, जल से परिपूर्ण सरयु नदी न घेर लेवे । हमें ही तुम्हारा सुख प्राप्त हो।" (५/५३/९)

"महती, पूज्य और तरंगशालिनी सरयु, सरस्वती और सिन्धु आदि बहने वाली इक्कीस नदियाँ हमारी रक्षा के लिए आवें और माता-सदृश और जलप्रेरक सुन्दर देवी हमें घृतयुक्त, पुष्टिदायक और मधुर जल प्रदान करें ॥" (१०/६४/९)

यह सरयु नदी अंतरिक्ष में कहीं सिन्धु नदी के पास थी वेद में कहीं अयोध्या प्रांत में स्थित सरयु नदी का उल्लेख नहीं सुना गया है॥ २ ॥

तक्षशिला नगरी के तल में बहने वाली और सिन्धु नदी में मिलने वाली सरयु नदी है, ऐसा सत्यव्रत नाम के सामश्रमी ने कहा है॥ ३ ॥

दूसरे लोगों ने इस सरयु नदी को हिन्दुकुश पर्वत से उत्पन्न बताया है, इसी प्रकार उसका परिचय यही जानना चाहिए॥ ४ ॥

वेद में जो यक्षु नाम की नदी कही गयी है, वहीं पुराणों में चक्षु और जम्बु नाम से कही गई है। म्लेच्छों ने उसे "अक्सस" और "रमू" कहा है॥ ५ ॥

उसके दक्षिणी तट पर यक्षपू नाम की नगरी, जो "रोक्सियानों" नाम से कहा। ये यक्षु आर्य थे, जो बाद में म्लेच्छ हो गए॥७ ॥

इस यक्षु के उत्तर दिशा में शिगु नाम की नदी थी जिसे म्लेच्छों द्वारा "सुगद" नाम से कहा गया है। यह नदी यक्षु नगरी में थी, और सुगध प्रांत "पुगदियाना" नाम से कहा जाता है॥ ८ ॥

यह सुगध नदी जिस पर्वत से निकलती है उस पर्वत को "सुगदी" पर्वत कहा जाता है। उसी सुगदी पर्वतशिखर पर प्राचीन समय में ऋषि मार्कण्डेय निवास करते थे॥९ ॥

हिन्दुकुश और सुगदियाना के बीच यक्षु के दक्षिण में वक्ट्रियाना नाम का प्रान्त है और हिन्दुकुश से उत्पन्न होने वाली "दर्गिदुसा" नाम की नदी भी यहीं है॥ १० ॥

बाह्लीक को ही म्लेच्छों ने पुराकाल में "वक्ट्रा" नाम से कहा है और वह बाह्लीक प्रान्त उन म्लेच्छों द्वारा "वक्ट्रिया" नाम से कहा गया है॥ ११ ॥

दो पर्वतों के बीच बहती हुई "दर्गिदुसा" नाम की उत्तरमुखी नदी है, उसी का नाम "तृत्सु" है और उस प्रांत में "जरियस्या" नगरी है, वही "वक्ट्रा" नाम की नगरी है ॥१२ ॥

इस वक्ट्रिया प्रान्त से पश्चिम में मार्गियाना नाम का प्रान्त है, वहाँ हिन्दुकुश पर्वत से उत्पन्न उत्तरमुखी मरग्र्युसा नाम की नदी बहती है॥ १३ ॥

मार्गियाना प्रान्त से पहले जो हिन्दूकुश पर्वत है, उसके दक्षिण भाग से उत्पन्न होकर पश्चिम और पूर्वोत्तर दिशा में जो नदी बहती है (वहाँ प्राचीनकाल में भारतीय निवास करते थे)॥ १४ ॥

"हरसियाना" प्रान्त की पूर्वी सीमा पर जो "उच्छुस" नाम की नदी मिलती है, और जो "सरीफी" पर्वत के पश्चिमी पार्श्व भाग से जाती है, वह "अरियुस" नदी कही गई है और वही वेद में सरयु नाम से कही जा सकती है, इसका दक्षिणी प्रान्त "एरियाना" नाम से प्रसिद्ध है॥ १५-१६ ॥

इस एरियाना प्रान्त से पूर्वी तट पर और सुलेमान पर्वत से पश्चिमी तट पर जो प्रान्त है, वह "इण्डिया" नाम का प्रान्त है और वहाँ प्राचीन समय में भारतीय लोग निवास करते थे॥ १७ ॥

फरह नदी के निर्गमस्थल में पारसियों की परसिया नाम की नगरी थी, उसके उत्तर में वह सरयु नदी थी जिसे "मरियुस" कहा गया है॥ १८ ॥

## (२१) अर्णचित्ररथयोः स्वजातिविद्वेषो वधे हेतुः ।

**तस्याः सरयोः परितस्तावार्य्यावर्णचित्ररथौ ।**
**कुत्साद्यार्यगृहाणां परिस्थितिं दस्युषु स्म सूचयतः ॥१ ॥**
**तस्मादार्य्यावेव तु समूलघातं जघान स प्रथमम् ।**
**इति वामदेव ऊचे तुर्यस्य त्रिंशके सूक्ते ॥२ ॥**
**"उत त्या सद्य आर्य्या सरयोरिन्द्र पारतः ।**
**अर्णोचित्ररथावधीः ॥ (ऋ. ४/३०/१८)**

## (२१) अर्ण और चित्ररथ का अपने जातीय-विद्वेष के कारण वध (अर्ण और चित्ररथ के वध में उनका जातीय विद्वेष कारण था)

उस सरयु के चारों ओर अर्ण और चित्ररथ नाम के आर्य राजा थे, वे कुत्स आदि आर्यों की गृहपरिस्थिति की दस्युओं को सूचना दे देते थे॥ १ ॥ इसलिए सर्वप्रथम इन दोनों आर्यों को ही समूल नष्ट करके मार दिया, ऐसा वामदेव ने चतुर्थ मण्डल के तीसवें सूक्त में कहा है॥ २ ॥

ऋग्वेद में - "हे इन्द्र ! उन आर्य राजाओं ने सरयु के पार रहने वाले अर्ण और चित्ररथ को तत्काल मार दिया । (४/३०/१८)

## (२२) सरस्वतीप्रान्तवासिचित्रराजापेक्षया सरयुप्रान्तवासिनश्चित्ररथस्य भिन्नत्वम्।

**यं सोभरिस्तु काण्वो दातारं भूरि तुष्टाव।**
**सोऽन्यश्चित्रो राजा सरस्वतीतटेऽवसन्नृपप्रवरः ॥१॥**
**इन्द्रो वा घेदयन्मघं सरस्वती वा सुभगा ददिर्वसु।**
**त्वां वा चित्र दाशुषे॥ २॥**
**चित्र इद् राजा राजका इदन्यके यके सरस्वतीमनु।**
**पर्जन्य इव ततनद्धि वृष्ट्या सहस्रमयुता ददत्॥"(८/२१/१७-१८)**

## (२२) सरस्वतीप्रान्त के निवासी चित्रराज की अपेक्षा सरयुप्रान्तवासी चित्ररथ की भिन्नता

कण्ववंशज सोभरि ने जिस दाता की बहुत प्रशंसा की है, वह चित्र नाम का राजा अन्य ही श्रेष्ठ राजा था, जो सरस्वती नदी के किनारे रहता था ॥१॥

"सरस्वती नदी के किनारे जो अनेक राजा हैं, वे वस्तुतः अपने ओज से दीप्त और दर्शनीय है। शोभनीय उस इन्द्र ने पर्जन्य की भांति वृष्टि से उसे बांध दिया। इन्द्र ने हजारों (अतुलनीय) दान दिये ॥२॥

इन्द्र ने हवियों की आहुति देने वाले ऋत्विज को यह धन प्रदान किया। (उस इन्द्र का अनुगमन करते हुए) सौभाग्य प्रदान करने वाली सरस्वती ने यह दर्शनीय धन प्रदान किया ॥३॥ (८/२१/१७-१८)

## (२३) अर्णचित्ररथयोर्गन्धर्वत्वम्।

**अर्णश्चित्ररथो वा मन्ये स्यातामिमौ तु गन्धर्वौ।**
**मन्ये तद्वधमेव त्वकीर्तयत्कुरुसुतिः काण्वः ॥१॥**
**"अभि गन्धर्वमतृणदबुध्नेपु रजःस्वा।**
**इन्द्रो ब्रह्माभ्य इद्वृधे"॥२॥ (ऋ ८/७७/५)**

## (२३) अर्ण और चित्ररथ दोनों का गंधर्व होना

अर्ण और चित्ररथ दोनों गंधर्व थे, ऐसा मेरा, मानना है और मैं मानता हूँ, कि कण्वपुत्र "कुरुसुति" ने जिसके वध का कीर्तन (वर्णन) किया है वे दोनों ये ही गंधर्व थे॥१॥ ऋग्वेद में - इन्द्र ने ज्ञानियों को सम्पन्न करने के लिए निराधार लोकों में स्थित गंधर्वों को चारों ओर से मार डाला॥ २॥ (८/७७/५)

## (२४) ततः सप्तदस्युराजराष्ट्राभिक्रमणम्।

अञ्जस्याद्या दुस्तरा आपगाया आसंतासां पारमासाद्य कष्टात्।
दस्युग्रामान् वीर आक्रम्य हत्वा काँश्चित् कांश्चिज्जीवतोपि न्यगृह्णत्।।१ ।।
सप्तभ्योऽशत्रुभ्यः शत्रुरभूदिन्द्र एष यानवधीत्।
कुयवं शुष्णं शंबरमहिबंगृदरौहिणान् कृष्णम्।। २ ।।
एषां भुवनान्यासन् सप्तानां सप्तभिन्नतन्त्राणि।
गणनागासुरभेदादेते सङ्कीर्णजातिका दासाः।। ३ ।।
अहिरत्र नाग आसीदसुराः कृष्णश्च रौहिणो नमुचिः।
अपरेऽपगणा वृत्त्या दस्यव एतेऽसुरानुगा अभवन्।। ४ ।।

## (२४) सात दस्यु राजाओं के राष्ट्रों पर अभिक्रमण

अंजसी आदि जो दुस्तुर नदियों के अत्यन्त कठिनाई से पार आकर उन दस्युओं के समूहों को पराक्रमपूर्वक आक्रमण करके मार दिया और कुछ को जीवित ही निगृहीत कर लिया।। १ ।।

सात दस्यु - कुयव, शुष्ण, शंबर, अहि, बंगृद, रौहिण और कृष्ण जो अशत्रु (सर्वविजेता होने के कारण जिनका कोई शत्रु नहीं था) थे, उनका यह इन्द्र शत्रु हो गया, जिनको इसने मार डाला ।।२ ।।

इस सातों दस्युओं के सात अलग-अलग स्वतंत्र भुवन थे और ये दस्युगण, नाग और असुर भेद से संकीर्ण जाति के दास थे ।।३ ।।

इनमें अहि नाम का दैत्य नाग था, कृष्ण, रौहिण, नमुचि असुर थे और अन्य दस्यु अपगण थे, जो वृत्ति के असुर थे और असुरों के अनुयायी हो गये थे ।।४ ।।

## (२५) पर्वतयात्रायां रासभरथादयः परिकराः।

रासभरथेन चेन्द्रो दस्युविदासाय पर्वतप्रान्ते।
अचरद् विष्णुसहायः स बृहस्पतिरन्वितोऽश्विभ्याम्।। १ ।।
हरयः पृष्ठानुचरा दश तु शतानीन्द्रमेतमनुचेरुः।
मारुत्या सेनया भागत्रयमत्र सह भेजे।। २ ।।
हरिभिः सहस्रसंख्यैर्हरिवानुक्तः सहस्राक्षः।
स मरुद्भिस्तु मरुत्वान् न विना हरिभिर्मरुद्भिः सः ।।३ ।।
द्वौ तु हरी इन्द्राश्वौ खे भुवि चाभ्यामयं चरति।
याति गिरीणां विषमं शृङ्गाच्छृङ्गान्तरं ताभ्याम् ।।४ ।।

## (२५) पर्वतयात्रा में गधों के रथ आदि की परिचर्चा

इन्द्र रासभ-रथ से पर्वत प्रान्त में दस्युओं का नाश करने के लिए विचरण करते थे। अश्वियों के साथ विष्णु का सहायक बृहस्पति विचरण करता था ॥१ ॥

पीछे चलने वाले एक हजार घोड़े इस इन्द्र का अनुगमन करते थे तथा मारुति सेना के तीन भाग यहाँ इनके साथ-साथ थे ॥२ ॥

एक हजार संख्या के घोड़ो के साथ होने के कारण इन्द्र (सहस्राक्ष) हरिवान् कहा जाता था, मरुतों के साथ वह मरुत्वान् कहा जाता था तथा वह हरि और मरुतों के बिना नहीं रहता था ॥३ ॥

इन्द्र के हरी (दो हरि) नाम के दो घोड़े थे, जिनसे वह पृथिवी और अंतरिक्ष में भ्रमण करता था, विषम पर्वतों की एक चोटी से दूसरी चोटी पर इन्हीं अश्वों से जाता था ॥४ ॥

## (२६) रौहिणासुरनिपातः।

**दस्युकुलध्वंसायाभिक्रममाणं निशम्य देवेन्द्रम्।**
**स्वर्गं रिक्तं मत्वा तं जेतुं रौहिणश्चक्रमे ॥१ ॥**
**तं द्यामारोहन्तं सत्वरमाक्रम्य रौहिणं परितः।**
**निजघान वज्रहस्तो देवेन्द्रः कम्पयन् दासान् ॥२ ॥**

## (२६) रोहिण नाम के असुर का पतन

दस्यु कुल का ध्वंस करने के लिए अभिक्रमण करते हुए, देवेन्द्र के सम्बन्ध में सुनकर रोहिण नाम के असुर ने स्वर्ग को रिक्त मान कर उसे जीतने का विचार किया ॥१ ॥

वज्र-हस्त देवेन्द्र ने स्वर्ग पर आरोहण करते हुए रोहिण को चारों ओर से आक्रमण करके दस्युओं को कम्पित करते हुए मार दिया ॥२ ॥

## (२७) अहिनिर्य्यातनम्।

**आसन् केचित् पर्वतास्तत्र दस्युग्रामो वासाऽध्वादि निर्गूहतेऽलम्।**
**तेषामन्तः क्वापि शैलस्य गर्भे दासग्र्योऽहिर्नागवंशोऽध्यवात्सीत् ॥१ ॥**
**अहिरयमसुरः कुयवप्रभृतीनां दासमुख्यानाम्।**
**साहाय्येन कदाचित् सिन्धोः स्रोतोऽवरोधनं चक्रे ॥२ ॥**
**सिन्धोः सप्तस्रोतांस्यन्यान्यग्रावगह्वरोद्भेदात्।**
**तेषां यमदिग्वाहीन्ययनान्युपरोधयाञ्चक्रे ॥३ ॥**

शैलद्रोण्यामद्रिद्वययोगेन पथि संकीर्णे।
स्थूलोपलैः प्रपातैः प्रचितैः स्रोतांसि रुद्धानि ॥४॥
गिरिकुलगह्वरभागाः सर्वेऽप्यभवन् पयोभिराकीर्णाः।
ओघः समुद्रवद्भूदुर्गैः कूटैरितस्ततः प्रचितः ॥५॥
वंक्षण्यो याः सरितामद्रीणां याश्च वंक्षणा आसन्।
तत्रापां बिलमखिलं प्रस्तरखण्डैर्निरोधयामासुः ॥६॥
स्रोतःसृत्यवरोधे रक्षार्थं दासपत्न्योऽग्र्याः।
आसंस्तत्र नियुक्ता निरीक्षका यामिका बहवः ॥७॥
तत्र च पयःप्रसारेऽन्तरीपदेशे विशालशैलस्य।
अधरशिलाविस्फोटात् तिर्य्यग्विवरं चकार दूरतरम् ॥८॥
जलमयमन्तर्विवरं प्लवगम्यं तत्परं तमसा।
छन्नं वर्त्म ततस्तद्विशति गिरेरुदरमत्यजिरम् ॥९॥
तत्र च विविधाः शाला राजगृहाण्यपि, गृहाणि भृत्यानाम्।
दृषदुत्किरणात् सिद्धान्यत्र च भाः शिखरविवरेभ्यः ॥१०॥
इत्थं पर्वतगर्भे दृषदुद्धरणान्महाजिरे जाते।
सिद्धेष्वनेकसदनेष्वहिरण्यमाशेत संवृतोऽम्भोभिः ॥११॥
अम्भसि पर्वतगर्भे तमसाक्रान्ते बिलेशयः सोऽहिः।
लोकान् दष्ट्वा दृष्ट्वा गिरिकुहरेह्योष्ट दुष्ट आत्मानम् ॥१२॥
"समुद्रे अन्तः शयत उद्ना वज्रो अभीवृतः।
भरन्त्यस्मै संयतः पुरःप्रस्रवणा बलिम्" ॥(८/१००/९)
इन्द्रस्तेषां पर्वतानां च पक्षांश्छित्वाक्रम्योद्बोधयामास सुप्तम्।
अत्युग्राहिं तं जघानाद्रिभेदात्तस्मादापोऽगुः समुद्रं सरस्तः ॥१३॥
शैलद्रोण्यां वंक्षणाख्या अपां ये बन्धा आसन् दासपत्नीप्रगुप्ताः।
ते च ध्वस्ताः शैलपक्षावभेदादापः सर्वाः सप्तसिन्धुष्वगुस्ताः ॥१४॥
सगरो नामस्थानं तदन्तरिक्षं यतो मूलात्।
सिन्धोः सप्तस्रोतांस्युन्मोच्यावाहयत् सिन्धौ ॥१५॥
तत्र प्रान्ते पर्वतश्रेणिबन्धे संरुद्धानां तर्ह्यपां भूयसीनाम्।
शैलोद्भेदात् स्रोतसाऽभूद् 'वितस्ता' भूमिप्रान्ते सिन्धुवारां प्रसारः ॥१६॥
तत्रैकहेलयाऽपामोघविसारे पुराऽवरुद्धानाम्।
क्वासां मूलं मध्यं वाऽन्तो वेत्यवगमे जनः मुमुहुः ॥१७॥

# (२७) अहि-निर्य्यातन

कुछ पर्वत थे, जहाँ दस्युओं का समूह पूरी तरह छिप जाता था। उनके बीच किसी पर्वत के गर्भ में दासराज अहि, जो नागवंशी था, निवास करता था ॥१ ॥

इस अहि नाम के असुर ने कुयव आदि दास मुख्यों की सहायता से सिन्धु नदी के प्रवाह को किसी समय अवरुद्ध कर दिया था ॥२ ॥

विभिन्न पाषाण-खण्डो की कन्दराओं को उखाड़ने से सिन्धु के सात स्रोत बहते थे, जिनमें दक्षिण दिशा में बहने वाले स्थानों को (सिन्धु के प्रवाह स्थलों को) रोक दिया था ॥३ ॥

उस पर्वत की द्रोणि में दो पर्वतों के योग से संकीर्ण हुए मार्ग में बड़े-बड़े पत्थरों के समूह को एकत्रित करके, सिन्धु के स्रोतों को अवरुद्ध कर दिया गया था। ।४ ॥

उस पर्वतसमूह के समस्त कन्दराभाग जल से परिपूर्ण हो गए तथा वह ओघ (जलसमूह) इधर-उधर भारी मात्रा में एकत्रित होकर (फैल कर) समुद्र के समान हो गया ॥५ ॥

नदियों की जो गुफाएँ थीं, पर्वतों के जो गह्वर थे, वहाँ जल के समस्त बिलों (मार्गों) को वे दस्यु विशाल पाषाणखण्डों से रोक देते थे ॥६ ॥

उन स्रोतों के मार्गावरोध में रक्षा के लिए दासपत्नियाँ अग्रणी थीं, तथा यहाँ अनेक निरीक्षक प्रहरी नियुक्त थे ॥७ ॥

वहाँ जलप्रसार में उस विशाल पर्वत के अन्तरीप देश में नीचे की शिलाओं के विस्फोट से दूर तक एक तिरछा विवर (खाई) बन गया ॥८ ॥

जल से परिपूर्ण वह अन्तर विवर (अन्दर की गहरी विवर) तैर कर पार करने योग्य था, उसके आगे घोर अंधकार युक्त मार्ग उस गिरि के अन्त:प्रांगण में पहुँचता था ॥९ ॥

वहाँ अनेक शालाएँ, राजगृह, सैनिकों के निवासगृह बने हुए थे, जो पत्थरों को उत्कीर्ण कर के बनाए गए थे तथा जिनमें पर्वतशिखर के विवरों (छिद्रों) से प्रकाश पहुँचता था ॥१० ॥

इस प्रकार पर्वत के गर्भ में पत्थरों को उत्कीर्ण करके विशाल प्रांगण में बनाए हुए अनेक भवनों में, जो जल से घिरे हुए थे, वह अहि नाम का असुर रहता था ॥११ ॥

वह अहि नाम का असुर जल में पर्वत के गर्भ में अंधकार से आक्रांत बिल (गुफा) में रहने वाला था और लोकों (लोगों) को देख-देख कर वह दुष्ट स्वयं को गिरि-कुहर (पर्वत की गुफाओं) में छिपा लेता था ॥१२ ॥

ऋग्वेद में - "इन्द्र का वज्र जल से घिरे हुए समुद्र के बीच स्थित है, उसके भय से युद्ध में सामने से भागने वाले शत्रु, इस वज्र के लिए अथवा इन्द्र के लिए बलि अर्पित करते हैं।(८/१००/९)

इन्द्र ने उन पर्वतों के पक्षों को काटकर आक्रमण करके सोते हुए, अत्यन्त उग्र अहि को जगाया और उसका संहार कर दिया। उस पर्वत को तोड़ने से सरोवर का जल समुद्र में चला गया ॥१३ ॥

पर्वत की द्रोणि, में "चक्षण" नाम के जो जलबंध दासपत्नियों द्वारा सुरक्षित थे, वे पर्वत के पक्षों का भेदन करने से नष्ट हो गए और उनका सम्पूर्ण जल सप्त-सिन्धु में चला गया ॥१४ ॥

वह अन्तरिक्ष में सगर नाम का स्थान है, जिसके मूल से सातों स्रोतों को तोड़कर सिन्धु (नदी) का जल समुद्र में प्रवाहित कर दिया गया (यहाँ अंतरिक्ष से तात्पर्य भौम - त्रिलोकी के अंतरिक्ष से है) ॥१५ ॥

उस पर्वतप्रांत में पर्वतश्रेणी के बंध में अवरुद्ध बहुत से जलों का पर्वत के तोड़ने से जो स्रोत बना, उससे भूमि-प्रान्त में "वितस्ता" नाम की नदी के जल का प्रसार होने लगा ॥१६ ॥

वहाँ एक ही बार में पहले से रोके हुए जलों के ओघ के विस्तार में इनका उद्‌गम मध्य और अन्त कहाँ है ? यह समझने में लोग भ्रमित हो गए ॥१७ ॥

## (२८) शंबरहत्यम्।

**प्रस्तोकाख्यः सृञ्जयपुत्रः कथितो दिवोदासः।**
**'अतिथिग्व'श्व स एवाश्वथ उक्तो गर्गयजमानः ॥१ ॥**
**'अतिथिग्वं तु 'कशोजुव' मपीडयच्छंबरो दिवोदासम्।**
**अश्विभ्यां मयमिन्द्रस्तमरक्षच्छंबरं हत्वा ॥२ ॥**
**अतिथिग्वशत्रुशंबरनिग्रहणायेन्द्र आदिशत् पूर्वम्।**
**तद्भयतो गिरिगह्वरतमसि पयःसंवृतः सोऽस्थात् ॥३ ॥**
**अत्युच्चपर्वतोपरि गृहमासीत् किञ्चिदस्यान्तः।**
**अवरोहणसोपानेऽभूदवतरितं तु कंदरद्वारम् ॥४ ॥**
**उत्कीर्णाश्मकृताजिरमासीदुदरं गिरेस्तत्र।**
**अन्तर्विविधाः शाला आसन् वर्त्मानि चत्वराणि सरः ॥५ ॥**
**आरुह्यादौ शिखरं गृहान्तरद्वारमासाद्य।**
**अवरोहणसोपानेनावतरन् विंशति गह्वारायतने ॥६ ॥**
**इत्थं सोतिनिगूढं सुरक्षितं दुर्गमाश्रित्य।**
**इन्द्रनियुक्तैश्चारैरलक्षितः शम्बरोऽजीवत् ॥७ ॥**
**चत्वारिंशद्वर्षाण्यात्मानं निह्नुवानः सः।**
**शुष्णनिबर्हाभिक्रमकालेऽकस्मादयं ददृशे ॥८ ॥**
**पर्वतशिखरस्योपरि शंबर एत्य स्थितो रिपुं द्रष्टुम्।**
**शृङ्गान्निपात्य भूमौ तमश्विनौ जध्नतुः क्रूरम् ॥९ ॥**

"याभिर्महामतिथिग्वं कशोजुवं दिवोदासं शंबरहत्य आवतम्।
याभिः पूर्भिद्ये त्रसदस्युमावतं ताभिरू षु ऊतिभिरश्विना गतम्॥"
(१/११२/१४)

शतमश्ममय्य आसन् शम्बरपुर्य्यो दृढाऽऽसु या मुख्या।
आयस्येका शंबरदस्योः सा राजधान्यासीत्॥१०॥
नवनवतिर्य्याः पुर्य्यस्तासामीशाश्च नवनवतिः।
बाहव इव ते चासन् वशंवदाः शंबरस्यास्य॥११॥
निर्हत्य शंबरं प्रागतिथिग्वायाददात्पुरीं मुख्याम्।
नवनवतिं तु पुरीस्ताः सर्वा विध्वंसयामास॥१२॥
मध्ये मध्ये श्रान्तः स्थगितः समरे बभूव यर्हीन्द्रः।
तर्हि भरद्वाजः सहकाले तत्रार्पयत्सोमम्॥१३॥
"यस्य त्यच्छम्बरं मदे दिवोदासाय रन्धयः।
अयं स सोम इन्द्र ते सुतः पिब॥"(ऋ ६/४३/१)
"यत्सानोः सानुमारुहद् भूर्य्यस्पष्ट कर्त्वम्।
तदिन्द्रो अर्थं चेतति यूथेन वृष्णिरेजति (ऋ १/१०/२) मधुच्छन्दाः।
शंबरपुरी विभेदनकर्म्मणि राजा तु यो नियुक्तोभूत्।
त्रसदस्युन्तं दासैः प्रहण्यमानं ररक्षतुर्दस्रौ॥१४॥
'वर्ची' शंबरसेनापतिरसुरस्तस्य वीरान् सः।
इन्द्रो विष्णुसहायः शतं सहस्रं न्यवधीत्॥१५॥
"सखे विष्णो वितरं विक्रमस्व द्यौर्देहि लोकं वज्राय विष्कभे।
हनाव वृत्रं रिणचाव सिन्धूनिन्द्रस्य यन्तु प्रसवे विसृष्टाः॥"
(ऋ. ८/१००/१२)

शंबरहत्ये नवति नव च पुरीरासुरीस्तु यद् व्यधमत्।
यद्वा शतं सहस्रं वीरान् भूमौ न्यपातयत्साकम्॥१६॥
पर्वतभेदाच्चक्रे मार्गं सेनाभियानाय।
कतिपयपर्वतपक्षानशातयत् सप्तसिन्धुषु यत्॥१७॥
स्रोतांसि दासरुद्धान्यचारयत्सागरं यावत्।
महदिदमैन्द्रं वीर्य्यं प्रभाव उग्रोऽद्भुतं कर्म्म॥१८॥
"पुरां भिन्दुर्युवा कविरमितौजा अजायत।
इन्द्रो विश्वस्य कर्म्मणो धर्ता वज्री पुरुष्टुतः॥"
जेता मधुच्छन्दसः(१/११/४)

**इन्द्रो मानुष आसीदमानुषं कर्म्म यच्चक्रे।**
**तत्सर्वं व्याचष्टे गृत्समदो वज्रिणं स्तुत्वा॥१९॥**
**अहिशंबरयोर्युद्धे पर्वतपक्षावभेदनादिन्द्रः।**
**लेभे गोत्रभिदाख्यां पुरन्दराख्यां तु पुरशतोद्भेदात्॥२०॥**
**यच्छंबरसमकालो राजाऽऽसीद् भारते दिवोदासः।**
**तदतो दस्युनियुद्धात्प्रागपि सभ्यस्थितिं विजानेऽत्र॥२१॥**

## (२८) शम्बर-वध

प्रस्तोक नाम का सृंजय का पुत्र दिवोदास कहा गया है। इसी को अतिथिग्व और अश्वथ कहा गया है, वह गर्ग ऋषि का यजमान था ॥१॥

"कशोजुव" नाम के दिवोदास अतिथिग्व को यह शंबर नाम का दस्यु पीड़ित करता था। इन्द्र ने अश्वियों के साथ मय जाति के दस्यु को मार कर (शंबर के निग्रह का आदेश दिया) ॥२॥

अतिथिग्व के शत्रु शम्बर नामके असुर का निग्रहण करने के लिए इन्द्र ने आज्ञा दी। उसके भय से पर्वत की खाइयों में अंधकार में, जो जल से घिरी हुई थीं, वह छिप गया॥३॥

अत्यन्त उच्च पर्वत पर इसका कोई घर था, जिसमें उतरने की सीढ़ी में उतरने के पश्चात् एक गुहाद्वार था॥४॥

उस पर्वत के गर्भ में उखाड़े हुए पत्थरों से एक प्रांगण बनाया गया था, जिसके अन्दर अनेक शालाएँ, मार्ग, चौराहे और तालाब थे॥५॥

पर्वत के शिखर पर चढ़ कर गृह के अन्तर्द्वार पर पहुँचकर अवरोहण की सीढ़ियों से उतरते हुए विशाल गुहाप्रांगण में प्रवेश करता है॥६॥

इस प्रकार वह शम्बर अत्यन्त सुरक्षित, छिपा हुआ और दुर्गो का आश्रय लेकर इन्द्र द्वारा नियुक्त गुप्तचरों से लक्षित न होते हुए जीवित था॥७॥

इस प्रकार चालीस वर्ष तक वह शम्बर स्वयं को छिपाए रहा, परन्तु शुष्ण को मारने के अभिक्रमण के समय वह अकस्मात् दिखाई दिया॥८॥

पर्वतशिखर के ऊपर आकर वह शम्बर शत्रु को देखने के लिए खड़ा हुआ। उस क्रूर शम्बर को अश्वियों ने पर्वत की चोटी से भूमि पर गिरा कर मार दिया॥९॥

ऋग्वेद में-"हे अश्वि देवों! शम्बर का वध कर के युद्ध में अतिथिग्व, कशोजुव और दिवोदास की तुम दोनों ने जिससे रक्षा की, जिससे दस्युओं को डराने वाले नरेश को शत्रुओं की नगरियों को तोड़ने के युद्ध में तुम दोनों ने रक्षा की, उन्हीं रक्षाओं से युक्त होकर हमारे पास आओ।(१/११२/१४)

शम्बर दस्यु की सौ नगरियाँ पत्थर से बनी हुई थीं और दृढ़ थीं, उनमें से प्रमुख आयसी (लोहे) की नगरी थी, जो शम्बर दस्यु की राजधानी थी ॥१० ॥

निन्यानवें नगरियों के स्वामी निन्यानवें ही थे, जो शम्बर दैत्य की भुजाओं के समान थे और उसके आज्ञाकारी थे ॥११ ॥

सर्वप्रथम शम्बर दैत्य को मारकर (इन्द्र ने) यह प्रमुख नगरी अतिथिग्व को दे दी। अन्य जो निन्यानवें नगरियाँ थी, वे सभी नष्ट कर दी गईं ॥१२ ॥

युद्ध के बीच बीच में जब इन्द्र रुक जाता था, तब उस समय भरद्वाज ऋषि उसे सोम अर्पित करते थे ॥१३ ॥

ऋग्वेद में - "हे इन्द्र ! तुमने जिसके पीने से उत्साह उत्पन्न होने पर दिवोदास का हित करने के लिए शम्बर को नष्ट किया, वही यह सोम है, तेरे लिए निकाला गया है, तू इसका पान कर"(६/४३/१)

"जैसे तू एक पर्वतशिखर से दूसरे पर्वतशिखर पर जाता है, वैसे ही जो अनेक कार्यो को पूर्ण करता है, इन्द्र उसके उद्देश्य को जानता है, और अपने साथियों के साथ उसकी सहायता के लिए शीघ्रता से दौड़ता है ॥(१/१०/२)

शम्बरपुरी को नष्ट करने में जिस राजा को नियुक्त किया गया था, उसका नाम त्रसदस्यु था, जिसकी दासों के प्रहार से अश्वियों ने रक्षा की ॥१४ ॥

"वर्ची" नाम का दैत्य शम्बर का सेनापति था जिसके सैकड़ों हजारों वीरों को इन्द्र ने विष्णु की सहायता से मार दिया ॥१५ ॥

ऋग्वेद में - "हे मित्र विष्णु ! तू अधिक पराक्रम दिखा। हे द्यौ ! तू हमारे वज्र के लिए अधिक स्थान दे। हे विष्णो ! वृत्र को हम दोनों मारें और जल को प्रवाहित करें। वे जल मुक्त होते ही इन्द्र की आज्ञा में जावें ।(९/१००/१२)

शम्बर को मारने में निन्यानवें आसुरी पुरियों को नष्ट किया और सेना के सौ हजार (एक लाख) वीरों को साथ ही मार कर भूमि पर गिरा दिया ॥१६ ॥

सेना के अभियान के लिए पर्वतों को तोड़ कर मार्ग बनाया। सप्त-सिन्धु में कुछ पर्वतों के पक्षों को काट दिया ॥१७ ॥

दासों द्वारा अवरुद्ध स्रोतों को सागर पर्यन्त पहुँचा दिया। इन्द्र का यह महान् पराक्रम उग्र प्रभाव और अद्‌भुत कर्म था ॥१८ ॥

ऋग्वेद में - "शत्रु के नगरों को तोड़ने वाला महान् पराक्रमी युवा, ज्ञानी समस्त कर्मों को करने वाला और सम्पूर्ण विश्व द्वारा प्रशंसित वज्रधारी इन्द्र प्रकट हुआ।"(१/११/४)

यह इन्द्र मनुष्य इन्द्र था जिसने मानुषी कर्म किये। यह सब गृत्समद ने इन्द्र की स्तुति करते हुए कहा ॥१९ ॥

अहि और शम्बर के युद्ध में पर्वतों के पक्षों का भेदन करने से इन्द्र गोत्रभिद् नाम से और सौ पुरों को नष्ट करने से पुरन्दर नाम से प्रसिद्ध हैं ॥२० ॥

भारत में शम्बर का समकालिक दिवोदास नाम का राजा था तथा इस दस्युयुद्ध से पहले भी यहाँ सभ्य लोगों की स्थिति थी, ऐसा प्रतीत होता है ॥२१ ॥

## (२९) कृष्णासुरत्वगुत्कर्तनम्।

अंशुमती तु नदी या तस्यास्तीरेऽसुरस्तु कृष्णाख्यः।
अयुतानुचरोपेतस्तत्प्रान्ते नृन् प्रपीडयन्नासीत् ॥१ ॥
पश्चिमतो दक्षिणतश्चोत्तरतस्तं बृहस्पतिर्न्यरुणत्।
इन्द्रः पूर्वत इत्वा मध्ये सन्तं तमाक्रामत् ॥२ ॥
सर्वाजय्यात्माभिमानेन दासस्तुच्छं जानन् सर्वमन्यं युयुत्सुम्।
अभ्यायान्तं वीरमिन्द्रं प्रशंसन् हास्ये कृष्णः कौतुकादाजुहाव ॥३ ॥
स्तुतिमुखनिन्दां कुर्वन् राज्ञः पत्युः स्फुटं ब्रुवन् दोषान्।
सन्धिं चेच्छन् रक्षां चार्थयते योद्धुमाह्वयति ॥४ ॥

ऋ.१०/४२ "अस्तेव सुप्रतरं लायमस्यन्भूषन्निव प्रभरा स्तोममस्मै।
वाचा विप्रास्तरत वाचमर्यो निरामय जरितः सोम इन्द्रम् ॥१ ॥
दोहेन गामुप शिक्षा सखायं प्रबोधय जरितर्जारमिन्द्रम्।
कोशं न पूर्णं वसुना न्यृष्टमा च्यावय मघदेयाय शूरम् ॥२ ॥
किमङ्ग त्वा मघवन्भोजमाहुः शिशीहि मा शिशयं त्वा श्रृणोमि।
अप्नस्वती मम धीरस्तु शक्र वसुविदं भगमिन्द्रा भरा नः ॥३ ॥
त्वां जना ममसत्येष्विन्द्र सन्तस्थाना विह्वयन्ते समीके।
अत्रा युजं कृणुते यो हविष्मान्नासुन्वता सख्यं वष्टि शूरः ॥४ ॥
धनं न स्पन्द्रं बहुलं यो अस्मै तीव्रान्त्सोमाँ आसुनोति प्रयस्वान्।
तस्मै शत्रून्त्सुतुकान्प्रातरह्नो नि स्वष्ट्रान्युवति हन्ति वृत्रम् ॥५ ॥
यस्मिन्वयं दधिमा शंसमिन्द्रे यः शिश्राय मघवा काममस्मे।
आराच्चित् सन्भयतामस्य शत्रुर्न्यस्मै द्युम्ना जन्या नमन्ताम् ॥६ ॥
आराच्छत्रुमपबाधस्व दूरमुग्रो यः शम्बः पुरुहूत तेन।
अस्मे धेहि यवमद्गोमदिन्द्र कृधी धियं जरित्रे वाजरत्नाम् ॥७ ॥
प्र यमन्तर्वृषसवासो अग्मन्तीव्राः सोमा बहुलान्तास इन्द्रम्।
नाह दामानं मघवा नियंसन्नि सुन्वते वहति भूरि वामम् ॥८ ॥

उत प्रहामतिदीव्या जयाति कृतं यच्छ्वघ्नी विचिनोति काले।
यो देवकामो न धना रुणद्धि समित्तं राया सृजति स्वधावान् ॥९ ॥
गोभिष्टरेमामतिं दुरेवां यवेन क्षुधं पुरुहूत विश्वाम्।
वयं राजभिः प्रथमा धनान्यस्माकेन वृजनेना जयेम ॥१० ॥
बृहस्पतिर्नः परिपातु पश्चादुतोत्तरस्मादधरादघायोः।
इन्द्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः कृणोतु" ॥११ ॥
(१०/४२)

ऋ.१०/४३ "अच्छा म इन्द्रं मतयः स्वर्विदः सध्रीचीर्विश्वा उशतीरनूषत।
परिष्वजन्ते जनयो यथा पतिं मर्यं न शुन्ध्युं मघवानमूतये ॥१ ॥
न घा त्वद्रिगपवेति मे मनस्त्वे इत्कामं पुरुहूत शिश्रय।
राजेव दस्म निषदोधि बर्हिष्यस्मिन्त्सु सोमेऽवपानमस्तु ते ॥२ ॥
विषूवृदिन्द्रो अमतेरुत क्षुधः स इद्रायो मघवा वस्व ईशते।
तस्येदिमे प्रवणे सप्त सिन्धवो वयो वर्धन्ति वृषभस्य शुष्मिणः ॥३ ॥
वयो न वृक्षं सुपलाशमासदन्त्सोमास इन्द्रं मन्दिनश्चमूषदः।
प्रैषामनीकं शवसा दविद्युतद्विदत्स्वर्मनवे ज्योतिरार्यम् ॥४ ॥
कृतं न श्वघ्नी विचिनोति देवने संवर्गं यन्मघवा सूर्यं जयत्।
न तत्ते अन्यो अनु वीर्यं शकन्न पुराणो मघवन्नोत नूतनः ॥५ ॥
विशं विशं मघवा पर्यशायत जनानां धेना अवचाकशद्वृषा।
यस्याह शक्रः सवनेषु रण्यति स तीव्रैः सोमैः सहते पृतन्यतः ॥६ ॥
आपो न सिन्धुमभि यत्समक्षरन्त्सोमास इन्द्रं कुल्या इव ह्रदम्।
वर्धन्ति विप्रा महो अस्य सादने यवं न वृष्टिर्दिव्येन दानुना ॥७ ॥
वृषा न क्रुद्धः पतयद्रजःस्वा यो अर्यपत्नीरकृणोदिमा अपः।
स सुन्वते मघवा जीरदानवेऽविन्दज्ज्योतिर्मनवे हविष्मते ॥ ८ ॥
उज्जायतां परशुर्ज्योतिषा सह भूया ऋतस्य सुदुघा पुराणवत्।
विरोचतामरुषो भानुना शुचिः स्वर्णशुक्रं शुशुचीत सत्पतिः ॥९ ॥
गोभिष्टरेमामतिं दुरेवां यवेन क्षुधं पुरुहूत विश्वाम्।
वयं राजभिः प्रथमा धनान्यस्माकेन वृजनेना जयेम ॥१० ॥
बृहस्पतिर्नः परिपातु पश्चादुतोत्तरस्मादधरादघायोः।
इन्द्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः कृणोतु" ॥११ ॥

ऋ.१०/४४ "आयात्विन्द्रः स्वपतिर्मदाय यो धर्मणा तूतुजानस्तुविष्मान्।
प्रत्वक्षाणो अति विश्वा सहांस्यपारेण महता वृष्ण्येन ॥१ ॥

सुष्ठामा रथः सुयमा हरी ते मिम्यक्ष वज्रो नृपते गभस्तौ।
शीभं राजन्त्सुपथा याह्यार्वाङ् वर्धाम ते पपुषो वृष्ण्यानि॥२॥
एन्द्रवाहो नृपतिं वज्रबाहुमुग्रमुग्रासस्तविषास एनम्।
प्रत्वक्षसं वृषभं सत्यशुष्ममेमत्स्मत्रा सधमादो वहन्तु॥३॥
एवा पतिं द्रोणसाचं सचेतसमूर्जः स्कम्भं धरुण आ वृषायसे।
ओजः कृष्व सङ्गृभाय त्वे अप्यसो यथा केनिपानामिनो वृधे॥४॥
गमन्नस्मे वसून्या हि शंसिषं स्वाशिषं भरमायाहि सोमिनः।
त्वमीशिषे सास्मिन्ना सत्सि वर्हिष्यनाधृष्या तव पात्राणि धर्मणा॥५॥
पृथक् प्रायन् प्रथमा देवहूतयोऽकृण्वत श्रवस्यानि दुष्टरा।
न ये शेकुर्यज्ञियां नावमारुहमीर्मैव ते न्यविशन्त केपयः॥६॥
एवैचापागपरे सन्तु दूढयोश्वा येषां दुर्युज आयुयुज्रे।
इत्था ये प्रागुपरे सन्ति दावने पुरूणि यत्र वयुनानि भोजना॥७॥
गिरीँरज्रान्रेजमानाँ अधारयद्द्यौः क्रन्दन्तरिक्षाणि कोपयत्।
समीचीने धिषणे विष्कभायति वृष्णः पीत्वा मद उक्थानि शंसति॥८॥
इमं बिभर्मि सुकृतं ते अङ्कुशं येनारुजासि मघवञ्छफारुजः।
अस्मिन्त्सु ते सवने अस्त्वोक्यं सुत इष्टौ मघवन्बोध्याभगः॥९॥
गोभिष्टरेमामतिं दुरेवां यवेन क्षुधं पुरुहूत विश्वाम्।
वयं राजभिः प्रथमा धनान्यस्माकेन वृजनेना जयेम॥१०॥
बृहस्पतिर्नः परिपातु पश्चादुतोत्तरस्मादधरादघायोः।
इन्द्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः कृणोतु"॥११॥

## (२९) कृष्ण नामक असुर की त्वचा का उत्कर्तन (उखाड़ना)

"अंशुमती" नाम की जो नदी है, उसके किनारे पर कृष्ण नाम का असुर था, जो अयुत (दस हजार) सेवकों के साथ उस प्रांत में रहने वाले मनुष्यों को पीड़ित करता था॥१॥

उसको बृहस्पति ने पश्चिम, दक्षिण और उत्तर दिशा से रोक दिया और इन्द्र ने पूर्व दिशा से आकर बीच में घिरे हुए उस पर आक्रमण कर दिया॥२॥

स्वयं को अजेय मानने के अभिमान से इस दास ने अन्य समस्त युद्धेच्छु योद्धाओं को तुच्छ जानते हुए सामने आते हुए वीर इन्द्र की प्रशंसा करते हुए उस कृष्ण दस्यु ने कुतूहलपूर्वक इन्द्र का आह्वान किया॥३॥

कृष्ण दस्यु इन्द्र की स्तुतिमुख निन्दा (प्रशंसा के बहाने निंदा) करते हुए स्वामी राजा (इन्द्र) के दोषों का वर्णन करता हुआ सन्धि चाहतां हुआ और रक्षा की प्रार्थना करता हुआ युद्ध का आह्वान करता है ॥४ ॥

इस युद्ध के सम्बन्ध में ऋग्वेद के दशम मण्डल के बियालीसवें सूक्त में वर्णन है - "जैसे बाण फैंकने वाला धनुर्धर उत्तम प्रकार से दूरी पर स्थित लक्ष्य पर बाण का प्रहार करता है और आभूषणों से सुसज्जित होता है, वैसे ही हे विप्र! तू इन्द्र के लिए स्तुतियाँ प्राप्त कर और इन स्तुतियों के प्रयोग से अपने शत्रु का वचनों से निराकरण कर। हे स्तुतिकर्ता! तू सोमयाग में इन्द्र को नित्य अपने अनुकूल कर ॥१ ॥

हे स्तुतिकर्ता। जैसे गाय को दूह कर अभीष्ट प्राप्ति की जाती है, वैसे ही तू अपने मित्र इन्द्र को अभीष्ट प्राप्ति के लिए प्रसन्न कर, इन्द्र को स्तुतियों से प्रबुद्ध कर धन से परिपूर्ण कोष के समान ऐश्वर्यसम्पन्न शूरवीर इन्द्र को धनदान के लिए अपने अनुकूल कर। हे मघवन् इन्द्र ! तुझे दान दाता क्यों कहते हैं ? मुझे धन देकर समर्थ कर। मैं तुझे समर्थ बनाने वाला सुनता हूँ। मेरी बुद्धि कर्म में निपुण हो, हमें उत्तम धन प्रदान करने वाला सौभाग्य प्रदान कर ॥२-३ ॥

हे इन्द्र ! युद्ध में जनता तुझे सहायतार्थ सम्मानपूर्वक बुलाती है, युद्ध में प्रयाण करते समय तुझे बुलाती हैं, इस समय वीर इन्द्र हवि से युक्त है उसके साथ ही मित्रता करती है, क्योंकि सोमरहित स्तुतिकर्ता के साथ इन्द्र मित्रता नहीं करना चाहता है ॥४ ॥

जो यजमान अनेक गौ, अश्वादि प्रदान करने वाले ऐश्वर्यवान् के समान इस इन्द्र को तीव्र सोमरस प्रदान करता है, उसके लिए इन्द्र दिन के प्रातःकाल में (शीघ्र ही) पुत्रों को देता है, सुन्दर आयुधों से युक्त शत्रुओं को दूर कर देता है और घृत्र का संहार कर देता है ॥५ ॥

हम जिस इन्द्र की स्तुति करते हैं, जो ऐश्वर्यवान् इन्द्र हमें अभीष्ट धन प्रदान करता है। इस इन्द्र का शत्रु दूर से ही भयभीत हो जाता है, इस इन्द्र को शत्रु की सम्पत्ति भी प्राप्त हो ॥६ ॥

हे पुरूहूत इन्द्र ! तुम्हारा जो उग्र वज्र है, उस वज्र से हमारे समीप के शत्रुओं को दूर कर। हमें जौ से युक्त अन्न और गौ से युक्त सम्पत्ति प्रदान कर। हे इन्द्र ! तू हम स्तुतिकर्ताओं की बुद्धि को धन और रत्न से युक्त कर (सुद्बुद्धि प्रदान कर) ॥७ ॥

जिस इन्द्र के उदर में तीव्र एवं क्षुधावर्धक हवन किया गया सोम प्राप्त होता है, वह मघवा इन्द्र हवि प्रदान करने वाले यजमान का कभी विरोध नहीं करता है। वह इन्द्र पर्याप्त सोमप्रदाता यजमान को अधिक सम्पन्न बनाता है ॥८ ॥

जिस प्रकार जुआरी स्वयं जिससे पराजित होता है पुनः उसी की खोज करके उसे हरा देता है, उसी प्रकार इन्द्र भी दुष्कर्म करने वाले को अतिक्रमण करके पराजित कर देता है ॥९ ॥

हे पुरूहूत! दारिद्र्य से युक्त दुर्बुद्धि को हम गौ आदि पशुओं से दूर कर दें तथा जौ अन्न से हम समस्त प्रकार की क्षुधा को शान्त कर ले, राजाओं से हम श्रेष्ठ धन प्राप्त करें तथा अपने बल से विजय को प्राप्त करें ॥१० ॥

हमें बृहस्पति पीछे-ऊपर और नीचे से दुष्ट (पाप करने वाले) शत्रुओं से बचावे तथा इन्द्र पूर्व दिशा और मध्य भाग से हमारी रक्षा करे। वह मित्र इन्द्र, हम मित्रों के लिए उत्तम धन प्रदान करे ॥११ ॥(१०/४२/१-११) ॥

"मेरी बुद्धि, जो सर्वव्यापी, परस्पर सुसम्बद्ध, समस्त प्रकार की कामना करने वाली है, वह उस इन्द्र की स्तुति करती है। जिस प्रकार स्त्रियाँ अपने पति को सुखी करने के लिए उनका आलिङ्गन करती हैं, उसी प्रकार हमारी ये स्तुतियाँ उस ऐश्वर्यवान् इन्द्र को प्राप्त हों ॥१ ॥

हे पुरूहूत (पुरों पर विजय पाने वाले इन्द्र) मेरा मन तुम्हें छोड़कर अन्यन्त्र नहीं जाता है। मैं अपनी कामना तुझमें ही स्थापित करता हूँ। हे दर्शनीय इन्द्र! जैसे राजा आसन पर बैठता है, वैसे ही तुम भी बैठो और इस सोम में उत्तम रीति से सोमपान कार्य सम्पन्न हो ॥२ ॥

इन्द्र हमारी दुर्बुद्धि और क्षुधा से बचाने के लिए सर्वदा हमारे पास रहे। वह इन्द्र समस्त ऐश्वर्यों और धनों का स्वामी है, उसी बलवान्, शोषक और वृष्टिकर्ता इन्द्र की ये श्रेष्ठ एवं प्रसिद्ध सात गंगादि नदियाँ अन्न की वृद्धि करें ॥३ ॥

यथा सुन्दर कोमल पत्ते वृक्ष के आश्रित होते हैं, तथैव मस्त करने वाले तथा चमस पात्र में स्थित सोम इन्द्र को प्राप्त हो। इस सोमपान के बल से इन्द्र का मुख द्युतिमान् हो गया है, अतः वह इन्द्र अपना सर्वश्रेष्ठ तेज मनुष्य के लिए प्रदान करे ॥४ ॥

जिस प्रकार द्यूतविद्याप्रवीण अपने जूआ खेलने के स्थान पर दूसरे जुआरी को खोज लेता है, उसी प्रकार वह ऐश्वर्यशाली इन्द्र वृष्टि को अवरुद्ध करने वाले सूर्य को जीतता है। हे मघवन्। तेरे बल और वीर्य के समान कार्य अन्य कोई नहीं कर सकता है ॥५ ॥

समस्त ऐश्वर्यों को देने वाला इन्द्र प्रत्येक मनुष्य में रहता है, मनुष्यों की प्रार्थनाओं को सुनता है। यह इन्द्र जिस मनुष्य के यज्ञों में आनन्द प्राप्त करता है, वह मनुष्य तीव्र सोमरसों के द्वारा शत्रुओं को पराजित कर देता है ॥६ ॥

जिस प्रकार नदियों का जल समुद्र की ओर जाता है, छोटी-छोटी नालियाँ तालाब की ओर जाती हैं, वैसे ही सोमरस इन्द्र की ओर जाता है। उस इन्द्र के महत्त्व को यज्ञ के समय विद्वान् लोग बढ़ाते हैं, जैसे दिव्य वृष्टि करने वाला पर्जन्य जौ को बढ़ाता है ॥७ ॥

जैसे संसार में क्रोधित हुअ बैल दौड़ता है, वैसे ही यह इन्द्र दौड़ता है। मेघों को तोड़कर अपने आश्रित इन जलों को हमारे लिए मुक्त करता है वह ऐश्वर्यवान् इन्द्र

सोम का सेवन करने वाले, दान देने वाले और हविर्युक्त मनुष्य को ज्योतिप्रदान करता है ॥८ ॥

यह इन्द्र समस्त ज्योतिसमूह के साथ उदित हो, ऋत को उत्पन्न करने वाली वाणी पहले की तरह पुनः प्रगट हो और सज्जनों का संरक्षण करने वाला इन्द्र सूर्य के समान अत्यन्त ज्योतिष्मान् हो ॥९ ॥

हे पुरूहूत इन्द्र ! हम गौ आदि के द्वारा दारिद्र्य से प्राप्त दुर्बुद्धि को पार करें और जौ आदि अन्न से क्षुधा को पार करें। राजाओं से श्रेष्ठ धन प्राप्त करें और अपने बल से शत्रुओं पर विजय प्राप्त करें ॥१० ॥

"बृहस्पति हमें पीछे, ऊपर और नीचे से दुष्ट (पाप करने वाले) शत्रुओं से बचावें। इन्द्र हमें पूर्व दिशा और मध्य भाग से शत्रुओं से बचावें। यह इन्द्र सबका मित्र है और हम मित्रों के लिए धन प्रदान करें ॥११ ॥"(१०/४३/१-११)

"वह इन्द्र धन का स्वामी है, हमें हर्षित करने के लिए आवे। वह इन्द्र वेगवान् और बलवान् है, जो समस्त शत्रुओं को अपने महान् और अतुल बल से नष्ट करता है, वह इन्द्र रथ पर चढ़कर हमारे यज्ञ में आवे ॥१ ॥

हे मनुष्यों के स्वामी इन्द्र ! तेरा रथ अत्यन्त सुघटित है, तेरे रथ के दोनों घोड़े नियंत्रित हैं और तेरे हाथ में देदीप्यमान वज्र है। हे राजन्! तू शीघ्र ही उत्तम मार्ग से हमारे पास आ और हम तुझे सोम पिलाकर तेरे बल का वर्धन करेंगे ॥२ ॥

मनुष्यों के स्वामी, वज्रबाहु, उग्र, शत्रु के सैन्यबल को दुर्बल करने वाले अभीष्ट की प्राप्ति कराने वाले, सत्य और पराक्रमी इन्द्र को उग्र वीर्यवान् और मदमस्त इन्द्र को लाने वाले घोड़े हमारे पास लावें ॥३ ॥

इस प्रकार हे इन्द्र ! तू रक्षा करने वाला, पूर्ण कलश, उत्साहवर्धक और ओज को उत्पन्न करने वाला सोमरस अपने उदर में एकत्रित करता है हमें बल प्रदान कर, तू हमें अपने आप में आत्मसात् कर, क्योंकि तू ज्ञानियों के सुख और ऐश्वर्य की बुद्धि करने वाला है ॥४ ॥

हे इन्द्र ! हमें समस्त प्रकार का धन प्राप्त हो क्योंकि हम तेरी स्तुति करते हैं। हे इन्द्र ! तू हमारे सोमयाग में सुन्दर आशीर्वाद से युक्त होकर आ क्योंकि इन सबका स्वामी है। तेरे सोमपान करने के पात्र अन्य किसी के द्वारा आक्रान्त न होते हुए सुसज्जित हैं। अतः तू हमारे इस यज्ञ में आकर आसीन हो ॥५ ॥

हे इन्द्र ! प्राचीनकाल से ही देवों की स्तुति करने वाले पृथक्-पृथक् स्थानों (देवलोकों) को प्राप्त करते हैं, वे अत्यन्त दुष्कर और यशोवृद्धिजनक कर्म को कर लेते हैं और जो यज्ञरूपी नाव पर आरूढ नहीं हो सकते हैं वे पाप-कर्मों में लिप्त होकर निम्नगति को प्राप्त करते हैं ॥६ ॥

इस प्रकार के जो दूषित कर्म करने वाले हैं, जिनके रथ में दूषित ढंग से चलने वाले अश्व योजित होते हैं, ऐसे मनुष्य निम्न गति को प्राप्त होते हैं। जो यजमान पहले से ही हविर्दान में तत्पर रहते हैं, वे ऊर्ध्वगति (स्वर्गगामी) को प्राप्त करते हैं, जिस स्वर्ग में अनेक प्रकार के धन और भोज़नयोग्य सामग्री प्राप्त होती है ॥७॥

जिस इन्द्र ने रमणशील और कम्पित होते हुए पर्वतों को स्थिर किया है। जो आकाश गर्जना करता है, अन्तरिक्ष क्षुभित होता है और जो परस्पर समीचीन द्यावा-पृथिवी है, इन सबको धारण करता है (स्थिर करता है) तथा वह सोमरस को पी कर मदमस्त हो कर उत्तम वचन बोलता है ॥८॥

हे मघवन्। तेरा उत्तम कर्म इस अंकुश को धारण करता है, जिस अंकुश से तू दूषित कर्म करने वालों के बल को नष्ट करता है, इस यज्ञ में तेरा निवास आनन्द-युक्त हो। हे ऐश्वर्यवान् इन्द्र! इस सोमयज्ञ में, जो उत्तम रीति से सम्पन्न हुआ है, तू हमारी सुन्दर स्तुतियों को पहचान ॥९॥

हे पुरूहूत इन्द्र! दारिद्र्य से युक्त दुर्बुद्धि को हम गौ आदि पशुधन से दूर कर दें तथा जौ अन्न से हम समस्त प्रकार की क्षुधा को शान्त करें, राजाओं से श्रेष्ठ धन की प्राप्ति करें तथा अपने बल से विजय को प्राप्त करें ॥१०॥

बृहस्पति हमें पीछे, ऊपर और नीचे से दुष्ट (पाप करने वाले) शत्रुओं से बचावें। इन्द्र हमें पूर्व दिशा (दाहिनी ओर) तथा मध्य भाग से आने वाले शत्रुओं से बचावें। सबका मित्र इन्द्र हम मित्रों को उत्तम धन प्रदान करे ॥११॥"(१०/४४/१-११)

## (३०) बङ्गृदादिदस्युग्रामाणां निर्मूलनम्।

**पौरूरवसस्यायोः शत्रुं वेशं तु नम्रतामनयत्।**
**षड्गृभिमरन्धयत् तं यः सव्यायार्द्दयत्पूर्वम् ॥१॥**
**स्मदिभं तूग्रं कुत्सद्विषं श्रुतर्वद्विषं न्यहन् मृगयुम्।**
**अश्मं चार्बुदमुरणं बलं दृभीकं रुधिक्रां च ॥२॥**
**सुश्रवसः पुनरार्य्यस्यासन् विद्रोहिणो दासाः।**
**बङ्गृदकरञ्जपर्णमुख्याः क्रूराश्च निःषपिनः ॥३॥**
**बङ्गृद एष ऋजिश्च द्वेषी पर्णयकरञ्जौ तु।**
**अप्यर्बुदोऽतिथिग्वस्यायोर्वेशः सपत्नोऽभूत् ॥४॥**
**शंबरवदस्य बङ्गृदनाम्नो दस्योः शतं पुर्य्यः।**
**आसंस्ता अपि सर्वा मरुतो विध्वंसयामासुः ॥५॥**
**बङ्गृदप्रमुखानामभिमर्दे निर्हता दासाः।**
**षष्टिसहस्राणीति प्रोचे सव्यस्त्रिपञ्चाशे ॥६॥**

## (३०) बङ्गृदादि दस्युओं के ग्रामों का निर्मूलन

पुरूरवा के पुत्र आयु के शत्रु वेश को विनीत किया तथा जिसने पहले सव्य को पीड़ित किया था, उस षड्गृभि का दमन किया ॥१ ॥

कुत्स के शत्रु अत्यन्त उग्र स्मदिभ, श्रुतर्व के शत्रु मृगयु, अश्म, अर्बुद, उरण, बल, दृभीक और रुधिक्रा नाम के उग्र शत्रुओं का संहार कर दिया गया ॥२ ॥

सुश्रवा नाम के आर्य राजा के विद्रोही बङ्गृद, करंज और पर्ण आदि प्रमुख दास, जो क्रूर और दुष्ट-प्रकृति के थे ॥३ ॥

ये बङ्गृद, ऋजि, पर्णय, करंज और अर्बुद अतिथिग्व के शत्रु थे तथा वेशनाम का दस्यु आयु राजा का शत्रु था ॥४ ॥

शंबर की तरह इस बङ्गृद नाम के दस्यु की भी सौ नगरियाँ थी, उन सभी को मरुतों ने नष्ट कर दिया ॥५ ॥

इस बङ्गृद प्रमुख दस्युओं के मर्दन में छः हजार दस्यु मारे गये, ऐसा सव्य ऋषि ने ५३वें सूक्त में कहा है ॥६ ॥

## (३१) शुष्णस्य निगडबन्धनम्।

**यो वा शुष्णः सर्वतः पूर्वमागात्सूर्य्यस्थानं तेत्र पुत्री दिवो यः।**
**धृष्टोऽबध्नात् प्रेमपाशेऽथ तस्यै यातायातं भूयसा योऽत्र चक्रे ॥१ ॥**
**सर्वाशान्तेर्हेतुरासीत् स तस्माज्जीवन्तं तं तर्जयामास दण्डैः।**
**दाम्नाबध्नाच्चाऽऽयसेन प्रगाढं कारागारे चाऽऽयसे तं न्यगृह्णात् ॥२ ॥**

## (३१) शुष्ण दस्यु का जीवित बन्धन

शुष्ण नाम का जो दैत्य था, वह सर्वप्रथम सूर्यस्थान पर आया था, जिस धृष्ट ने द्यु की पुत्री को अपने प्रेमपाश में बाँध लिया था, उसी के लिए यह बार-बार यहाँ आवागमन करता था ॥१ ॥

वह शुष्ण समस्त अशांति का कारण था, इसीलिए उसे जीवित को ही दण्डों से प्रताड़ित किया गया। इसे लोहे की रस्सी (लोह-श्रृंखला) से बांध दिया और लोहे के कारागार में बंदी बना लिया ॥२ ॥

## (३२) कुत्सकुवीयम्।

**सूर्यस्याधिष्ठाने शुष्णस्य निगडबन्धनं श्रुत्वा।**
**कुयवः सहस्रसुभटैराक्रामीच्छुष्णन्तमुद्धर्तुम् ॥१ ॥**
**कुयवाक्रमणं रोद्धुं कुत्सः प्रतिचक्रमे सुभटैः।**

कुयवप्रबलाक्रमणात् कुत्सो विजितः पराभवं चापत् ॥२ ॥
विद्वान् प्रतूर्णिरिन्द्रः सहसाऽकस्मादुपस्थाय ।
कुयवाक्रमणात् कुत्सं परितत्रेऽन्यॉंश्च तत्रार्य्यान् ॥३ ॥
आक्रममाणं कुयवं प्रत्याक्रम्येन्द्र एष आहत्य ।
भूमौ निपात्य तरसा तस्य शिरश्छेदयामास ॥४ ॥
उन्नताधरधराधरस्थली स्यन्दनादिव शिफाग्र्यनिर्झरे ।
कृत्रिमोत्समुखसंपतत्पयः क्षीरवद्‌द्रवति शुभ्रमुज्ज्वलम् ॥५ ॥
क्षीरवद्धवलधारया तया कौतुकात् कुयव एव नित्यशः ।
स्नापयत्युदकमध्यगः स्वयं स्वे स्त्रियौ जलविहारहर्षितः ॥६ ॥
स्त्रैण एष कुयवः स्वभार्य्ययोः प्रेमपाशहतविक्रमो हतः ।
दासराजवधजातविस्मया दस्यवो व्यपगता इतस्ततः ॥७ ॥
क्षुब्धदासकुलमाकलय्य ते योषितौ च कुयवस्य तत्क्षणात् ।
स्वामिनं तमनुगन्तुमुद्यते योद्धुमेत्य निहते बभूवतुः ॥८ ॥
निहते तु दस्युराजे कुयवे शुष्णे च शंबरे चाहौ ।
सर्वेऽपि कान्दिशीकाः शेषा भेजुर्दिशो दासाः ॥९ ॥

## (३२) कुयव और कुत्स

सूर्यस्थान में शुष्ण का निगड़बन्धन सुनकर कुयव ने एक हजार योद्धाओं के साथ शुष्ण को बन्धनमुक्त कराने के लिए आक्रमण कर दिया ॥१ ॥

कुयव के आक्रमण का प्रतीकार करने के लिए कुत्स ने अपने योद्धाओं के साथ प्रतीकार किया, किन्तु कुयव के प्रबल आक्रमण से कुत्स हार कर पराभव को प्राप्त हुआ ॥२ ॥

विद्वान् प्रतूर्णि इन्द्र ने अकस्मात् उठ कर कुयव के आक्रमण से कुत्स को बचाया और अन्य आर्यों की रक्षा की ॥३ ॥

आक्रमण करते हुए कुयव को प्रत्याक्रमण करते इन्द्र ने घायल करके, भूमि पर गिराकर वेगपूर्वक इसके मस्तक का छेदन कर दिया ॥४ ॥

ऊँची-नीची पर्वतस्थली से बहने के कारण शिफा नदी के अग्रिम झरने में कृत्रिम मार्ग (गोमुखादि) से गिरता हुआ जल शुभ और उज्ज्वल दूध के समान प्रतीत होता था ॥५ ॥

दुग्ध के समान श्वेत उस जल की धारा से कौतुकपूर्वक कुयव प्रतिदिन जल के बीच खड़ा होकर स्वयं स्त्रियों को स्नान कराता था और जलक्रीड़ा से हर्षित होता था ॥६ ॥

यह स्त्रैण (स्त्रियों के बीच रमण करने वाला) कुयव अपनी दोनों स्त्रियों के प्रेमपाश में फंसकर पराक्रम-रहित होकर मारा गया। इस दास-राज की मृत्यु से विस्मित हो कर दस्युगण इधर उधर भाग गये ॥७ ॥

दस्यु-कुल को क्षुब्ध जानकर कुयव की वे दोनों स्त्रियाँ तत्काल अपने स्वामी का अनुगमन करने के लिए युद्ध हेतु तैयार हुईं और मारं गईं ॥८ ॥

दस्युराज कुयव, शुष्ण और शंबर के मारे जाने पर सभी किस दिशा में जावें ? (अन्यत्र गतिरहित अथवा किंकर्तव्यविमूढ़), ऐसे हो गये तथा सभी दास इधर उधर दिशाओं में भाग गये ॥९ ॥

## (३३) पञ्चाशत्सहस्त्रदस्युनिग्रहणम्।

**सप्तापीत्थं दासराजान् हिमाद्रिद्रोणीसंस्थानुग्रवीर्य्यन्निगृह्य।**
**हत्वा चैषां सैनिकानां सहस्राण्युग्राण्यन्यानानयामास बध्वा ॥१ ॥**
**इन्द्रः पञ्चाशत्सहस्राणि तेषां नीत्वा प्राधाच्चायुराट् पारवश्ये।**
**सम्यक् तेषां सभ्यताशिक्षणार्थं सोऽनेनाभूदायुराजो नियुक्तः ॥२ ॥**
**इत्थं प्राप्तो निग्रहं दस्युसंघः प्रतिष्ठोऽपि प्राक् प्रतिष्ठानराष्ट्रे।**
**सोऽयं सभ्यः शिक्षितो वीरयोद्धा प्रातिष्ठानोऽभूत्प्रसिद्धः पुरात्वे ॥३ ॥**
**ये चेदानीं म्लेच्छवर्गे पठाना इत्याख्याता आयुराट्शिक्षितास्ते।**
**प्रातिष्ठानाः क्षत्रियत्वे पुराऽऽसन् पश्चान्म्लेच्छैर्म्लेच्छतां प्रापितास्ते ॥४ ॥**
**पूर्वे म्लेच्छा आह्नुरेके 'पतान' स्यापभ्रंशात्तं पठानेति शब्दम्।**
**किन्त्वेकस्यासीत्पतानत्वमिष्टं नैते सर्वे तस्य वंशे प्रसूताः ॥५ ॥**

## (३३) पचास हजार दस्युओं का निग्रहण

हिमालय की कन्दराओं में रहने वाले उग्र तथा पराक्रमी उन सात राजाओं का निग्रह करके और मार कर उनके हजारों उग्र सैनिकों को बांध कर ले गये ॥१ ॥

इन्द्र ने उनके पचास हजार (दासों) को ले जाकर आयुराज की पराधीनता में रख दिया और उनको भली प्रकार सभ्यता की शिक्षा देने के लिए आयुराज को नियुक्त कर दिया ॥२ ॥

इस प्रकार प्रतिष्ठान राष्ट्र में प्रतिष्ठित यह दस्युसंघ निग्रह को प्राप्त हुआ (बन्दी बना लिया गया) यह दस्युसंघ सभ्य, और शिक्षित था। प्राचीनकाल में प्रतिष्ठान देश वीर योद्धाओं के लिए प्रसिद्ध था ॥३ ॥

वे आयुराज द्वारा शिक्षित दास इस समय म्लेच्छ जाति में "पठान" कहलाते हैं। प्राचीन समय में प्रतिष्ठान पुर में रहते हुए ये दास क्षत्रिय हो गये, जो फिर से म्लेच्छों द्वारा म्लेच्छता को प्राप्त हो गये ॥४ ॥

पुराकाल में कुछ लोग कहते थे कि "पतान" शब्द का अपभ्रंश रूप पठान शब्द है, किन्तु एक 'पठान वंश' तो पतान से सम्बद्ध का हो सकता है, न कि समस्त पठान उसके वंश में उत्पन्न हुए हैं ॥५ ॥

## (३४) अपहतराजेभ्यः कुत्सादिभ्यः पुनरिन्द्रकर्तृकं प्राग्वद् स्वस्वविभागदानम्।

यद्यत् क्षेत्रं यद्ध्यपां स्रोत आसीदन्नानां वा स्तूपसामीत्तृणानाम्।
दस्युक्लिष्टं सूर्य्यधामापि तत्तत् प्राग् यस्यासीत्तस्य तत्तस्ससान ॥१ ॥
इत्थं निगृह्य दस्यूनिन्द्रो राज्ञां स्वकं धनं प्राग्वत्॥
कुत्सादिभ्यो विभजन् व्यभजत्सूर्य्यं च तद्वदेवेभ्यः ॥२ ॥
भूमेर्जलाशयानां सूर्यस्य च दस्युभिर्गृहीतानाम्॥
तेभ्यो विभागदानं यदभूद् वर्षागिरास्तदेवाहुः ॥३ ॥

"एतत् त्यत् त इन्द्रं वृष्ण उक्थं वार्षागिरा अभिगृणन्ति राधः ॥
ऋज्राश्वः प्रष्टिभिरम्बरीषः सहदेवो भयमानः सुराधाः ॥
दस्यूञ्छिम्यूँश्च पुरुहूत एवैर्हत्वा पृथिव्यां शर्वा निबर्हीत्॥
सनत्क्षेत्रं सखिभिः श्वित्न्येभिः सनत्सूर्य्यं सनदपः सुवज्रः ॥
स मन्युमीः समदनस्य कर्ताऽस्माकेभिर्नृभिः सूर्य्यं सनत्॥
अस्मिन्नहन्त्सत्पतिः पुरुहूतो मरुत्वान्नो भवत्विन्द्र ऊती"॥
(ऋ.१/१००/१७,१८,६)

इति मधुसूदनविद्यावाचस्पतिप्रणीतस्य ब्रह्मविज्ञान-
शास्त्रसंबन्धिनो विज्ञानेतिवृत्तवादस्य
द्वितीयपर्वणि भारतवर्षीयार्य्यो-
पाख्याने दस्युसंहाराख्य-
श्चतुर्थः प्रसङ्गः
संपूर्णः ॥४ ॥

## (३४) कुत्सादि अपहत राजाओं के लिए इन्द्र द्वारा पुनः स्व-स्व भाग का दान

जो-जो क्षेत्र जल के स्रोत थे, अन्न के स्तूप थे, तृणों के स्तूप थे, दस्युओं द्वारा क्लिष्ट (सताये गये) सूर्यधाम थे, इन सभी को जो जिस जिसका था, वह उसको दे दिया गया ॥१ ॥

इस प्रकार दस्युनिग्रह करके इन्द्र ने राजाओं के अपने अपने धन को पूर्ववत् कुत्सादि में विभाजित कर दिया तथा सूर्यसंस्था देवों को सौंप दी गई ॥२ ॥

दस्युओं द्वारा अधिग्रहण की हुई भूमि, जल और सूर्यभवन के विभाग का राजाओं को जो दान किया गया, उसे वार्षागिरों (वृषागिर के पुत्रों) ने ऋग्वेद में कहा है ॥३ ॥

"ऋग्वेद के प्रथम मण्डल के एक सौवें सूक्त में वार्षागिर ऋषियों ने कहा है -

"हे इन्द्र समीपस्थ ऋषियों के साथ ऋज्राश्व, अम्बरीष, सहदेव, भयमान और सुराध् नाम के समस्त वृषागिर के पुत्र (वार्षागिर) तुझ वीर्यवान् इन्द्र के लिए यह उत्तम (निर्दुष्ट) स्तुति गातें हैं॥

उस पुरुहूत (सब मनुष्यों द्वारा आहूत) इन्द्र के सैनिकों के साथ पृथिवी पर स्थित दुष्ट और हिंसा करने वालों को मारकर अपने प्राणघाती वज्र से उनको समूल नष्ट कर दिया। उस सुन्दर वज्र को धारण करने वाले सफेद परिधानालंकर को धारण करने वाले इन्द्र ने मित्रों के साथ भूमि को प्राप्त किया, सूर्य (सूर्यसंस्था) को प्राप्त किया और जल को प्राप्त किया॥

वह इन्द्र (शत्रुओं पर) क्रोध करने वाला है, साथ-साथ आनन्द मनाने योग्य युद्ध का कर्ता है, सज्जनों का स्वामी है, पुरुहूत (सभी के द्वारा आहूत) है इस दिन हमारे मनुष्यों के साथ सूर्य (सूर्यसंस्था) को प्राप्त करे। वह मरुत्वान् (मरुतों को साथ रखने वाला) इन्द्र हमारी रक्षा करने वाला बने॥"(१/१००/१७,१८,६)

**श्री मधुसूदन विद्यावाचस्पति द्वारा प्रणीत ब्रह्मविज्ञानशास्त्र से सम्बन्द्ध विज्ञानेतिवृत्तवाद के द्वितीय पर्व भारतवर्षीयार्योपाख्यान में दस्युसंहार नामक चतुर्थ प्रकम समाप्त हुआ।**

# अथेन्द्रविजयाभिनन्दनं पञ्चमः प्रक्रमः।

## विज्ञानशालायां भारतीयार्य्यैः कृतः कृतज्ञतासूचको विजयमहोत्सवः। सारस्वते सूर्य्यसदने विजयाभिनन्दनमहोत्सवः प्रमहाख्यः।

दस्यूनां निग्रहणादार्य्याणां च स्वराज्यसंप्राप्तेः ॥
सुस्थेऽत्र सर्वलोके स्वर्गायेन्द्रः स गन्तुमभ्यैच्छत् ॥१ ॥
आर्य्याणामधिवक्तुर्देवेन्द्रस्याद्य संमानम् ॥
कर्तुं स कुत्स ऐच्छज्जनतास्तत्राभ्यमन्त्रयत् प्रमहे ॥२ ॥
निषधगिरिस्थस्कन्धावारे शिविरेऽभवन् महः प्रथमम् ॥
अद्य तु सूर्यस्थाने सोमाभिषवोत्सवं पुनर्व्यतनोत् ॥३ ॥
सूर्यस्यायं सदने प्रमहो विजयाभिनन्दनीयो यः ॥
तत्रेन्द्रमस्तुवन्निति विश्वामित्रश्च वक्ति सव्यश्च ॥४ ॥
"युधेन्द्रो मह्ना वरिवश्चकार देवेभ्यः सत्पतिश्चर्षणिप्राः ॥
विवस्वतः सदने अस्य तानि विप्रा उक्थेभिः कवयो गृणन्ति" ॥
(ऋ.३/३४/७)

"न्यू षु वाचं प्रमहे भरामहे गिर इन्द्राय सदने विवस्वतः ॥
नू चिद्धि रत्न ससतामिवाविदन्न दुष्टुतिर्द्रविणोदेषु शस्यते" ॥६ ॥
(सव्यः १/५३/१)

उपकर्तृकृतोपकृतिं कीर्तयितुं यो महोत्सवः क्रियते ॥
उत्तरमहस्तदुक्तं तत्र च पानाशने गुणाख्यानम् ॥५ ॥
बहुभिः सयुङ्नृपालैः कृतज्ञतां दर्शयंस्तदेन्द्राय ॥
प्रमहे चक्रे हर्षात् तस्मिन् विजयोत्सवे कुत्सः ॥६ ॥

# पञ्चम प्रक्रम

## 'इन्द्रविजयाभिनन्दन'

## विज्ञानशाला में भारतीय आर्यों द्वारा कृतज्ञतासूचक विजय महोत्सव सम्पन्न। सरस्वती नाम के नगर में 'सूर्यसदन' में प्रमह नामक विजयाभिनन्दन महोत्सव सम्पन्न।

दस्युओं के निग्रह के पश्चात, आर्यो द्वारा स्वराज्य की प्राप्ति कर लेने पर लोक में सर्वत्र सुव्यवस्था हो जाने पर इन्द्र ने स्वर्ग के लिए प्रस्थान करना चाहा ॥१ ॥

उस प्रमहोत्सव में ऋषि कुत्स ने देवताओं के समर्थक इन्द्र का उस समय सम्मान करना चाहा। अतः वहाँ प्रमह में उपस्थित लोगों से वे मन्त्रणा करने लगे ॥२॥

पहला विजयोत्सव निषध पर्वत पर स्थित सेना की टुकड़ी के शिविर में मनाया गया और आज सूर्यनगर में सोम का सवन करने के उत्सव के रूप में पुनः मनाया गया ॥३॥

इस सूर्यसदन में जो यह विजयाभिनन्दन का उत्सव मनाया गया, उसमें इन्द्र की स्तुति की गई, ऐसा विश्वामित्र और सव्य ऋषि वर्णन करते हैं ॥४॥

"मनुष्यों की कामनाओं को पूर्ण करने वाले, सज्जनों के पालक इन्द्र ने अपने बल से युद्ध के द्वारा शत्रुओं के धन को देवों का बनाया। बुद्धिमान् स्तोता यजमान के घर में इस इन्द्र के उन कर्मो की स्तोत्रों द्वारा प्रशंसा करते हैं॥"(३/३४/७)

विवस्वान् के यज्ञ में शक्तिशाली इन्द्र के लिए उत्तम स्तुति तथा प्रशंसा करते हैं, क्योंकि जैसे चोर सोते हुओं के धन को उठाकर ले जाता है, वैसे ही इन्द्र रत्नों को शीघ्र ही प्राप्त कर लेता है॥ धन देने वालों की बुरी स्तुति प्रशंसित नहीं होती है॥(१/५३/१)

उपकर्ता के उपकारों की प्रशंसा करने के लिए जो उत्सव मनाया जाता है, उसे 'उत्तर मह' अर्थात् "समापनसमारोह" कहा जाता है। इस उत्सव में जलपान, भोजन और गुणों का वर्णन किया जाता है ॥५॥

ऋषि कुत्स ने अनेक अन्य राजाओं के साथ मिलकर उस प्रमह नाम के विजयाभिनन्दन उत्सव में हर्षपूर्वक कृतज्ञता को प्रदर्शित किया ॥६॥

## वीरपानप्रमहाध्याक्षो विश्वामित्रो दस्युवधं कीर्तयन्निन्द्रमभिनन्दयामास।

**ऋ.३/३२ "इन्द्रस्य कर्म सुकृता पुरूणि व्रतानि देवा न मिनन्ति विश्वे॥**
**दाधार यः पृथिवीं द्यामुतेमां जजान सूर्य्यमुषसं सुदंसाः॥८॥**
**त्वमपो यद्ध वृत्रं जघन्वाँ अत्याँ इव प्रासृजः सर्तवाजौ॥**
**शयानमिन्द्र चरता वधेन वव्रिवांसं परिदेवीरदेवम्॥६॥**
**अहन्नहिं परिशयानमर्ण ओजायमानं तुविजात तव्यान्॥**
**न ते महित्वमनु भूदध द्यौर्यदन्यया स्फिग्या क्षामवस्थाः॥११॥**
**यज्ञो हि त इन्द्र वर्धनो भूदुत प्रियः सुतसोमो मियेधः।**
**यज्ञेन यज्ञमव यज्ञियः सन् यज्ञस्ते वज्रमहिहत्य आवत्"॥१२॥**
**ऋ.३/३४ 'मखस्य ते तविषस्य प्र जूतिमियर्मि वाचममृताय भूषन्।**
**इन्द्र क्षितीनामसि मानुषीणां विशां दैवीनामुत पूर्वयावा॥२॥**

महो महानि पनयन्त्यस्येन्द्रस्य कर्म सुकृता पुरूणि।
वृजनेन वृजिनान्त्स पिपेष मायाभिर्दस्यूँरभिभूत्योजाः ॥६ ॥
सत्रासाहं वरेण्यं सहोदां ससवांसं स्वरपश्च देवीः।
ससान यः पृथीवीं द्यामुतेमामिद्रं मदन्त्यनु धीरणासः ॥८ ॥
ससानात्याँ उत सूर्यं ससानेन्द्रः ससान पुरुभोजसं गाम्।
हिरण्ययमुत भोगं ससान हत्वी दस्यून्प्रार्यं वर्णमावत् ॥९ ॥
इन्द्र ओषधीरसनोदहानि वनस्पतींरसनोदन्तरिक्षम्।
बिभेद वलं नुनुदे विवाचोऽथाभवद्दमिताभिक्रतूनाम्" ॥१० ॥
"सखा ह यत्र स सखिभिर्नवग्वैरभिज्ञ्वा सत्वभिर्गा अनुग्मन्।
सत्यं तदिन्द्रो दशभिर्दशग्वैः सूर्यं विवेद तमसि क्षियन्तम्" ॥
(ऋ.३/३९/५)

## विजयोपरान्त किये जाने वाले सोमपान के कार्यक्रम के अध्यक्ष विश्वामित्र द्वारा दस्युवध का वर्णन करते हुए इन्द्र का अभिनन्दन

(३/३२) विश्वामित्र कहते हैं - "उत्तम कर्म करने वाले जिस इन्द्र ने इस पृथ्वी तथा द्युलोक को धारण किया तथा जिसने सूर्य और उषा को उत्पन्न किया, ऐसे इन्द्र के कर्म, उत्तम कर्म और बहुत से व्रतों को विश्वेदेवाः (समस्त देव) भी नष्ट नहीं कर सकते हैं ॥८ ॥

हे इन्द्र ! तूने जब तेजस्वी जलों को रोक कर बैठे हुए उत्तम गुणों से रहित सोते हुए वृत्र को वेग से चलने वाले वज्र से मारा, तब युद्ध में जलों को बहने के लिए घोड़ों के समान मुक्त कर दिया ॥६ ॥

अनेक पदार्थों को उत्पन्न करने वाले इन्द्र ! बलशाली तूने पानी को चारों ओर से घेर कर सोने वाले तथा बलशाली अहि असुर को मारा। जब तूने अपने एक बाजू से पृथ्वी को थामा, तब तेरे उस महत्त्व को द्युलोक ने अनुभव नहीं किया ॥११ ।

हे इन्द्र ! यज्ञ तुझे बढ़ाने वाला हुआ और हवन के योग्य तैयार किया गया सोम तुझे प्रिय हो गया है। तू पूज्य होता हुआ संगठन के द्वारा इस यज्ञ की रक्षा कर। यह यज्ञ अहि को मारने वाले युद्ध में तेरे वज्र की रक्षा करे ॥१२ ॥

ऋग्वेद के ही (३/३४) सूक्त में विश्वामित्र स्तुति करते हैं -

हे इन्द्र ! मैं तुझे अलंकृत करता हुआ, पूजनीय और बलशाली तुझे प्रेरणा देने वाली स्तुति को अमृत की प्राप्ति के लिए कहता हूँ। तू मानवी प्रजाओं के और दैवी प्रजाओं के आगे चलने वाला है ॥२ ॥

इस महान् इन्द्र के बड़े-बड़े कर्म प्रशंसनीय हैं। शत्रु को हराने में समर्थ इस इन्द्र ने अपने बल से कुशलतापूर्वक दूर रखने योग्य शत्रुओं को पूर्णतः नष्ट कर दिया है ॥६ ॥

जिस इन्द्र ने उस द्युलोक और पृथ्वीलोक को दान दिया है, उस शत्रुओं को जीतने वाले, वरण करने योग्य, बल देने वाले, उत्तम कर्मों को करके सुख प्राप्त करने वाले इन्द्र को बुद्धि के साथ रमण करने वाले विद्वान् आनन्दित करते हैं ॥८ ॥

इन्द्र ने घोड़े दान में दिये, सूर्य को दिया, अधिक दूध देने वाली गायें प्रदान की, अनेक प्रकार के स्वर्ण के वस्त्राभूषण प्रदान किये। ऐसे इन्द्र ने दस्युओं को मारकर श्रेष्ठ वर्णों की रक्षा की ॥९ ॥

इन्द्र ने ओषधियां प्रदान की, दिन, वनस्पतियाँ और अन्तरिक्ष प्रदान किया। इन्द्र ने बलासुर को मारा, अनर्गल बोलने वालों को दूर किया और वह अहंकारियों का अहंकार दूर करता है ॥१० ॥

जब इन्द्र गायों को जानकर नौ घोड़ों वाले मित्रों के साथ पीछे-पीछे चला तब दस घोड़ो से जाने वाले दस मित्रों के साथ इन्द्र ने अन्धकार में छिपे हुए सूर्य को पहचाना ॥ (३/३९/५)

## अथ शान्तिकवीरपानानन्तरं प्रमहप्रमुखेन कुत्सेन कृतमिन्द्रविजयाभिनन्दनसूक्तम्।

**ऋ.१/१०१ "प्र मन्दिने पितुमदर्चता वचो यः कृष्णगर्भा निरहन्नृजिश्वना।**
**अवस्यवो वृषणं वज्रदक्षिणं मरुत्वन्तं सख्याय हवामहे ॥१ ॥**
**यो व्यंसं जाहृषाणेन मन्युना यः शम्बरं यो अहन्पिप्रुमव्रतम्।**
**इन्द्रो यः शुष्णमशुषं न्यावृणङ्मरुत्वन्तं सख्याय हवामहे ॥२ ॥**
**यस्य द्यावापृथिवी पौंस्यं महद्यस्य व्रते वरुणो यस्य सूर्य्यः।**
**यस्येन्द्रस्य सिन्धव सश्चति व्रतं मरुत्वन्तं सख्याय हवामहे ॥३ ॥**
**यो अश्वानां यो गवां गोपतिर्वशी य आरितः कर्मणिकर्मणि स्थिरः।**
**वीळोश्चिदिन्द्रो यो असुवन्तो वधो मरुत्वन्तं सख्याय हवामहे ॥४ ॥**
**यो विश्वस्य जगतः प्राणतस्पतिर्यो ब्रह्मणे प्रथमो गा अविन्दत्।**
**इन्द्रो यो दस्यूँरधराँ अवातिरन् मरुत्वन्तं सख्याय हवामहे ॥५ ॥**
**य शूरेभिर्हव्यो यश्च भीरुभिर्यो धावद्भिर्हूयते यश्च जिग्युभिः।**
**इन्द्रं यं विश्वा भुवनाभिसंदधुर्मरुत्वन्तं सख्याय हवामहे ॥६ ॥**
**रुद्राणामेति प्रदिशा विचक्षणो रुद्रेभिर्योषा तनुते पृथु ज्रयः।**

इन्द्रं मनीषा अभ्यर्चति श्रुतं मरुत्वन्तं सख्याय हवामहे ॥७॥
यद्वा मरुत्वः परमे सधस्थे यद्वावमे वृजने मादयासे।
अत आयाह्यध्वरं, नो अच्छा त्वाया हविश्चकृमा सत्यराधः ॥८॥
त्वायेन्द्र सोमं सुषुमा सुदक्ष त्वाया हविश्चकृमा ब्रह्मवाहः।
अधा नियुत्वः सगणो मरुद्भिरस्मिन्यज्ञे बर्हिषि मादयस्व ॥९॥
मादयस्व हरिभिर्ये त इन्द्र विष्यस्व शिप्रे विसृजस्व धेने।
आ त्वा सुशिप्र हरयो वहन्तूशन्हव्यानि प्रति नो जुषस्व ॥१०॥
मरुत्स्तोत्रस्य वृजनस्य गोपा वयमिन्द्रेण सनुयाम वाजम्।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः" ॥११॥
ऋ.१/१०२ "इमां ते धियं प्रभरे महो महीमस्य स्तोत्रे धिषणा यत्त आनजे।
तमुत्सवे च प्रसवे च सासहिमिन्द्रं देवासः शवसामदन्ननु ॥१॥
अस्य श्रवो नद्यःसप्त बिभ्रति द्यावाक्षामा पृथिवी दर्शतं वपुः।
अस्मे सूर्याचन्द्रमसाभिचक्षे श्रद्धे कमिन्द्र चरतो वितर्तुरम् ॥२॥
तं स्मा रथं मघवन् प्राव सातये जैत्रं यं ते अनुमदाम संगमे।
आजा न इन्द्र मनसा पुरुष्टुत त्वायद्भ्यो मघवञ्छर्म यच्छ नः ॥३॥
वयं जयेम त्वया युजा वृतमस्माकमंशमुदवा भरेभरे।
अस्मभ्यमिन्द्र वरिवः सुगं कृधि प्रशत्रूणां मघवन्वृष्ण्या रुज ॥४॥
नाना हि त्वा हवमाना जना इमे धनानां धर्तरवसा विपन्यवः
अस्माकं स्मा रथमातिष्ठ सातये जैत्रं हीन्द्र निभृतं मनस्तव ॥५॥
गोजिता बाहू अमितक्रतुः सिमः कर्मन्कर्मञ्छतमूतिः खजङ्करः।
अकल्प इन्द्रः प्रतिमानमोजसाथा जना वि ह्वयन्ते सिषासवः ॥६॥
उत्ते शतान्मघवन्नुच्च भूयस उत्सहस्राद्रिरिचे कृष्टिषु श्रवः।
अमात्रं त्वां धिषणा तित्विषे मह्यधा वृत्राणि जिघ्नसे पुरन्दर ॥७॥
त्रिविष्टिधातु प्रतिमानमोजसस्तिस्रो भूमिर्नृपते त्रीणि रोचना।
अतीदं विश्वं भुवनं ववक्षिथाशत्रुरिन्द्र जनुषा सनादसि ॥८॥
त्वां देवेषु प्रथमं हवामहे त्वं बभूथ पृतनासु सासहिः।
सेमं नः कारुमुपमन्युमुद्भिदमिन्द्रः कृणोतु प्रसवे रथं पुरः ॥९॥
त्वं जिगेथ न धना रुरोधिथार्भेष्वाजा मघवन्महत्सु च।
त्वामुग्रमवसे सं शिशीमस्यथा न इन्द्र हवनेषु चोदय ॥१०॥
विश्वाहेन्द्रो अधिवक्ता नो अस्त्वपरिह्वृताः सनुयाम वाजम्।

तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥११॥
ऋ.१/१०३ "तत् त इन्द्रियं परमं पराचैरधारयन्त कवयः पुरेदम्।
क्षमेदमन्यद्दिव्यन्यदस्य समी पृच्यते समनेव केतुः ॥१॥
स धारयत्पृथिवीं पप्रथच्च वज्रेण हत्वा निरपः ससर्ज।
आहन्नहिमभिनद्रौहिणं व्यहन्व्यंसं मघवा शचीभिः ॥२॥
स जातूभर्मा श्रद्दधान ओजः पुरो विभिन्नचरद्वि दासीः।
विद्वान्वज्रिदस्यवे हेतिमस्यायं सहो वर्धया द्युम्नमिन्द्र ॥३॥
तदूचुषे मानुषेमा युगानि कीर्तेन्य मघवा नाम बिभ्रत्।
उपप्रयन्दस्युहत्याय वज्री यद्ध सूनुः श्रवसे नाम दधे ॥४॥
तदस्येदं पश्यता भूरिपुष्टं श्रदिन्द्रस्य धत्तन वीर्याय।
स गा अविन्दत्सो अविन्ददश्वान्स ओषधीः सो अपः स वनानि ॥५॥
भूरिकर्मणे वृषभाय वृष्णे सत्यशुष्माय सुनवाम सोमम्।
य आदृत्या परिपन्थीव शूरोऽयज्वनो विभजन्नेति वेदः ॥६॥
तदिन्द्र प्रेव वीर्य्यं चकर्थ यत्ससन्तं वज्रेणाबोधयोऽहिम्।
अनु त्वा पत्नीर्हृषितं वयश्च विश्वे देवासो अमदन्ननु त्वा ॥७॥
शुष्णं पिप्रुं कुयवं वृत्रमिन्द्र यदावधीर्विपुरः शंबरस्य।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः" ॥८॥
ऋ.१/१०४ "योनिष्ट इन्द्र निषदे अकारि तमा निषीद स्वानो नार्वा।
विमुच्या वयोऽवसायाश्वान्दोषा वस्तोर्वहीयसः प्रपित्वे ॥१॥
ओ त्ये नर इन्द्रमूतये गुर्नू चित्तान्त्सद्यो अध्वनो जगम्यात्।
देवासो मन्युं दासस्य श्चम्नन्ते न आवक्षन्त्सुविताय वर्णम् ॥२॥
अव त्मना भरते केतवेदा अव त्मना भरते फेनमुदन्।
क्षीरेण स्नातः कुयवस्य योषे हते ते स्यातां प्रवणे शिफायाः ॥३॥
युयोप नाभिरुपरस्यायोः प्र पूर्वाभिस्तरते राष्टि शूरः।
अञ्जसी कुलिशी वीरपत्नी पयो हिन्वाना उदभिर्भरन्ते ॥४॥
प्रति यत् स्या नीथादर्शि दस्योरोको नाच्छा सादनं जानती गात्।
अध स्मा नो मघवञ्चर्कृतादिन्मा नो मघेव निष्षपी परादाः ॥५॥
स त्वं न इन्द्र सूर्य्यै सो अप्स्वनागास्त्व आ भज जीवशंसे।
मान्तरां भुजमां रीरिषो नः श्रद्धितं ते महत इन्द्रियाय ॥६॥
अधा मन्ये श्रत्ते अस्मा अधायि वृषा चोदस्व महते धनाय॥
मा नो अकृते पुरुहूत योनाविन्द्र क्षुध्यद्भ्यो वय आसुतिं दाः ॥७॥

**मा नो वधीरिन्द्रमा परादा मा नः प्रिया भोजनानि प्रमोषीः।**
**आण्डा मा नो मघवञ्छक्र निर्भेन्मा नः पात्रा भेत्सहजानुषाणि ॥८ ॥**
**अर्वाङेहि सोमकामं त्साहुरय सुततस्य पिबा मदाय।**
**उरुव्यचा जठर आवृषस्व पितेव नः शृणुहि हूयमानः" ॥९ ॥**

## तदनन्तर शांतिपूर्वक वीरों द्वारा सोमपान करने के पश्चात् कुत्स ऋषि द्वारा इन्द्र के विजयाभिनन्दन में उक्त सूक्त :-

हे मनुष्यों ! तुम उत्साहयुक्त इन्द्र की अन्नादि से युक्त वाणियों से स्तुति करो, जिसने ऋजिश्वा राजा के साथ वृत्र की अन्धेरे में छिपी नगरियों को नष्ट किया। रक्षा की इच्छा करने वाले हम बलवान् दाहिने हाथ में वज्रधारण करने वाले मरुतों से युक्त इन्द्र को मित्रता के लिए बुलाते हैं ॥१ ॥

जिस इन्द्र ने अत्यधिक क्रोध से कटे हुए कंधो वाले असुर को मारा, जिसने शम्बर को मारा तथा जिसने व्रतहीन पिप्रु असुर को मारा तथा जिस इन्द्र ने सबका भक्षण करने वाले शुष्ण असुर को मारा, उस मरुतों से युक्त इन्द्र को मित्रता के लिए बुलाते हैं ॥२ ॥

जिसके महान् बल का द्युलोक और पृथ्वीलोक अनुसरण करते हैं, वरुण, सूर्य और नदियाँ जिस इन्द्र के नियम में चलती है, ऐसे इन्द्र को अपनी रक्षा के लिए सभी लोग बुलाते हैं ॥३ ॥

जो इन्द्र घोड़ों का स्वामी है, जो गायों का स्वामी है, जो सब कों वश में रखता है तथा जो प्रत्येक कार्य में अचल रहकर प्रशंसित रहता है, जो इन्द्र नियमपूर्वक सोमयाग न करने वाले को मारता है, ऐसे मरुतों से युक्त इन्द्र को मित्रता के लिए बुलाते हैं ॥४ ॥

जो समस्त प्राण रूपधारी प्राणियों का स्वामी है, जिस इन्द्र ने सर्वप्रथम ब्राह्मणों के लिए गायों को प्राप्त किया, जिस इन्द्र ने शत्रुओं को परास्त करके मारा, ऐसे मरुतों के साथ इन्द्र को मित्रता के लिए बुलाते हैं ॥५ ॥

जो इन्द्र शूरवीरों द्वारा बुलाने योग्य है, जो भीरुओं द्वारा भी बुलाने योग्य है, जो युद्ध में भागने वालों के द्वारा तथा विजय पाने वालों के द्वारा बुलाया जाता है, जिस इन्द्र को समस्त संसार अग्रणी मानता है, ऐसे मरुतों से युक्त इन्द्र को मित्रता के लिए बुलाते हैं ॥६ ॥

जो बुद्धिमान् इन्द्र मरुतों की सहायता करता है, मरुतों और उषा के योग से तेज को फैलाता है, मनुष्यों के हृदय से निकली वाणी जिस इन्द्र को प्राप्त होती है, ऐसे मरुतों से युक्त इन्द्र को मित्रता के लिए बुलाते हैं ॥७ ॥

हे मरुतों से युक्त इन्द्र ! तुझे छोटे और बड़े सभी घरों में आनन्द प्राप्त होता है, उस स्थान से हमारे यज्ञ में सीधा आ। हे स्थिर ऐश्वर्यवान् इन्द्र ! तुझे चाहने वाले हम तुझे हवि प्रदान करते हैं ॥८ ॥

हे उत्तम बल वाले इन्द्र ! तेरी कामना से ही हम सोम को तैयार करते हैं। हे स्तुति से प्राप्त होने वाले इन्द्र ! तेरी कामना से हम हवि प्रदान करते हैं, हे घोड़ो वाले इन्द्र ! मरुद्गणों के साथ इस यज्ञ में आसन ग्रहण करके आनन्दित हो ॥९ ॥

हे इन्द्र ! तू घोड़ों के साथ आनन्दित हो तथा तेरे जो जबड़े हैं, इनको खोलकर वाणी को प्रकट कर। सुन्दर शिरस्त्राण वाले इन्द्र ! घोड़े तुझे हमारे पास लावें, हे कामना करने वाले इन्द्र ! हमारी हवियों को स्नेहपूर्वक प्राप्त कर ॥१० ॥

मरुतों द्वारा स्तुतियोग्य तथा शत्रुओं को मारने वाले इन्द्र द्वारा संरक्षित हम इन्द्र की सहायता से अन्न को प्राप्त करें, इसलिए मित्र, वरुण, अदिति, सिन्धु, पृथिवी और द्युलोक हमारी सहायता करें ॥११ ॥(१/१०१)

(१/१०२) - हे इन्द्र ! जिस कारण तेरी बुद्धि हमारी इस स्तुति से युक्त होती है, इसलिए महान् इन्द्र के लिए मैं उत्तम स्तुति करता हूँ। देवगण धनों को उत्पन्न करने वाले, शत्रु को हराकर उत्कर्ष वृद्धि करने वाले इन्द्र को अपने उत्साह से आनन्दित करते हैं ॥१ ॥

इस इन्द्र के यश को सातों नदियाँ धारण करती हैं तथा इसके सुन्दर रूप को द्युलोक, पृथ्वी और अन्तरिक्ष लोक धारण करते हैं, हे इन्द्र ! हमें प्रकाश देने के लिए तथा श्रद्धा के लिए सूर्य और चन्द्रमा दोनों सुखपूर्वक आने-जाने की गति करते हैं ॥२ ॥

स्तुतियों से प्रशंसित और ऐश्वर्यवान् हे इन्द्र ! तेरे विजय प्राप्त करने वाले युद्ध में उत्साहित करते हैं, उसी रथ को हमारी विजय के लिए प्रेरित कर और हे इन्द्र ! हम तेरी कामना करने वाले हैं, हमें सुख प्रदान कर ॥३ ॥

हे धनवान् इन्द्र ! तेरी सहायता से हम घेरने वाले शत्रु को जीतें। तू हमारी रक्षा कर, हमारे लिए आसानी से धन प्राप्त करा तथा शत्रुओं के बल का नाश कर ॥४ ॥

हे धनों को धारण करने वाले इन्द्र ! तुझे बुलाने वाले, स्तुति करने वाले ये मनुष्य अनेक हैं, इसलिए धनप्राप्ति के लिए तू हमारे ही रथ में आकर बैठ, क्योंकि तेरा शान्त मन जयशील है ॥५ ॥

इस इन्द्र की भुजाएँ गायों को जीतने वाली हैं, वह इन्द्र स्वयं भी असीम बल वाला है, प्रत्येक कर्म में अनेक सुरक्षा के साधन हैं, संग्राम करने वाला, अद्वितीय बल की मूर्ति हैं, इसलिए धन की कामना वाले मनुष्य उसे बुलाते हैं ॥६ ॥

हे इन्द्र ! मनुष्यों में इस इन्द्र का यश सैंकड़ो और हजारों रूपों से भी अधिक है। मनुष्यों की स्तुति इस अपरिमित बल वाले इन्द्र का बल बढ़ाती है तब यह शत्रुओं के नगरों का ध्वंस करके शत्रुओं को मारता है ॥७ ॥

हे मनुष्यों के पालक इन्द्र ! तेरे बल का प्रमाण तिगुना है। तू तीनों भूमियों को, तीन तेजों को तथा समस्त भुवन को संचालित करता है, तू जन्म से ही सदैव शत्रुओं से रहित रहा है ॥८ ॥

हे इन्द्र ! देवों में प्रमुख तुझे बुलाते हैं, तू युद्ध में शत्रुओं को मारने वाला हो। वह इन्द्र हमारे युद्धयोग्य तेजस्वी और शत्रुओं को खदेड़ने वाले रथ को आगे करे ॥९ ॥

हे इन्द्र ! तू शत्रुओं को जीतता है, और धनों को रोकता नहीं है, हे धनवान् इन्द्र ! हम छोटे और बड़े सभी युद्धो में संरक्षण के लिए शक्तिशाली तुझे ही बुलाते हैं। इसलिए तू हमें युद्धों में प्रेरित कर ॥१० ॥

यह इन्द्र सदा हमारे पक्ष में बोलने वाला है, हम कुटिलतापूर्ण व्यवहार न करते हुए अन्न इत्यादि प्राप्त करें, इसलिए मित्र, वरुण, अदिति, सिन्धु, पृथ्वी और द्युलोक हमें सम्पत्ति प्रदान करें ॥११ ॥

ऋग्वेद के ही (१/१०३) सूक्त में कुत्स आंगिरस ऋषि कहते हैं -

हे इन्द्र ! तेरे उस उत्तम बल को दूरदर्शी विद्वानों ने शत्रु को मारने वाले कर्मो के रूप में धारण किया था, इस इन्द्र के बल पृथ्वी और द्युलोक में अलग अलग प्रकार के हैं। इसके ये बल जैसे युद्ध में ध्वज परस्पर मिलते हैं, उसी प्रकार परस्पर संयुक्त होकर शत्रु का संहार करते हैं ॥१ ॥

उस इन्द्र ने पृथिवी को धारण किया और फैलाया, तथा वृत्र को वज्र से मार कर जलों को बहाया, अहि असुर को मारा, रोहिणासुर का वध किया तथा धनवान् इन्द्र ने शक्तियों से व्यंसासुर को मारा ॥२ ॥

बिजली के अस्त्र को धारण करने वाला तथा बल पर श्रद्धा रखने वाला वह इन्द्र दस्युओं के नगरों को तोड़ते हुए विचरण करता है, हे ज्ञानवान् वज्रधारी इन्द्र ! इस स्तोता के शत्रु पर आयुध फैंक कर, श्रेष्ठ पुरूष के बल तथा यश को बढ़ा ॥३ ॥

बलवान्, वज्र को धारण करने वाले इन्द्र ने यश के लिए, शत्रु को मारने के लिए, उसके समीप जाते हुए, जिस यश को धारण किया था, उस प्रशंसा के योग्य यश को इन्द्र ने स्तोता के लिए युगों तक धारण किया है ॥४ ॥

उस इन्द्र ने गायें प्राप्त कीं, उसने घोड़े, ओषध, जल और धनों को प्राप्त किया है। अतः हे मनुष्यों ! उस इन्द्र के इस महान् बल को देखो और इस पर श्रद्धा करो ॥५ ॥

जो शूरवीर इन्द्र ज्ञानियों का आदर करके, लुटेरे के समान अपने पास धन जोड़ कर रखने वाले तथा यज्ञ न करने वाले असुर का धन छीन कर उसे ज्ञानियों में बाँटता हुआ जाता है, उस बहुत से उत्तम कर्मो को करने वाले बलवान्, दानदाता और सत्यवादी इन्द्र के लिए हम सोम का सवन करें ॥६ ॥

हे इन्द्र ! जब तूने सोते हुए अहि को वज्र से जगाया, तथा हर्षित हुए तुझे पत्नियों ने आनन्दित किया तथा गतिशील मरुतों ने तथा सभी देवों ने आनन्दित किया, तब अपने बल को तूने प्रकट किया ॥७ ॥

हे इन्द्र ! जब तूने शुष्ण, पिप्रु, कुयव, और वृत्र को मारा तब शंबरासुर के नगरों को भी तोड़ डाला। इसलिए मित्र, वरुण, अदिति, सिन्धु, पृथ्वी और द्युलोक हमें बढ़ावें ॥८ ॥

(१/१०४) में भी कुत्स आंगिरस कहते हैं - हे इन्द्र ! हमने इस स्थान को तेरे बैठने के लिए बनाया है, अतः यज्ञकाल की प्राप्ति पर रात दिन ढोने वाले घोड़ो को खोल कर उनके बन्धनों को खोल कर उस स्थान पर हिनहिनाते हुए घोड़ो के समान आकर बैठ ॥१ ॥

वे मनुष्य संरक्षण के लिए इन्द्र के पास आये, इन्द्र ने उन्हें शीघ्र ही उसी समय उत्तम मार्गों पर चलाया, देवगण असुरों के क्रोध को नष्ट करें तथा वे देव यज्ञ के लिए वरणीय इन्द्र को हमारे पास ले आवें ॥२ ॥

धन को जानने वाला कुयवासुर स्वयं ही दूसरों के धन का अपहरण करता है, तथा उदय होते हुए झागयुक्त जल का स्वयं अपहरण करता है। तब कुवय की स्त्रियाँ उस जल से स्नान करती हैं, वे दोनों शिफा नदी के प्रवाह में डूब कर नष्ट हो जावें ॥३ ॥

मेघों में रहने वाले असुर का केन्द्रस्थान छिपा हुआ है, वह जलों से बढ़ता हुआ तथा शूरवीर हो कर तेजस्वी होता है, उसे जलों को बहाती हुई अंजसी, कुलिशी, वीर पत्नियों की तरह नदियाँ जलों से भर देती हैं ॥४ ॥

हे इन्द्र ! क्योंकि हमने उस मार्ग को देख लिया है, जो दस्यु के घर को उसी प्रकार सीधा जाता है जैसे गाय अपने स्थान को जाती है। इसलिए हे धनवान् इन्द्र ! असुरों के उपद्रव से हमारी रक्षा कर, जैसे व्यसनी पुरुष धन को फैंकता है उस प्रकार हमें मत फैंक ॥५ ॥

हे इन्द्र ! ऐसा तू हमें सूर्य के प्रकाश से संयुक्त कर, हमें जलों से संयुक्त कर तथा जीवों के द्वारा प्रशंसित पापरहित कार्य में संयुक्त कर। पालने योग्य प्रजा की हिंसा मत कर, क्योंकि हमने तेने महान् बल पर श्रद्धा की है ॥६ ॥

हे बलवान् और अनेकों लोगों द्वारा प्रार्थित इन्द्र ! मैं अब तेरा सम्मान करता हूँ, तेरे इस बल के लिए मैं श्रद्धा रखता हूँ, हमें महान् ऐश्वर्य के लिए प्रेरित कर, हमें धन-शून्य घर में मत रख तथा भूखों को अन्न और पीने की सामग्री दे ॥७ ॥

हे ऐश्वर्यवान्, सामर्थ्यवान् इन्द्र ! हमारी हिंसा मत कर, हमारा त्याग मत कर, हमारे प्रिय भोजन का नाश मत कर, हमारे गर्भों का नाश मत कर, तथा घुटनों से चलने वाली हमारी सन्तान का नाश मत कर ॥८ ॥

हे इन्द्र ! लोग तुम्हें सोम का इच्छुक कहते हैं, अतः तू सामने आ। यह सोम तेरे लिए निचोड़ा गया है, आनन्द के लिए उस रस को पी। बहुत विशाल होकर अपना पेट सोम से भर ले तथा बुलाया हुआ तू हमारी प्रार्थनाओं को पिता के समान सुन ॥९ ॥

## इन्द्रविजयाभिनन्दनसूक्ते वार्षागिराणां राज्ञां कुत्ससहयोगित्वम्।

**ऋज्राश्वाद्याः पञ्च वार्षागिराख्या राजानः प्रागिन्द्रतो नष्टकष्टाः।**
**दस्युध्वंसेऽत्युग्रमैन्द्रं चरित्रं संसद्युक्त्वाऽख्यापयन् सर्वलोके ॥१ ॥**

पञ्चदशर्क्षु न्यास्थन् संस्तविकं त्वं वृषागिरः पुत्राः।
चतसृष्वन्ते कौत्सात् संस्तविकाच्च सहयोगिताऽत्रास्य ॥२॥
संरक्षकतामेते याचन्ते तेन करदानम्।
अभ्युपगम्यात्मानं न्यवेदयन्निन्द्रपारतन्त्र्येऽपि ॥३॥

## इन्द्रविजयाभिनन्दन सूक्त में वृषागिर के पुत्र राजाओं का कुत्स को सहयोग

इन्द्र ने जिनका कष्ट निवारण किया था, ऐसे ऋज्राश्व इत्यादि पांच वृषागिर नाम के राजाओ ने दस्युओं का ध्वंस करने पर इन्द्र के अत्यन्त बलयुक्त उग्र चरित्र का एकत्रित होकर समस्त लोक में गान किया ॥१॥

वृषागिर के पुत्रों ने पन्द्रह ऋचाओं में इन्द्र के प्रति अपनी स्तुति रखी है तथा अन्तिम चार ऋचाओं में कुत्स द्वारा की गई स्तुति और सहयोगि.ता से इन्द्र की संरक्षकता तथा कर-दान (टैक्स देने) की याचना करते हैं और स्वयं को इन्द्र की परतन्त्रता में भी प्रस्तुत करके निवेदित कर दिया ॥३॥

## वार्षागिराणामात्मसमर्पणम्।

### इन्द्रविजयाभिनन्दने वार्षागिराणां कुत्ससहयोगेनात्मसमर्पणं सूक्तम्।

ऋ.१/१०० "स यो वृषा वृष्ण्येभिः समोका महो दिवः पृथिव्याश्च सम्राट्।
सतीनसत्वा हव्यो भरेषु मरुत्वान्नो भवत्विन्द्र ऊती ॥१॥
यस्यानाप्तः सूर्यस्येव यामो भरेभरे वृत्रहा शुष्मो अस्ति।
वृषन्तमः सखिभिः स्वेभिरेवैर्मरुत्वान्नो भवत्विन्द्र ऊती ॥२॥
दिवो न यस्य रेतसो दुघानाः पन्थासो यन्ति शवसापरीताः।
तरद्द्वेषाः सासहिः पौंस्येभिर्मरुत्वान्नो भवत्विन्द्र ऊती ॥३॥
सो अङ्गिरोभिरस्तमो भूद्वृषा वृषभिः सखिभिः सखा सन्।
ऋग्मिभिर्ऋग्मी गातुभिर्ज्येष्ठो मरुत्वान्नो भवत्विन्द्र ऊती ॥४॥
स सूनिभिर्न रुद्रेभिर्ऋभ्वा नृषाह्ये सासह्वाँ अमित्रान्।
सनीळेभिः श्रवस्यानि तूर्वन् मरुत्वान्नो भवत्विन्द्र ऊती ॥५॥
स मन्युमीः समदनस्य कर्ताऽस्माकेभिर्नृभिः सूर्यं सनत्।
अस्मिन्नहन्त्सत्पतिः पुरुहूतो मरुत्वान्नो भवत्विन्द्र ऊती ॥६॥
तमूतयो रणयञ्छूरसातौ तं क्षेमस्य क्षितयः कृण्वत त्राम्।
स विश्वस्य करुणस्येश एको मरुत्वान्नो भवित्विन्द्र ऊती ॥७॥

तमप्सन्त शवस उत्सवेषु नरो नरमवसे तं धनाय।
सो अन्धे चित्तमसि ज्योतिर्विदन्मरुत्वान्नो भवत्विन्द्र ऊती ॥८ ॥
स सव्येन यमति व्राधतश्चित्स दक्षिणे संगृभीता कृतानि।
स कीरिणा चित्सनिता धनानि मरुत्वान्नो भवत्विन्द्र ऊती ॥९ ॥
स ग्रामेभिः सनिता स रथेभिर्विदे विश्वाभिः कृष्टिभिर्न्वद्य ॥
स पौंस्येभिरभिभूरशस्तीर्मरुत्वान्नो भवत्विन्द्र ऊती ॥१० ॥
स जामिभिर्यत्समजाति मीळ्हेऽजामिभिर्वा पुरुहूत एवैः ॥
अपां तोकस्य तनयस्य जेषे मरुत्वान्नो भवत्विन्द्र ऊती ॥११ ॥
स वज्रभृद्दस्युहा भीम उग्रः सहस्रचेताः शतनीथ ऋभ्वा ॥
चम्रीषो न शवसा पाञ्चजन्यो मरुत्वान्नो भवत्विन्द्र ऊती ॥१२ ॥
तस्य वज्रः क्रन्दति स्मत्स्वर्षा दिवो न त्वेषो रवथः शिमीवान् ॥
तं सचन्ते सनयस्तं धनानि मरुत्वान्नो भवत्विन्द्र ऊती ॥१३ ॥
यस्याजस्त्रं शवसा मानुमुक्थं परिभुजद्रोदसी विश्वतः सीम् ॥
स पारिषत्क्रतुभिर्मन्दसानी मरुत्वान्नो भवत्विन्द्र ऊती ॥१४ ॥
न यस्य देवा देवता न मर्त्ता आपश्चन शवसो अन्तमापुः ॥
स प्ररिक्वा त्वक्षसा क्ष्मो दिवश्च मरुत्वान्नो भवत्विन्द्र ऊती ॥१५ ॥
रोहिच्छ्यावा सुमदंशुर्ललामीर्द्युक्षा राय ऋज्राश्वस्य ॥
वृषणवन्तं बिभ्रती धूर्षु रथं मन्द्रा चिकेत नाहुषीषु विक्षु ॥१६ ॥
एतत्त्यत्त इन्द्र वृष्ण उक्थं वार्षागिरा अभिगृणन्ति राधः ॥
ऋज्राश्वः प्रष्टिभिरम्बरीषः सहदेवो भयमानः सुराधाः ॥१७ ॥
दस्यूञ्छिम्यूँश्च पुरुहूत एवैर्हत्वा पृथिव्यां शर्वा निबर्हीत्।
सनत्क्षेत्रं सखिभिः शिवत्न्येभिः सनत्सूर्यं सनदपः सुवज्रः ॥१८ ॥
विश्वाहेन्द्रो अधिवक्ता नो अस्त्वपरिह्वृताः सनुयाम वाजम्।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः" ॥१९ ॥

## वार्षागिरों का आत्मसमर्पण।

### इन्द्र विजयाभिनन्दन में कुत्स के सहयोग से वार्षागिर राजाओं का आत्मसमर्पण सूक्त (१/१००) में भली प्रकार वर्णन किया गया है।

"जो बलवान् इन्द्र बल बढ़ाने वाले धनों के साथ निवास करता है, वह द्युलोक और पृथ्वी का बड़ा सम्राट् है, वह जलों का प्रेरक है और युद्ध में सहायतार्थ प्रार्थना करने योग्य है। वह मरुतों से युक्त इन्द्र हमारी रक्षा करे ॥१ ॥

जिस इन्द्र की गति सूर्य के समान अप्राप्त है अर्थात् उससे अधिक कोई नहीं चल सकता है, जो वृत्रनाशक इन्द्र प्रत्येक युद्ध में असुरों को भय से सुखाने वाला है, जो अपने साथ आक्रमण करने में कुशल मरुत् रूपी मित्रों के साथ मिल कर बड़ा बलिष्ठ होता है। वह मरुतों वाला इन्द्र हमारा रक्षक हो ॥२॥

जिस इन्द्र का स्वाधीन मार्ग सूर्य की किरणों के समान जल को देने वाला तथा आगे बढ़ाने वाला है, वह अपने पराक्रमों से द्वेष नाश करने वाला और शत्रु का पराभव करने वाला है, मरुतों के साथ वह इन्द्र हमारा रक्षक बने ॥३॥

वह इन्द्र अंगिरादि ऋषि में पूजनीय है, मित्रों में श्रेष्ठ मित्र होता हुआ, बलवानों में अधिक बलवान् और प्रशंसनीयों में अधिक प्रशंसायोग्य और गमन करने वालों में श्रेष्ठ है। ऐसा मरुतों के साथ रहने वाला इन्द्र हमारा रक्षक बने ॥४॥

पुत्रों के समान प्रिय और मरुतों से युक्त महान् इन्द्र ने वीरों के द्वारा सहन करने योग्य युद्ध में शत्रुओं को पराजित किया। एक साथ रहने वाले मरुतों के साथ मिल कर, अन्न को बढ़ाने वाला, जलों को नीचे गिराता हुआ मरुतों के साथ इन्द्र हमारी रक्षा करे ॥५॥

वह शत्रुओं पर क्रोध करने वाला, जहाँ मिलकर साथ विजय का आनन्द मनाते हैं, ऐसे युद्धों को करने वाला, सज्जनों का पालक, सभी लोगों से प्रशंसित इन्द्र आज ही के दिन वीरों के साथ मिलकर असुरों द्वारा छिपाये हुए सूर्य को प्राप्त करे। वह मरुतों को साथ रखने वाला इन्द्र इस प्रकार हमारी रक्षा करे ॥६॥

धन प्राप्त करने योग्य युद्ध में शूरवीरों ने इन्द्र को प्रसन्न किया है, प्रजाओं ने उसे क्षमा योग्य धन का रक्षक बनाया है, वह इन्द्र अकेला ही सम्पूर्ण उत्तम कर्मों का शासक, संचालक है, ऐसा वह मरुतों वाला इन्द्र हमारी रक्षा करे ॥७॥

बलशाली वीरों ने उत्सवों और युद्धों में उस वीर इन्द्र को रक्षा और धन के लिए प्राप्त किया। उस वीर इन्द्र ने घोर अन्धकार में भी प्रकाश को प्राप्त किया। ऐसा वह मरुत्वान् इन्द्र हमारा रक्षक हो ॥८॥

वह इन्द्र बांये हाथ से बड़े शत्रुओं को भी वश में करता है, वह दाहिने हाथ से किये गये सुकर्मों को ग्रहण करता है, वह स्तुति मात्र से प्रसन्न होकर उन्हें धन बांटता है। ऐसा वह मरुत्वान् इन्द्र हमारा रक्षक बने ॥९॥

वह इन्द्र मरुतों के संघो से और रथों द्वारा धन का दाता है, वह सम्पूर्ण प्रजाओं द्वारा आज भी जाना जाता है, वह बलों से निन्दनीय शत्रुओं को पराजित करने वाला है। ऐसा वह मरुत्वान् इन्द्र हमारा रक्षक बने ॥१०॥

वह बहुतों द्वारा सहायतार्थ बुलाया गया इन्द्र जिस समय बन्धु अथवा अबन्धु सैनिकों के साथ युद्ध में जाता है तब मित्रवत् उन वीरों के पुत्र-पौत्रो की विजय के लिए प्रयत्न करता है। ऐसा वह मरुत्वान् हमारा रक्षक बने ॥११॥

वह वज्रधारी, दुष्टनाशक, भयंकर, वीर, ज्ञानी, सैकड़ो नीतियों को जानने वाला महान् एकत्रित होने के समान बल से पांच प्रकार के मनुष्यों का हितकारी है, ऐसा मरुत्वान् इन्द्र हमारा रक्षक बने ॥१२॥

उस इन्द्र का वज्र बहुत गर्जना करता है। वह इन्द्र स्वर्ग की रक्षा करने वाला, द्युलोक में रहने वाले सूर्य के समान तेजस्वी, व्याख्याता और कर्म में कुशल है। सब प्रकार के दान और धन उसके पास रहते हैं। ऐसा मरुत्वान् इन्द्र हमारा रक्षक बने ॥१३॥

जिस इन्द्र का प्रशंसनीय बल अपनी शक्ति से दोनों लोकों का सब तरफ से निरन्तर पालन कर रहा है, वह पुरुषार्थों से हर्षित होने वाला इन्द्र हमें कष्ट से मुक्त करे। ऐसा मरुत्वान् इन्द्र हमारा रक्षक बने ॥१४॥

जिस इन्द्र के बल का अन्त दानशील एवं तेजस्वी देव, मनुषय और जल नहीं पा सकते हैं, वह इन्द्र अपनी सूक्ष्म शक्ति से पृथिवी और द्युलोक से आगे बढ़ा हुआ है, ऐसा मरुत्वान् इन्द्र अपनी सूक्ष्म शक्ति के साथ हमारा रक्षक बने ॥१५॥

लाल और काले रंग वाली उत्तम तेजस्वी आभूषणों से युक्त द्युलोकस्थित आनन्ददायी अश्वशक्ति ऋज्राश्व ऋषि के ऐश्वर्यवर्धन के लिए बलवान् इन्द्र से युक्त रथ को धुरों में लगाकर खींचती हुई मानुषी प्रजाओं में प्रकट हो रही है ॥१६॥

हे इन्द्र! समीप रहने वाले ऋषियों के साथ ऋज्राश्व, अम्बरीष, सहदेव, भयमान और सुधाधस् ये सारे वृषागिर के पुत्र तुझ सामर्थ्यवान् इन्द्र के उन निर्दोष स्तोत्रों का गान करते हैं ॥१७॥

जिसे अपनी सहायता के लिए बुलातें हैं, ऐसे इन्द्र ने सैनिकों के साथ मिलकर पृथिवी पर रहने वाले दुष्ट और हिंसकों पर प्रहार करके वज्र से उनको निर्मूल कर दिया, तब उस उत्तम वज्र वाले ने श्वेत वस्त्राभूषण वाले मित्रों के साथ मिलकर भूमि प्राप्त की, सूर्य प्राप्त किया और जल को प्राप्त किया ॥१८॥

इन्द्र सदैव हमें उत्तम सलाह देने वाला हो। हम भी कुटिलता छोड़कर उसे अन्न दें। मित्र, वरुण, अदिति, सिन्धु, पृथिवी और द्यौ हमारी प्रेरणा के स्रोत बनें।।१९॥

## इतः परं कुत्सवदन्येषामप्यार्याणां यत्र प्रमहे धन्यवादरूपाः सूक्तवाकाः।

**कुत्सवदन्येषामप्यार्य्याणामूतिरिन्द्रेण।**
**काले काले बहुधा कृतेति तेऽप्यागमन् प्रमहे।।१॥**
**किन्त्वेषामखिलानां ये यावन्तः प्रतिष्ठिताः प्रवराः।**
**आसन् त एव सूक्तान्यावेदयितुं नियोजिता अभवन्।।२॥**
**तत्र हिरण्यस्तूपः सव्यभरद्वाजवामदेवाश्च।**

अपि दुर्मित्रः कौत्सो बृहदुक्थो वामदेव्यश्च ॥३ ॥
वत्सश्रुष्टिगुमेध्यागर्गसुहोत्रौ च शुनहोत्रः ।
गौतमनोधः कक्षीवन्तस्तद्वत् परुच्छेपः ॥४ ॥
गृत्समदोऽथावस्युर्बभ्रुर्गातुस्तथाऽगस्त्यः ।
विश्वामित्रो विमदः संवरणो वा प्रजापतेः पुत्र ॥५ ॥
अपि च वसिष्ठो वसुकृद् वासुक्रो गौरिवीतिश्च ।
अष्टादंष्ट्रोऽन्योऽन्यः शतप्रभेदन इमौ तु वै रूपौ ॥६ ॥
वैखानसस्तु बभ्रो मरुत् तिरश्चीर्द्युतानो वा ।
एषां पश्चादिन्द्रः किञ्चिदुवाचेह वामदेवाय ॥७ ॥
इत्थं तत्र सभायामार्य्यनृपाः सप्तगोत्रजा ऋषयः ।
असुरा मरुतो देवाः सर्वे भक्त्या सभाजयामासुः ॥८ ॥
एते तत्र तदानीं घटान् सहस्राणि सोमानाम् ।
गाश्चोपायनविधया सर्वस्वं च न्यवेदयन्तास्मै ॥९ ॥
विनिमयनव्यवहाराङ्गस्यार्थं राजशासनात् सिद्धम् ।
अद्य यथा पश्यामस्ताम्रपणं रौप्यकं स्वर्णम् ॥१० ॥
एवं देवयुगे प्राग् 'गो' नाम विनिमयद्रव्यम् ।
गौर्वा तच्च हिरण्यं वाऽन्यद् वेत्येवमनुभाव्यम् ॥११ ॥
अद्येव पूर्वकाले क्रयविक्रयवत् प्रभूपहारेऽपि ।
विनिमयनीयद्रव्याण्यावेद्यन्ते स्म ता गावः ॥१२ ॥
कवयोऽमी खलु तस्मै चक्रुर्विजयाभिनन्दनं हर्षात् ।
प्रत्यक्षं च परोक्षं चक्रुर्गुणकीर्तनं तस्य ॥१३ ॥
यद्वत् कुत्सस्तद्वदन्येऽपि भूपाः काले काले स्वस्वरक्षोपलक्षे ।
आहूयेन्द्रं सोमयज्ञोत्सवेऽस्मै सोमं सुत्वाऽवेदयन् भक्तिसूक्तम् ॥१४ ॥
यद्वत् कुत्सोऽयं स्वकूक्ते परेषां राज्ञामिन्द्राद्रक्षणं विब्रवीति ।
अन्येप्येवं कुत्सरक्षां ब्रुवाणा दस्योर्युद्धं चक्षते स्वस्वकाव्ये ॥१५ ॥
यद्यत्पूर्व यच्च दस्युप्रबाधे कर्मार्याणामिन्द्र ऊत्या अकार्षीत् ।
सर्वं तत्तद्वर्णयामासुरार्याः स्मारं स्मारं सव्यमुख्याः स्वसूक्ते ॥१६ ॥
बार्हस्पत्या गाव आसन् कदाचिद्दुष्टैश्चोरैर्दस्युभिर्लुण्ठिताः प्राक् ।
तच्च श्रुत्वा देवराजः सवीरो दस्यून् हत्वा प्रापयद् ब्रह्मणे ताः ॥१७ ॥
एवं ये ये चोपकाराः कृताः प्राग् देवेन्द्रणानेन तानत्र सर्वान् ।
स्मारं स्मारं कीर्तयन्तः स्वकाव्यैरार्य्याः प्रोचुः स्वं कृतज्ञत्वमस्मै ॥१८ ॥

दस्योर्युद्धादल्पकालेन पूर्वे भूयोऽप्यासंश्चोरिता गाव एतैः ॥
तासां भूयोन्वेषितानामलाभात्केचिद्देवा विह्वलास्तत्र चासन् ॥१९ ॥
दस्युग्रामध्वंसनादिन्द्रवीर्य्यं प्राशस्त्यार्थेऽत्युत्सवेऽस्मिन् प्रवृत्ते।
गोरक्षार्थं दैवतैः प्रार्थनापि स्तुत्यैवोपस्थापिताऽस्मै तदानीम् ॥२० ॥
तेषां काव्ये दस्युयुद्धप्रसङ्गो दृष्टो यावानुल्वणो यत्र वाक्ये।
तावद्वाक्यं दर्श्यते संगृहीतं सर्वं सूक्तं तावतैवोपलक्ष्यम् ॥२१ ॥

## तदनन्तर इस उत्सव में कुत्स की तरह अन्य आर्यों द्वारा भी धन्यवादस्वरूप स्तुतिवचनों का उच्चारण

कुत्स के समान अन्य आर्यों की भी इन्द्र ने समय-समय पर बहुविध रक्षा की है। अतः वे भी इस उत्सव में आये ॥१ ॥

परन्तु इन आये हुए आर्यों में से जो प्रतिष्ठित और श्रेष्ठ जन थे, वे ही सूक्तों (स्तुति-वाक्यों) को कहने के लिए नियुक्त किये गये अर्थात् स्तुतिगान के अधिकारी बने ॥२ ॥

इनमें से प्रमुख थे - हिरण्यस्तूप, सव्य, भरद्वाज, वामदेव, कुत्स के पुत्र दुर्मित्र तथा वामदेव के पुत्र बृहदुक्थ, वत्स, श्रुष्टिगु, मेध्य, गर्ग, सुहोत्र, शुनहोत्र, गौतम के पुत्र नोधा, कक्षीवान् और इसी प्रकार परुच्छेप, गृत्समद, अवस्यु बभ्र, गातु, अगस्त्य, विश्वामित्र, विमद, संवरण और प्रजापति का पुत्र इन्द्र की स्तुति करने के लिए तत्पर हुए ॥३-४-५ ॥

इसी प्रकार वसिष्ठ, वसुकृद्, वासुक्र, गौरिवीति और विरूप एक अष्टादंष्ट्र और दूसरा शतप्रभेदन, विश्वानस के पुत्र बभ्र, मरुत्, तिरश्ची और द्युतान इन्द्र की स्तुति के लिए तत्पर हुए। इनके पश्चात् यहाँ इन्द्र ने वामदेव के लिए कुछ कहा ॥६-७ ॥

इस तरह उस सभी में आर्य राजागण, सप्रगोत्रोत्पन्न ऋषि, असुर, मरुत और देवगण ने भक्ति सहित इन्द्र का अभिनन्दन किया ॥८ ॥

इन सभी लोगों ने उपहार भेंट की विधि से इस इन्द्र को उस सभा में एक हजार सोम-कलश, गायें और सर्वस्व समर्पित कर दिया ॥९ ॥

जिस प्रकार वर्तमान में ताम्र, स्वर्ण और चाँदी को विनिमय-व्यापार-व्यवहार तथा सम्मानार्थ राजाज्ञा द्वारा निश्चित किया गया है, उसी प्रकार प्राचीन काल में (देवयुग में) पहले "गौ" नाम का विनिमय (परस्पर लेन-देन) का साधन था। यहाँ गौ से तात्पर्य गाय अथवा स्वर्ण अथवा अन्य किसी वस्तु को समझना चाहिये ॥१०-११ ॥

आज की भाँति प्राचीन काल में भी क्रय-विक्रय के समान राजाओं को उपहार देने में भी विनिमययोग्य साम्रगी का ही निवेदन करते थे और वह विनिमय वस्तु गाय ही थी ॥१२ ॥

इन कवि ऋषियों ने हर्षपूर्वक उस इन्द्र का विजयाभिनन्दन किया। इन्होंने इन्द्र का प्रत्यक्ष एवं परोक्ष सभी प्रकार से गुण वर्णन किया ॥१३ ॥

कुत्स ने समान अन्य राजाओं ने भी समय-समय की गई अपनी रक्षा के उपलक्ष-में इन्द्र को बुला कर इस सोमयागोत्सव में इन्द्र के लिए सोम का सवन करके भक्ति-पूर्वक स्तुतिसूक्तों को निवेदित किया ॥१४॥

जिस प्रकार कुत्स अपनी स्तुति में इन्द्र द्वारा अन्य राजाओं की रक्षा का वर्णन करते हैं, उसी प्रकार अन्य राजा भी अपने-अपने काव्यों में कुत्स की रक्षा का वर्णन करते हुए दस्यु-युद्ध का वर्णन करते हैं ॥१५॥

पूर्वकाल में दस्युओं द्वारा पीड़ित किये जाने पर रक्षा करते हुए इन्द्र ने आर्यों के जिन-जिन कार्यों को किया था, उन सबको स्मरण कर कर के सव्यादि आर्यों ने अपने सूक्त में वर्णन किया ॥१६॥

पूर्वकाल में दुष्ट, चोर, दस्युओं के द्वारा बृहस्पति की गायें लूट ली गई थीं, यह सुनकर देवराज इन्द्र ने वीर योद्धाओं सहित जाकर दस्युओं को मारकर वे गायें ब्राह्मण (बृहस्पति) को लौटा दीं ॥१७॥

इस प्रकार पूर्वकाल में देवेन्द्र के द्वारा जो-जो भी उपकार किये गये थे, उन सब को यहाँ स्मरण कर करके स्तुति करते हुए आर्यों ने इस देवराज के प्रति अपने काव्यों के द्वारा कृतज्ञता प्रकट की ॥१८॥

दस्यु युद्ध से कुछ समय पहले भी इन लोगों ने अनेक बार आर्यों की गायों को चुरा लिया था। उन गायों को बार-बार खोजने पर न पाने पर कुछ देवगण विह्वल हो गये ॥१९॥

दस्युओं के समूह को नष्ट करने पर इन्द्र के शौर्य की प्रशंसा के लिए इस उत्सव में आये देवताओं के द्वारा की गई प्रार्थना भी उस समय इस इन्द्र के लिए स्तुति रूप में ही उपस्थित हो गई ॥२०॥

इनके इस काव्य में दस्यु-युद्ध का प्रसंग जिस वाक्य (भाग) में प्रचुर मात्रा में दिखाई देता है, उतना सम्पूर्ण भाग संगृहीत करके इसी दृष्टि से सम्पूर्ण सूक्त में वर्णित दिखाई देता है ॥२१॥

## तत्र तावद्धिरण्यस्तूपो नामाङ्गिरसो ब्रह्मर्षिरार्य्यपक्ष्याय देवेन्द्रायाभिनन्दयितुं कवयामास।

**आङ्गिरसोऽयं विद्याविशेषतः प्रीणयन्निन्द्रम्।**
**स हिरण्यस्तूपत्वं लेभे चेन्द्रेण शाश्वतं सख्यम् ॥१॥**
**महती पुरा प्रतिष्ठाऽऽसीदिन्द्रेण सख्यताप्तिर्या।**
**लब्ध्वा हेम्नः स्तोमं स हिरण्यस्तूप इत्यभूत् प्रथितः ॥२॥**
**स इदानीमिह कुत्सप्रमहे संमन्त्रितः समागम्य।**
**अनुकुत्सं भगवन्तं देवेन्द्रं तमभिनन्दयामासः ॥१॥**

# अङ्गिरा के पुत्र ब्रह्मर्षि हिरण्यस्तूप द्वारा आर्यों के सहयोगी इन्द्र का अभिनन्दन करने हेतु स्तुति—

इस अङ्गिरा के पुत्र ने विद्याविशेष से इन्द्र को प्रसन्न करते हुए "हिरण्यस्तूप" पद को तथा इन्द्र से शाश्वत मित्रता को प्राप्त किया ॥१ ॥ पुरायुग में इन्द्र के साथ मित्रता होना प्रतिष्ठा का विषय था, उसे हिरण्यस्तूप ने प्राप्त की तथा हिरण्य (स्वर्ण) का ढेर प्राप्त करने से "हिरण्यस्तूप" नाम से प्रसिद्ध हुए ॥२ ॥ और अब कुत्स के उत्सव में निमन्त्रित होकर आये और कुत्स के साथ साथ भगवान् देवेन्द्र का अभिनन्दन किया ॥३ ॥

## हिरण्यस्तूपः

**ऋ.१/३२ "इन्द्रस्य नु वीर्याणि प्रवोचं यानि चकार प्रथमानि वज्री।**
**अहन्नहिमन्वपस्ततर्द प्र वक्षणा अभिनत्पर्वतानाम् ॥१ ॥**
**अहन्नहिं पर्वते शिश्रियाणं त्वष्टाऽस्मै वज्रं स्वर्यं ततक्ष।**
**वाश्रा इव धेनवः स्यन्दमाना अञ्जः समुद्रमवजग्मुरापः ॥२ ॥**
**वृषायमाणोऽवृणीत सोमं त्रिकद्रुकेष्वपिबत्सुतस्य।**
**आ सायकं मघवाऽदत्त वज्रमहन्नेनं प्रथमजामहीनाम् ॥३ ॥**
**यदिन्द्राहन्प्रथमजामहीनामान्मायिनाममिनाः प्रोत मायाः।**
**आत्सूर्यं जनयन् द्यामुषासं तादीत्ना शत्रु न किला विवित्से ॥४ ॥**
**अहन्वृत्रं वृत्रतरं व्यंसमिन्द्रो वज्रेण महता वधेन।**
**स्कन्धांसीव कुलिशेना विवृक्णाऽहिः शयत उपपृक्पृथिव्याः ॥५ ॥**
**अयोद्धेव दुर्मद आहि जुह्वे महावीरं तुविबाधमृजीषम्।**
**नातारीदस्य समृतिं वधानां सं रुजाना पिपिष इन्द्रशत्रुः ॥६ ॥**
**अपादहस्तो अपृतन्यदिन्द्रमाऽस्य वज्रमधि सानौ जघान।**
**वृष्णो वध्रिः प्रतिमानं बुभूषन्पुरुत्रा वृत्रो अशयद्व्यस्तः ॥७ ॥**
**नदं न भिन्नममुया शयानं मनो रुहाणा अतियन्त्यापः।**
**याश्चिद्वृत्रो महिना पर्यतिष्ठत्तासामहिः पत्सुतःशीर्बभूव ॥८ ॥**
**नीचावया अभवद्वृत्रेन्द्रो अस्या अव वधर्जभार।**
**उत्तरा सूरधरः पुत्र आसीद्दानुः शये सहवत्सा न धेनुः ॥९ ॥**
**अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम्।**
**वृत्रस्य निण्यं विचरन्त्यापो दीर्घं तम आशयदिन्द्रशत्रुः ॥१० ॥**
**दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः।**
**अपां बिलमपिहितं यदासीद्वृत्रं जघन्वाँ अप तद्ववार ॥११ ॥**

अश्व्यो वारो अभवस्तदिन्द्र सृके यत्त्वा प्रत्यहन् देव एकः।
अजयो गा अजयः शूर सोममवासृजः सर्तवे सप्तसिन्धून्॥१२॥
नास्मै विद्युन्न तन्यतुः सिषेध न यां मिहमकिरद् ध्रादुनिं च।
इन्द्रश्च यद्युयुधाते अहिश्चोतापरीभ्यो मघवा विजिग्ये॥१३॥
अहेर्यातारं कमपश्य इन्द्र हृदि यत्ते जघ्नुषो भीरगच्छत्।
नव च यन्नवतिं च स्रवन्तीः श्येनो न भीतो अतरो रजांसि॥१४॥
इन्द्रो यातोऽवसितस्य राजा शमस्य च शृङ्गिणो वज्रबाहुः।
सेदु राजा क्षयति चर्षणीनामरान्न नेमिः परि ता बभूव"॥१५॥
ऋ.१/३३ "एतायामोप गव्यन्त इन्द्रमस्माकं सुप्रमतिं वावृधाति।
अनामृणः कुविदादस्य रायो गवां केतं परमावर्जते नः॥१॥
उपेदहं धनदामप्रतीतं जुष्टां न श्येनो वसतिं पतामि।
इन्द्रं नमस्यन्नुपमेभिरर्कैर्यः स्तोतृभ्यो हव्यो अस्ति यामन्॥२॥
नि सर्वसेन इषुधीँरसक्त समर्यो गा अजति यस्य वष्टि।
चोष्कूयमाण इन्द्र भूरि वामं मा पणिर्भूरस्मदधि प्रवृद्ध॥३॥
वधीर्हि दस्युं धनिनं घनेनँ एकश्चरन्नुपशाकेभिरिन्द्र।
धनोरधि विषुणक्ते व्यायन्नयज्वानः सनकाः प्रेतिमीयुः॥४॥
परा चिच्छीर्षा ववृजुस्त इन्द्राऽयज्वानो यज्वभिः स्पर्धमानाः।
प्र यद्दिवो हरिवः स्थातरुग्र निरव्रताँ अधमो रोदस्योः॥५॥
अयुयुत्सन्ननवद्यस्य सेनामयातयन्त क्षितयो नवग्वाः।
वृषायुधो न वध्रयो निरष्टाः प्रवद्भिरिन्द्राच्चितयन्त आयन्॥६॥
त्वमेतान्रुदतो जक्षतश्चायोधयो रजस इन्द्र पारे।
अवादहो दिव आ दस्युमुच्चा प्र सुन्वतः स्तुवतः शंसमावः॥७॥
चक्राणासः परीणहं पृथिव्या हिरण्येन मणिना शुम्भमानाः।
न हिन्वानासस्तितिरुस्त इन्द्रं परि स्पशो अदधात्सूर्येण॥८॥
परि यदिन्द्र रोदसी उभे अबुभोजीर्महिना विश्वतः सीम्।
अमन्यमानाँ अभिमन्यमानैर्निर्ब्रह्मभिरधमो दस्युमिन्द्र॥९॥
न ये दिवः पृथिव्या अन्तमापुर्न मायाभिर्धनदां पर्यभूवन्।
युजं वज्रं वृषभश्चक्र इन्द्रो निर्ज्योतिषा तमसो गा अदुक्षत्॥१०॥
अनु स्वधामक्षरन्नापो अस्याऽवर्धतमध्या नाव्यानाम्।
सध्रीचीनेन मनसा तमिन्द्र ओजिष्ठेन हन्मनाऽहन्नभि द्यून्॥११॥

न्याविध्यादिलीबिशस्य दृळहा वि शृङ्गिणमभिनच्छुष्णमिन्द्रः।
यावत्तरो मघवन्यावदोनो वज्रेण शत्रुमवधीः पृतन्युम्॥१२॥
अभि सिध्मो अजिगादस्य शत्रून्वि तिग्मेन वृषभेणा पुरोऽभेत्।
सं वज्रेणाऽसृजद्वृवमिन्द्रः प्र स्वां मतिमतिरच्छाशदानः॥१३॥
आवः कुत्समिन्द्र यस्मिञ्चाकन्प्रावो युध्यन्तं वृषभं दशद्युम्।
शफच्युतो रेणुर्नक्षत द्यामुच्छ्वैत्रेयो नृषाह्याय तस्थौः॥१४॥
आवः शमं वृषभं तुग्र्यासु क्षेत्रजेषे मघवञ्छ्वित्र्यं गाम्।
ज्योक् चिदत्र तस्थवांसो अक्रञ्छत्रूयतामधरा वेदनाकः"॥१५॥

## हिरण्यस्तूप द्वारा स्तुति (१/३२)

हिरण्यस्तूप ऋषि इन्द्र की स्तुति करते हुए कहते हैं - "वज्रधारी इन्द्र ने जो पहले पराक्रम किये थे, हम इन्द्र के उन्हीं पराक्रमों का वर्णन करते हैं। उसने अहि राक्षस का वध किया, जलप्रवाह को बन्धनमुक्त किया और पर्वतों में से नदियों का मार्ग खोद कर विशाल किया॥१॥

पर्वत पर निवास करने वाले अहि का इन्द्र ने वध किया, त्वष्टा नाम के शिल्पकार ने इन्द्र के लिए शत्रु पर दूर से फेंक कर बेधने योग्य वज्र बनाया था, तब जैसे गायें रम्भाती हुई अपने बच्चों की ओर दौड़ती है, वैसे ही जलप्रवाह दौड़ते हुए समुद्र की ओर जाने लगे॥२॥

बलवान् इन्द्र ने सोम को स्वीकार किया, तीन पात्रों में रखे हुए रस का पान किया, धनवान् इन्द्र ने बाण और वज्र को हाथ से पकड़ा और अहियों में से मुख्य अहि का वध कर दिया॥३॥

हे इन्द्र! तुमने जब अहियों में से प्रमुख अहि का वध किया तब कपटियों के कपटमय षड्यंत्रो का भी विनाश किया। तत्पश्चात् आकाश में उषा और सूर्य को प्रकट किया। तब तुम्हारे लिए निःसन्देह कोई शत्रु नहीं रहा॥४॥

इन्द्र ने बड़े घातक शस्त्र से बड़े घेरने वाले वृत्र का बाहु काट कर वध किया। वह कुल्हाड़ी से तोड़ी गई वृक्ष की शाखा की तरह "अहि" भूमि पर पड़ा हुआ है॥५॥

महान् अहंकारी और स्वयं को अप्रतिम योद्धा मानने वाले वृत्र ने महावीर, अनेक शत्रुओं को बन्दी बनाने वाले शत्रुनाशक इन्द्र को आह्वान करके युद्ध के लिए बुलाया, परन्तु वह इन्द्र के प्रहार को सहन नहीं कर सका और उस इन्द्रशत्रु ने वृत्र ने नदियों को भी स्वयं ही गिरते-गिरते तोड़ डाला॥६॥

हाथ-पांव कट जाने पर भी वृत्र ने इन्द्र से युद्ध करना चाहा, इन्द्र ने इसके सिर पर वज्र से प्रहार किया तब वह शक्तिहीन पुरुष जिस प्रकार शक्तिशाली के सम्मुख नहीं टिक सकता है वैसे ही वह वृत्र इन्द्र के आघात को सहन नहीं कर सका और भूमि पर गिर पड़ा॥७॥

इस पृथिवी के साथ सोने वाले वृत्र को लांघ कर बाढ़ से तट को छिन्न-भिन्न करके बहने वाली नदियों के समान मनोहारी जलप्रवाह बहने लगा। वृत्र ने अपनी महिमा से जिन जलों को बद्ध किया था वही अब उनके पांवो के नीचे गिरा हुआ है और वही अब अहि बन गया है ॥८ ॥

अब वृत्र की माता की संरक्षण करने की शक्ति कम हो गई है, वही माता अब उसे बचाने के लिए उस पर लेट गई है, परन्तु इन्द्र ने उसकी माता के नीचे से प्रहार किया उस समय माता ऊपर और पुत्र नीचे था। जिस प्रकार बछड़े के साथ गाय सोती है उसी प्रकार वृत्र-माता वृत्र की रक्षा करने के लिए सो गई ॥९ ॥

स्थिर न रहने वाले और विश्राम न करने वाले जलप्रवाहों के बीच में वृत्र का शरीर छिपा हुआ था और उसके ऊपर से जल प्रवाहित हो रहा था। इन्द्र के शत्रु वृत्र ने चारों ओर घोर अंधकार फैला दिया था॥ (यहाँ वृत्र से तात्पर्य बर्फ है) ॥१० ॥

पणि नाम के असुरों ने जैसे गायों को छिपा लिया था, उसी प्रकार वृत्र के द्वारा पालित और अहि द्वारा छिपाने पर जलप्रवाह रुक गये, बह नहीं सके। इन्द्र द्वारा वृत्र का वध करने के पश्चात् जल का बन्द पड़ा हुआ द्वार खोल दिया गया ॥११ ॥

जब कुशल वृत्र ने इन्द्र के वज्र पर प्रहार किया तो इन्द्र ने उस प्रहार को वैसे झटक दिया जैसे घोड़ा अपनी पूँछ को झटकता है। हे शूरवीर इन्द्र ! तुमने गायों को प्राप्त किया, तुमने सोम को प्राप्त किया और सातों समुद्रों के प्रवाह को गतिमान् कर खोल दिया ॥१२ ॥

जब इन्द्र युद्ध करने लगा तो बिजलियाँ, मेघ-गर्जना, महावृष्टियाँ, तुषार-वर्षा, बिजली गिरना आदि आपत्तियाँ भी इन्द्र को रोक नहीं सकीं। इन्द्र और अहि परस्पर युद्ध करने लगे उस समय धनवान् इन्द्र ने विभिन्न प्रकार के शत्रुओं द्वारा किये जाने वाले विघ्नों को भी रोक दिया और विजय प्राप्त की ॥१३ ॥

हे इन्द्र ! वृत्र का वध करते समय यदि तुम्हारे मन में भय उत्पन्न हो जाता तो तुम्हारी सहायता कौन कर सकता था क्योंकि तुम्हीं सबसे श्रेष्ठ वीर हो। तुमने तो नौ और नब्बे जलप्रवाहों को भी अन्तरिक्ष में जैसे भयभीत बाज पक्षी जाता है वैसे ही पार कर लिया ॥१४ ॥

वज्रबाहु इन्द्र समस्त स्थावर-जंगम, शान्त और क्रूर सींग वालों का राजा है। वही समस्त मनुष्यों का राजा है। जिस प्रकार चक्र की नेमि अरों को धारण करती है वैसे ही वह इन्द्र सबको धारण करता है ॥१५ ॥

(१/३३) सूक्त में हिरण्यस्तूप ऋषि ही कहते हैं - आओ ! गायें प्राप्त करने की इच्छा से हम इन्द्र के पास जावें। जिसकी कभी पराजय नहीं होती ऐसा यह हमारी उत्तम बुद्धि की वृद्धि करेगा। निस्सन्देह इन्द्र की स्तुति करने से हमें धन और गायों की प्राप्ति का श्रेष्ठ ज्ञान प्राप्त होगा ॥१ ॥

जैसे श्येन पक्षी अपने घोंसले के पास दौड़ता है वैसे ही उस धनदाता और विजयी इन्द्र के पास उपासनायोग्य मन्त्रों से स्तुति करता हुआ जा पहुँचता हूँ। यह इन्द्र भक्तों के लिए युद्ध में सहायता अवश्य करता है॥२॥

समस्त सेनाओं का सेनापति इन्द्र अपनी पीठ पर तर्कस धारण करता है। इन्द्र सबका स्वामी है, जिसको चाहता है, गायें प्रदान करता है। हे श्रेष्ठ इन्द्र! हम श्रेष्ठ धन की इच्छा करते हैं, हमारे साथ वणिक् जैसा व्यवहार मत करना॥३॥

शक्तिशाली वीरों के साथ हमला करते हुए भी अन्त में तुम अकेले ने ही चढ़ाई करके बलवान् वृत्र का अपने वज्र से संहार किया, तब तुम्हारे धनुष पर वे सभी शत्रु संहार करने के लिए एक साथ प्रहार करने लगे परन्तु अन्त में यज्ञ न करने वाले उन दस्युओं का नाश हो गया॥४॥

हे इन्द्र! स्वयं यज्ञ न करने वाले वे शत्रु याजकों के साथ स्पर्धा न करने के कारण अपना मस्तक नीचा करके भाग गये। हे घोड़ो को जीतने वाले, युद्ध में स्थिर उग्र वीर इन्द्र! तुमने इस पृथ्वी, द्युलोक और अन्तरिक्ष से अनियमित धर्म को मानने वालों को भगा दिया॥५॥

निर्दोष और बलवान्, इन्द्र की सेना के साथ युद्ध करने की इच्छा से उन शत्रुओं ने इन्द्र पर आक्रमण किया परन्तु नवीन साधनों से युक्त इन्द्र के सैनिकों ने उन शत्रुओं का मुकाबला किया, जिससे उन शत्रुओं की सेना वैसे ही पराजित हो गई जैसे किसी बलिष्ठ पुरुष के साथ युद्ध करने पर नपुंसक की पराजय हो जाती है। तब वे शत्रु अपनी कमजोरी मान कर दूर भाग गये॥६॥

हे इन्द्र! तुमने रोने वाले और खाने वाले इन शत्रुओं को रजोलोक (गर्त में) के पार पहुँचा दिया है। इस दस्यु को खींच कर नीचे लाकर जला दिया है तथा सोमयज्ञ करने वाले उत्तम स्तोताओं की रक्षा की है॥७॥

शत्रुओं ने अपने आप को स्वर्ण और रत्नों से सुशोभित कर लिया था और पृथ्वी पर अपना प्रभाव जमा लिया था। वे शत्रु निरन्तर बढ़ते ही जा रहे थे, परन्तु हे इन्द्र! तुमने उनको युद्ध में खदेड़ दिया और अन्त में उन शत्रुओं को सूर्य से पराजित होना पड़ा॥८॥

हे इन्द्र! तुमने द्युलोक और पृथ्वी लोक का चारों ओर से पूर्णतः उपभोग किया है। तब हे इन्द्र! तुमने नास्तिकों को आस्तिकों के द्वारा अनेक योजनाओं से परास्त कराया है॥९॥

जो द्युलोक से पृथ्वी लोक तक का मध्य का अन्तराल और अन्त नहीं जान सके, जो धनदाता इन्द्र को किसी भी कपट युक्ति से पराजित नहीं कर सके तब वीर इन्द्र ने अपने वज्र को ठीक तरह से पकड़ लिया और अन्धकार में से गायों को प्रकाश में निकाला और उनका दोहन किया॥१०॥

जलप्रवाह अन्न को बढ़ाने के लिए अच्छी तरह चलते रहें, परन्तु वृत्र अपनी नावों से नदियों के बीच बढ़ रहा था। इन्द्र ने धैर्ययुक्त मन से उस शत्रु को बलवान् घातक वज्र से कुछ ही दिनों में मार दिया ॥११॥

बलात् भूमि पर रहने वाले वृत्र के सैनिकों और सुदृढ़ किलों को इन्द्र ने तोड़ दिया और सींग वाले शोषक वृत्र को छिन्न-भिन्न कर दिया। हे धनवान् इन्द्र! तुम्हारा जितना वेग और बल था, उससे तुमने सेना को साथ ले कर शत्रु से युद्ध किया और वृत्र का वध किया ॥१२॥

इस इन्द्र का वज्र शत्रुओं के ऊपर आक्रमण करने लगा। तीक्ष्ण और बलशाली वज्र से इन्द्र ने शत्रु के नगरों को तोड़ दिया। इन्द्र ने वज्र से भली प्रकार प्रहार किया और शत्रुओं का संहार करने वाले इन्द्र ने अपनी विशाल बुद्धि को प्रकट किया ॥१३॥

हे इन्द्र! तुमने जिस पर कृपा की उस कुत्स की तुमने रक्षा की अर्थात् बुराइयों को नष्ट करने वालों तथा दशद्यु (दाने देने वालों) की रक्षा की। उस समय तुम्हारे घोड़ों के पांवों से उड़ी धूल द्युलोक तक फैल गई। श्वैत्रेय भी सबसे अधिक समर्थ होने के लिए तुम्हारी कृपा से ऊपर उठ गया ॥१४॥

हे धनवान् इन्द्र! क्षेत्रप्राप्ति के युद्ध में शान्त, बलवान् परन्तु जलप्रवाहों में डूबने वाले श्वित्र्य की तुमने रक्षा की। हमारे शत्रु ने बहुत समय तक यहाँ रहकर हमसे युद्ध किया, उन्हीं शत्रुओं को नीचे गिरा कर तुमने दुःख दिया ॥१५॥

# सव्यः

**सव्यो नामाङ्गिरसो राजर्षिराय्योपकारिणे स्वराजे कृतज्ञतासूक्तमावेदयितुं कवयामास।**

**पुत्रो मे स्यादिन्द्रतुल्यो मनीषीत्येवंकामोऽतप्यतैषोऽङ्गराः प्राक्।**
**तस्मात्पुत्रः सोऽयमिन्द्रावतारः सव्यो जज्ञे तं स इन्द्रं स्तवीति ॥१॥**
**ऋग्वेदाद्ये मण्डले कामसूक्तादिन्द्रं सव्यः सामसूक्तान्तमस्तौत्।**
**तेभ्यो दासायोधनं रूपयन्तीः संदर्श्यन्ते काश्चिदत्रर्च एताः ॥२॥**
ऋ.१/५१ **"त्वमपामपिधानाऽवृणोरपाधारयः पर्वते दानुमद्वसु।**
**वृत्रं यदिन्द्र शवसाऽवधीरहिमादित्सूर्य्यं दिव्यारोहयो दृशे ॥४॥**
**त्वं मायाभिरप मायिनोऽधमः स्वधाभिर्ये अधि शुप्तावजुह्वत।**
**त्वं पिप्रोर्नृमणः प्रारुजः पुरः प्र ऋजिश्वानं दस्युहत्येष्वाविथ ॥५॥**
**त्वं कुत्सं शुष्णहत्येष्वाविथारन्धयोऽतिथिग्वाय शम्बरम्।**
**महान्तं चिदर्बुदं निक्रमीः पदा सनादेव दस्युहत्याय जज्ञिषे ॥६॥**

विजानीह्यार्यान्ये च दस्यवो बर्हिष्मते रन्धया शासदव्रतान्।
शाकी भव यजमानस्य चोदिता विश्वेत्ता ते सधमादेषु चाकन ॥८॥
अनुव्रताय रन्धयन्नपव्रतानाभूमिरिन्द्रः श्नथयन्ननोभुवः।
वृद्धस्य चिद्वर्धतो द्यामिनक्षतः स्तवानो वम्रो विजघान संदिहः ॥९॥
तक्षद्यत्त उशना सहसा सहो वि रोदसी मज्मना बाधते शवः।
आ त्वा वातस्य नृमणो मनोयुज आ पूर्यमाणमवहन्नभि श्रवः ॥१०॥
मन्दिष्ट यदुशने काव्ये सचाँ इन्द्रो वङ्कू वङ्कुतराऽधितिष्ठति।
उग्रो ययिं निरपः स्रोतसाऽसृजद्वि शुष्णस्य दृंहिता ऐरयत्पुरः ॥११॥
इदं नमो वृषभाय स्वराजे सत्यशुष्माय तवसेऽवाचि।
अस्मिन्निन्द्र वृजने सर्ववीराः स्मत्सूरिभिस्तव शर्मन्त्स्याम" ॥१५॥
ऋ.१/५२ "स पर्वतो न धरुणेष्वच्युतः सहस्रमूतिस्तविषीषु वावृधे।
इन्द्रो यद्वृत्रमवधीन्नदीवृतमुब्जन्नर्णांसि जर्हृषाणो अन्धसा ॥२॥
जघन्वाँ उ हरिभिः संभृतक्रतविन्द्र वृत्रं मनुषे गातुयन्नपः।
अयच्छथा बाह्वोर्वज्रमायसमधारयो दिव्या सूर्यं दृशे ॥८॥
बृहत्स्वश्चन्द्रममवद्यदुक्थ्यमकृण्वत भियसा रोहणं दिवः।
यन्मानुषप्रधना इन्द्रमूतयः स्वर्नृषाचो मरुतोऽमदन्ननु ॥९॥
द्यौश्चिदस्यामवाँ अहेः स्वनादयोयवीद्भियसा वज्र इन्द्र ते।
वृत्रस्य यद्बद्धानस्य रोदसी मदे सुतस्य शवसाऽभिनच्छिरः" ॥१०॥
ऋ.१/५३ "न्यूषु वाचं प्र महे भरामहे गिर इन्द्राय सदने विवस्वतः।
नू चिद्धि रत्नं ससता मिवाविदन्न दुष्टुतिर्द्रविणोदेषु शस्यते ॥१॥
एभिर्द्युभिः सुमना एभिरिन्दुभिर्निरुन्धानो अमतिं गोभिरश्विना।
इन्द्रेण दस्युं दरयन्त इन्दुभिर्युतद्वेषसः समिषा रभेमहि ॥४॥
त्वं करञ्जमुत पर्णयं वधीस्तेजिष्ठयाऽतिथिग्वस्य वर्तनी।
त्वं शता वङ्गृदस्याभिनत्पुरोऽनानुदः परिषूता ऋजिश्वना ॥८॥
त्वमेताञ्जनराज्ञो द्विर्दशाबन्धुना सुश्रवसोपजग्मुषः।
षष्टिं सहस्रा नवतिं नव श्रुतो नि चक्रेण रथ्या दुष्पदावृणक् ॥९॥
त्वमाविथ सुश्रवसं तवोतिभिस्तव त्रामभिरिन्द्र तूर्वयाणम्।
त्वमस्मै कुत्समतिथिग्वमायुं महे राज्ञे यूने अरन्धनायः ॥१०॥
य उदृचीन्द्र देवगोपाः सखायस्ते शिवतमा असाम।
त्वां स्तोषाम त्वया सुवीरा द्राघीय आयुः प्रतरं दधानाः" ॥११॥

ऋ.१/५४ "त्वं दिवो बृहतः सानु कोपयोऽव त्मना धृषता शंबरं भिनत्।
यन्मायिनो व्रन्दिनो मन्दिना धृषच्छितां गभस्तिमशनिं पृतन्यसि ॥४॥
नियद्वृणक्षि श्वसनस्य मूर्धनि शुष्णस्य चिद्व्रन्दिनो रोरुवद्वना।
प्राचीनेन मनसा बर्हणावता यदद्याचित्कृणवः कस्त्वा परि ॥५॥
त्वमाविथ नर्यं तुर्वशं यदुं त्वं तुर्वीतिं वय्यं शतक्रतो।
त्वं रथमेतशं कृत्व्ये धने त्वं पुरो नवतिं दम्भयो नव ॥६॥
अपामतिष्ठद्धरुणह्वरं तमोऽन्तर्वृत्रस्य जठरेषु पर्वतः।
अभिमिन्द्रो नद्यो वव्रिणा हिता विश्वा अनुष्ठाः प्रवणेषु जिघ्नते" ॥१०॥
ऋ.१/५६ "स तुर्वणिर्महाँ अरेणु पौंस्ये गिरेर्भृष्टिर्न भ्राजते तुजा शवः।
येन शुष्णं मायिनमायसो मदे दुध्र आभूषु रामयन्नि दामनि" ॥३॥
ऋ.१/५७ "त्वं तमिन्द्र पर्वतं महामुरुं वज्रेण वज्रिन्पर्वशश्चकर्तिथ।
अवासृजो निवृताः सर्तवा अपः सत्रा विश्वं दधिषे केवलं सहः" ॥६॥

## आंगिरस सव्य ऋषि द्वारा स्तुति

### अङ्गिरा के पुत्र सव्य नामक राजर्षि द्वारा आर्यों के उपकर्ता स्वराट् देवेन्द्र के प्रति कृतज्ञतासूचक सूक्त का निवेदन करते हुए काव्य की रचना

पूर्वकाल में ऋषि अंगिरा ने इन्द्र के समान मनीषी पुत्र की कामना करते हुए तपस्या की। उससे यह इन्द्र का अवतार "सव्य" उत्पन्न हुआ, वही सव्य इन्द्र की स्तुति करता है ॥१॥

ऋग्वेद के प्रथम मण्डल में कामसूक्त से सामसूक्त तक ऋषि सव्य ने इन्द्र की स्तुति की है। दासों के साथ हुए इन्द्र के युद्ध को प्रदर्शित करने वाली ये कुछ ऋचाएँ यहां प्रस्तुत की जाती है ॥२॥

ऋग्वेद के (१/५१) सूक्त में सव्य आङ्गिरस ऋषि करते हुए कहते हैं - "हे इन्द्र! तुमने जलों को रोकने वाले मेघो को बरसाया, तथा पर्वत में रहने वाले वृत्र के धन को धारण किया, तब अपने बल से वृत्र और अहि को मारा। तत्पश्चात् सूर्य को आकाश में प्रकाश फैलाने के लिए द्युलोक में चढ़ाया ॥४॥

जो स्वयं अपने मुँह में ही अन्नादि का हवन करते थे अर्थात् अन्न का स्वयं ही उपभोग करते थे, उन मायावी लोगों को माया से ही मारा। हे इन्द्र! मनुष्य तुम्हारी प्रशंसा करते हैं, तूने पिप्रु नाम के असुर के दुर्गों को तोड़ा तथा संग्राम में ऋजिश्वा ऋषि की रक्षा की ॥५॥

हे इन्द्र ! तूने शुष्ण असुर जिस संग्राम में मारा गया था, उस युद्ध में कुत्स ऋषि की रक्षा की। अतिथिग्व ऋषि की रक्षा के लिए शम्बर को मारा। महान् शक्तिशाली अर्बुद को तो पैरों से कुचल डाला। तू प्राचीन काल से ही असुरों को मारने के लिए ही उत्पन्न हुआ है ॥६ ॥

हे इन्द्र ! सज्जनों और दुर्जनों को दोनों को जान लो। यज्ञकर्ताओं की रक्षा के लिए व्रतहीन अनियमित लोगों पर शासन करते हुए उन्हें नष्ट कर। हे सामर्थ्यवान् इन्द्र ! मैं चाहता हूँ कि तू यजमानों को प्रेरित कर, जिससे वे यज्ञों में तेरे समस्त कर्मों की प्रशंसा करें, मैं ऐसा चाहता हूँ ॥८ ॥

यह इन्द्र सज्जनों के लिए व्रतहीन दस्युओं को मारते हुए तथा मातृभूमि के भक्तों द्वारा मातृभूमि के शत्रुओं का नाश करवाता है। ऐसे बढ़ते हुए इन्द्र की स्तुति करते हुए वभ्र ऋषि ने द्युलोक को आक्रान्त करने वाले असुरों को काटा और मार डाला ॥९ ॥

हे इन्द्र ! जब उशना ऋषि ने अपने बल से तेरे बल का वर्धन किया है और बढ़े हुए तेरे बल ने अपनी तीक्ष्णता से द्युलोक और पृथ्वी लोक को डराया, हे मनुष्यों से स्तुत्य इन्द्र ! अन्नादि से पूर्ण तुझे संकल्प मात्र से जुड़ जाने वाले तथा वायु जैसे वेग वाले घोड़े यश की ओर ले आये ॥१० ॥

इन्द्र जब उशना के साथ आनन्दित होता है, तब वह दुष्टों पर अपना शासन भी करता है। वीर इन्द्र ने मेघ से जलप्रवाह को प्रेरित किया और शुष्ण नाम के असुर के बड़े-बड़े दुर्गों को तोड़ा है ॥११ ॥

अत्यन्त महान्, बलवान्, स्वयं प्रकाशमान और यथार्थ बलशाली इन्द्र के लिए हम स्तुति करते हैं। हे इन्द्र ! इस संग्राम में हम वीर बनते हुए, पुत्रादि के साथ तेरे आश्रम में रहें ॥१५ ॥

१/५२ सूक्त में भी आङ्गिरस ऋषि ने कहा -

जब सोम रस रूपी अन्न से प्रशंसित होते हुए इन्द्र ने जलों को बांध कर रखने वाले वृत्र को मारा और जल को प्रवाहित किया, अनेक प्रकार से संरक्षण करने वाले उस इन्द्र ने जलप्रवाहों में पर्वत के समान स्थिर रहकर वृद्धि और बल को प्राप्त किया ॥२ ॥

हे उत्तम कर्म करने वाले इन्द्र ! तूने घोड़ों से युक्त होकर मनुष्यों के हित के लिए जल की वृष्टि करने के लिए अपनी किरणों से वृत्र को मारा तथा अपनी भुजाओं में अत्यन्त कठोर वज्र को धारण किया तथा देखने के लिए सूर्य को द्युलोक में स्थापित किया ॥८ ॥

मनुष्यों ने डर कर बड़े-बड़े स्तोत्रों का गान किया, जो सुख देने वाले, बलदायक, आह्लादकारी तथा स्वर्ग की प्राप्ति कराने वाले हैं और मनुष्यों की रक्षा के लिए युद्ध करने वाले, मनुष्यों की सेवा करने वाले तथा द्युलोक की रक्षा करने वाले हैं, ऐसे मरुतों ने इन्द्र की सहायता की ॥९ ॥

हे इन्द्र! सोम के आनन्द से आनन्दित तेरे वज्र ने द्युलोक और पृथिवी लोक को पीड़ित करने वाले वृत्र को मार डाला (वृत्र का सिर काट डाला), तब बलवान् द्युलोकवासी भी वृत्र की घोर गर्जना से कांपने लगे ॥१० ॥"

१/५३ सूक्त में सव्य आङ्गिरस ऋषि इन्द्र की स्तुति करते हैं - "हम विवस्वान् के यज्ञ में शक्तिशाली इन्द्र के लिए उत्तम स्तुति करते हैं, इन्द्र की प्रशंसा करते हैं। वह इन्द्र शीघ्र ही धन को वैसे ही प्राप्त कर लेता है, जैसे चोर सोते हुए लोगों के धन को शीघ्र ही उठा ले जाता है। धन देने वालों की बुरी स्तुति इन्द्र को आनन्दित नहीं करती है ॥१ ॥

हे इन्द्र! तू इन तेजों से तथा सोम रसों से तृप्त गायें और घोड़े दे कर हमारी दरिद्रता को समाप्त करता है। हम अच्छे मन वाले उस इन्द्र को सोम रसों से तृप्त करके शत्रुओं को नष्ट करते हुए, शत्रुरहित होकर अन्न से आनन्दित होने वाला करें ॥४ ॥

हे इन्द्र! तूने अतिथिग्व ऋषि के मार्ग को बाधा पहुंचाने वाले करंज और पर्णय नाम के असुरों को अपने तीक्ष्ण शस्त्र से मारा तथा सहायक के बिना ही तूने ऋजिश्वा के द्वारा घेरे हुए बंगृद नामक असुर के सैंकड़ों नगरों को तोड़ा ॥८ ॥

हे प्रसिद्ध इन्द्र! तूने किसी सहायक के बिना ही सुश्रवा नाम के राजा से युद्ध करने के लिए आये हुए बीस राजाओं को तथा उनके इन साठ तथा निन्यानवे हजार सैनिकों को रथ के कठिन चक्र से मार डाला ॥९ ॥

हे इन्द्र! अपने संरक्षण से सुश्रवा की रक्षा की तथा अपने पालन के साधनों से तूर्वयाण की रखा की, तूने महान्, तरुण इस राजा के लिए कुत्स, अतिथिग्व और आयु को वश में किया ॥१० ॥

हे इन्द्र! हम देवताओं के द्वारा सुरक्षित तेरे मित्र हैं, ऐसे हम अत्यन्त सुख वाले बने। तेरी कृपा से हमारे उत्तम सन्तान हों, हम दीर्घ तथा उत्तम आयु को धारण करते हुए तुझे यश से सन्तुष्ट करते हैं॥" ॥११ ॥

१/५४ सूक्त में सव्य आंगिरस स्तुति करते हैं - हे इन्द्र! जब तू मायावी असुर की सेना को तीक्ष्ण किये गये वज्र को उत्साहपूर्वक हाथ में पकड़ कर, प्रहार करके मारता है, तब विशाल द्युलोक के ऊपर क्रोध करता हो, ऐसा दिखाई देता है। हे इन्द्र! तू अपने बल से शम्बर को मारता है ॥४ ॥

हे इन्द्र! तब तूने सेना के रहते हुए भी गर्जनापूर्वक अपने वज्र से लम्बी-लम्बी सांसें लेते हुए शुष्ण के सिर पर प्रहार किया। अतः अपने बल से युक्त, अपने मन से ही अनादि काल से आज तक शत्रुओं का संहार करता आ रहा है। इसलिए इन्द्र ही सर्वोपरि है, उसका कोई शासक नहीं है ॥५ ॥

शुभ कर्मों के कर्ता हे इन्द्र ! तूने संग्राम के प्रारम्भ हो जाने पर नर्य (नेता), तुर्वश (अपने यश को फैलाने वाले) और यदु (गतिशील) मनुष्य की रक्षा की है। तूने वय्य कुलोत्पन्न तुर्वीति की रक्षा की है। तूने रथ और एतश की रक्षा की है तथा तूने असुरों के निन्यानवे नगरों को तोड़ा है ॥६ ॥

जलप्रवाह का नियन्त्रक अन्धकार अनेकों पर्व वाले वृत्र के पेट में जलों को रोक कर बैठ गया, तब इन्द्र ने वृत्र द्वारा रोके हुए, अनुकूलता से चलने वाले इन सभी जलप्रवाहों को नीचे गिराया, जल को प्रवाहित किया ॥१० ॥

१/५६ सूक्त में सव्य आङ्गिरस कहते हैं - वह इन्द्र शत्रुओं को मारने वाला तथा श्रेष्ठ है। वह इन्द्र जिस उत्साह के साथ मायावी शुष्ण असुर को कारागार में रस्सियों से बाँधता है, वह इन्द्र लोहमय कवच को धारण करता है, शत्रुओं को मारने वाला है, ऐसे इन्द्र का प्रशंसनीय, शत्रुसंहारक बल युद्ध में पर्वतशिखर के समान प्रकाशित होता है ॥३ ॥

१/५७ में सूक्त में सव्य आङ्गिरस ऋषि कहते हैं - हे वज्रधारी इन्द्र ! तूने अपने वज्र से महान् बलशाली उस मेघ के टुकड़े-टुकड़े कर दिये और बंधे हुए जलप्रवाह को बहने के लिए बाहर निकाला है। यह सत्य है कि एक मात्र तू ही समस्त बलों को धारण करता है ॥६ ॥

## गृत्समदो दस्युवधं कीर्तयन्निन्द्रं महयति।

**ऋ.२/११ 'सृजो महीरिन्द्र या अपिन्वः परिष्ठिता अहिना शूर पूर्वीः।**
**अमर्त्यं चिद्दासं मन्यमानमवाभिनदुक्थैर्वावृधानः ॥२ ॥**
**शुभ्रं नु ते शुष्मं वर्धयन्तः शुभ्रं वज्रं बाह्वोर्दधानाः।**
**शुभ्रस्त्वमिन्द्र वावृधानो अस्मे दासीर्विशः सूर्येण सह्याः ॥४ ॥**
**गुहा हितं गुह्यं गूळहमप्स्वपीवृतं मायिनं क्षियन्तम्।**
**उतो अपो द्यां तस्तभ्वांसमहन्नहिं शूर वीर्येण ॥५ ॥**
**इन्द्रो महाँ सिन्धुमाशयानं मायाविनं वृत्रमस्फुरन्निः।**
**अरेजेतां रोदसी भियाने कनिक्रदतो वृष्णो अस्य वज्रात् ॥९ ॥**
**अरोरवाद्वृष्णो अस्य वज्रोऽमानुषं यन्मानुषो निजूर्वीत्।**
**नि मायिनो दानवस्य माया अपादयत्पिवान्त्सुतस्य ॥१० ॥**
**धिष्वा शवः शूर येन वृत्रमवाभिनद्दानुमौर्णवाभम्।**
**आपवृणोर्ज्योतिरार्याय नि सव्यतः सादि दस्युरिन्द्र ॥१८ ॥**
**सनेम ये त ऊतिभिस्तरन्तो विश्वाः स्पृध आर्येण दस्यून्।**
**अस्मभ्यं तत्त्वाष्ट्रं विश्वरूपमरन्धयः साख्यस्य त्रिताय" ॥१९ ॥**

ऋ.२/१२ "यो हत्वाहिमरिणात्सप्तसिन्धून्यो गा उदाजदपधा वलस्य।
यो अश्मनोरन्तरग्निं जजान संवृक् समत्सु स जनास इन्द्रः ॥३॥
येनेमा विश्वा च्यवना कृतानि यो दासं वर्णमधरं गुहाकः।
श्वघ्नीव यो जिगीवां लक्षमाददर्यः पुष्टानि स जनास इन्द्रः ॥४॥
यः शश्वतो मह्येनो दधानानमन्यमानाञ्छर्वा जघान।
यः शर्धते नानुदाति शृध्यां यो दस्योर्हन्ता स जनास इन्द्रः ॥१०॥
यः शम्बरं पर्वतेषु क्षियन्तं चत्वारिंश्यां शरद्यन्वविन्दत्।
ओजायमानं यो अहिं जघान दानुं शयानं स जनास इन्द्रः ॥११॥
यः सप्तरश्मिर्वृषभस्तुविष्मानवासृजत्सर्तवे सप्त सिन्धून्।
यो रौहिणमस्फुरद्वज्रबाहुर्द्यामारोहन्तं स जनास इन्द्रः ॥१२॥
यःशंबरं पर्य्यतरत् कसीभिर्यो चारुकास्नापिबत् सुतस्य।
अन्तर्गिरौर्यजमानं बहुजनं यस्मिन्नामूर्च्छत् स जनास इन्द्रः ॥१३॥
यःसोमकामो हर्य्यश्वः सूरिर्यदस्माद् रेजन्ते भुवनानि विश्वा।
यो जघान शंबरं यश्च शुष्णं य एकवीरः स जनास इन्द्रः" ॥१४॥
ऋ.२/१४ "अध्वर्यवो यो अपो वव्रिवांसं वृत्रं जघानाशन्येव वृक्षम्।
तस्मा एतं भरत तद्वशायँ एष इन्द्रो अर्हति पीतिमस्य ॥२॥
अध्वर्यवो यो दृभीकं जघान यो गा उदाजदप हि बलं वः।
तस्मा एतमन्तरिक्षे न वातमिन्द्रं सोमैरोर्णुत जूर्न वस्त्रैः ॥३॥
अध्वर्यवो य उरणं जघान नव चख्वांसं नवतिं च बाहून्।
यो अर्बुदमव नीचा बबाधे तमिन्द्रं सोमस्य भृथे हिनोत ॥४॥
अध्वर्यवो यः स्वश्नं जघान यः शुष्णमशुषं यो व्यंसम्।
वः पिप्रुं नमुचिं यो रुधिक्रां तस्मा इन्द्रायान्धसो जुहोत ॥५॥
अध्वर्यवो यः शतं शम्बरस्य पुरो बिभेदाश्मनेव पूर्वीः।
यो वर्चिनः शतमिन्द्रः सहस्रामपावपद्भरता सोममस्मै ॥६॥
अध्वर्यवो यः शतमा सहस्रं भूम्या उपस्थेऽवपज्जघन्वान्।
कुत्सस्यायोरतिथिग्वस्य वीरान्न्यवृणग्भरता सोममस्मै" ॥७॥
२/१५ "प्र घा न्वस्य महतो महानि सत्या सत्यस्य करणानि वोचम्!
त्रिकद्रुकेष्वपिबत्सुतस्यास्य मदे अहिमिन्द्रो जघान ॥१॥
स्वप्नेनाभ्युप्या चुमुरिं धुनिं च जघन्य दस्युं प्रदभीतिमावः।
रम्भी चिदत्र विविदे हिरण्यं सोमस्य ता मद इन्द्रश्चकार" ॥९॥

२/१९ "स सुन्वत इन्द्रः सूर्यमा देवो रिणङ्मर्त्याय स्तवान्।
आ यद्रयिं गुहदवद्यमस्मै भरदंश नैतशो दशस्यन्॥५॥
स रन्धयत्सदिवः सारथये शुष्णमशुषं कुयवं कुत्साय।
दिवोदासाय नवतिं च नवेन्द्रः पुरो व्यैरच्छम्बरस्य"॥६॥
२/२० "सो अङ्गिरसामुचथा जुजुष्वान्ब्रह्मा तूतोदिन्द्रो गातु मिष्णन्।
मुष्णन्नुषसः सूर्येण स्तवानश्नस्य चिच्छिश्नथत्पूर्व्याणि॥५॥
स ह श्रुत इन्द्रो नाम देव ऊर्ध्वो भुवन्मनुषे दस्मतमः।
अव प्रियमर्शसानस्य साह्वाञ्छिरो भरद्दासस्य स्वधावान्॥६॥
स वृत्रहेन्द्रः कृष्णयोनीः पुरन्दरो दासीरैरयद्वि।
अजनयन्मनवे क्षामपश्च सत्रा शंसं यजमानस्य तूतोत्॥७॥
तस्मै तवस्य १ मनु दायि सत्रेन्द्राय देवेभिरर्णसातौ।
प्रति यदस्य वज्रं बाह्वोर्धुर्हत्वी दस्यून्पुर आयसीर्नितारीत्"॥८॥

## दस्युओं का वध करने के कार्य की प्रशंसा करते हुए गृत्समद द्वारा इन्द्र की महिमा का गान

(२/११) "हे बलवान् हन्द्र ! अहि नाम के असुर (मेध, जो वर्षा को रोककर रखता है) से प्रतिबन्धित जिन श्रेष्ठ महान् जलों को तुमने समृद्ध बनाकर मुक्त किया है। स्तोत्रों से बढ़ते हुए, अहंकारी, न मरने वाले दास को भी तुमने नष्ट कर दिया है। अर्थात् अहि नामक मेघ जो जल की वृष्टि में बाधक हैं, उनको विद्युत् रूप इन्द्र छिन्न-भिन्न करके वृष्टि में सहायक होता है। वर्षा का जल सूर्य की किरणों से पूर्ण होने के कारण पुष्टिकारक है, समृद्ध है॥२॥

हे इन्द्र ! हम तेरे स्वच्छ ऐश्वर्य को बढ़ाने वाले बनें तथा तेरे हाथ में देदीप्यमान वज्र धारण करने में सहायक बनें। हे इन्द्र ! तू वृद्धि को प्राप्त होता हुआ हमारी कष्टकारिणी असुरजाति की प्रजा को नष्ट कर दे। (अर्थात् इन्द्र वर्षा करके समस्त पाप कर्म के प्रवर्तक दूषित कर्मों को नष्ट कर देता है)॥४॥

हे इन्द्र ! तुम उस अहि असुर का संहार कर दो, जो गुफा में छिपे गुप्त जल (पर्वतों और बादलों में छिपे जल को) रोक कर रखता है। ऐसे अहि को अपने पराक्रम से नष्ट कर दो, जो मायायुक्त होता हुआ द्युलोक को और गुप्त जल को रोक कर रखता है। (अहि नाम का मेघ बादलों में छिपे जल की वृष्टि में बाधक होता है)।।५॥

इन्द्र ने जल का मार्ग रोक कर सोये हुए मायावी कपट-नीति-कुशल तथा विशाल-काय वृत्र को मार दिया। सनसनाते हुए वज्र की घोर आवाज से द्यावा-पृथिवी, दोनों लोक काँपने लग गये॥९॥

प्रजा को कष्ट देने वाले वृत्र को जब प्रजा के संरक्षक इन्द्र ने मार डाला, तब इस शूरवीर इन्द्र का घोर वज्र घोर ध्वनि करने लगा। सोम का पान करने वाले इन्द्र ने कपटी वृत्र के समस्त कपट पूर्ण कर्मों को दूर कर दिया॥१०॥

हे बलवान् इन्द्र! जैसे मकड़ी का जाला चारों ओर फैल जाता है, वैसे चारों ओर फैले वृत्रासुर को जिस शक्ति से तूने मारा था, वह शक्ति तू धारण कर। तूने उस शक्ति से वृत्र के टुकड़े-टुकड़े किये और सज्जनों को (आर्यों को) प्रकाश प्रदान किया, जिससे तूने असुरों को विपरीत दिशा में पहुँचा दिया था॥१८॥

हे इन्द्र! हम, जो तेरे भक्त हैं, वे तेरी सहायता से, तेरे द्वारा रक्षित, समस्त दस्युओं की ओर दुष्टों की सेना को पार करते हुए, धन प्राप्त करें। हे इन्द्र! तूने त्रित के साथ मित्रता के लिए उस त्वष्टा के पुत्र विश्वरूप को हमारे वश में कर दिया था॥१९॥"

ऋग्वेद के ही २/१२ सूक्त में गृत्समद इत्यादि ऋषियों ने कहा - "हे लोगों! जिस इन्द्र ने बल नाम के असुर को मार कर उसके द्वारा छिपाई हुई गायों को मुक्त किया, जिसने अहि नाम के असुर (मेघ) को मारकर सातों नदियों में जल प्रवाहित किया, जिसने दो पत्थरों के बीच अग्नि (विद्युत) को उत्पन्न किया और जो संग्राम में शत्रु का संहारक है, वही इन्द्र है॥३॥

हे लोगो! जिसने इन समस्त लोकों को चलायमन बनाया है, जिसने दास वर्ण (असुर जाति को अधम लोकों में प्रतिष्ठित किया है, जिसने अपने लक्ष्य, अभीष्ट को जीत कर प्राप्त कर लिया है, जिसने शत्रु के पुष्टिकारक द्रव्यों को उसी प्रकार छीन लिया है जैसे कुत्तों से शिकार करने वाला व्याध शिकार को छीन लेता है॥४॥

हे लोगों! जिस इन्द्र ने बड़े-बड़े अपराधियों को मारा है। इन्द्र ने अपने हिंसक वज्र से विरोधी शत्रुओं को अपने वज्र से मारा है। जो इन्द्र अहंकारियों का अहंकार नाश करता है और जो दस्युओं का संहारक है, वह इन्द्र है॥१०॥

हे लोगो! जिसने पर्वतों में छिपे हुए शंबर को चालीसवें शरद् (वर्ष) में ढूँढ लिया, जिसने बलशाली सोते हुए दानव अहि को मारा, वह इन्द्र है॥११॥

हे लोगों! इन्द्र ने सात किरणों को धारण किया है, जो बलवान् है, जो ओजस्वी है, ऐसे इन्द्र ने सातों नदियों को बहाया है। जिस इन्द्र ने हाथ में वज्र धारण करके द्यौ पर चढ़ते हुए रौहिण असुर को नष्ट किया है, वह इन्द्र है॥१२॥

जिस इन्द्र ने शम्बर पर विजय प्राप्त की, जो विशिष्ट आयुध से युक्त होता हुआ सुन्दर दिखाई देता है, जिसने इस कसी से सोम का पान किया है, जो इस आयुध से पर्वत पर ऋत्विजों से युक्त यजमान को मूर्च्छित नहीं कर सका, हे लोगों! वह इन्द्र है॥३॥

जो इस सृष्टि का प्रेरक है, वह इन्द्र निरन्तर सोम की कामना करता है, जिसके वायु सदृश घोड़े इसे दूर दूर तक ले जाते हैं, जिससे ये समस्त लोक कांपते हैं, जिसने शम्बर का वध किया, जिसने शुष्ण का वध किया, जो इस सम्पूर्ण विश्व में एकमात्र (सर्वाधिक) वीर है, हे लोगों! वह इन्द्र है ॥४॥

२/१४ हे अध्वर्यु लोगों! इस इन्द्र ने अपने वज्र से जल के बाधक वृत्रासुर को वैसे ही मार दिया जैसे बिजली वृक्ष को नष्ट कर देती है। यह इन्द्र सोम पीने की योग्यता रखता है और वही इसकी इच्छा करता है अतः आप इसे सोम प्रदान करो ॥२॥

हे अध्वर्यु लोगों! जिसने दृभीक और वल नाम के असुर को मार कर गायों को मुक्त किया है। इन्द्र ने वल के घेरे को तोड़ा है। जैसे आकाश में आयु को स्थापित किया जाता है वैसे ही इस इन्द्र के लिए सोम स्थापित करो। इस इन्द्र को सोम से पूरी तरह ढक दो जैसे कोई निर्बल व्यक्ति वस्त्र से अपने तन को ढकता है ॥३॥

हे अध्वर्यु लोगों! जिस इन्द्र ने उरण को उसकी नौ आँखें और नब्बे भुजाओं को नष्ट करके मारा, जिसने अर्बुद को नीचे गिराया, उस इन्द्र को सोम का पान करने के लिए प्रेरित करो ॥४॥

हे अध्वर्यु लोगों! जिसने अश्न को मारा, जिसने न मरने योग्य शुष्ण को मारा, जिसने बाहुरहित अहि को मारा, जिसने पिप्रु, नमुचि और रूधिक्रा नाम के राक्षसों को मारा, ऐसे इन्द्र के लिए अन्न का हवन करो ॥५॥

हे अध्वर्यु लोगों! जिसने घोर वर्ची के सैकड़ों, सहस्त्रों वीरों को मारकर भूमि पर गिरा दिया, जिसने पत्थर के समान कठोर वज्र से शम्बर असुर के सैकड़ो पुराने नगरों को नष्ट कर दिया, उस इन्द्र के लिए सोम प्रदान करो ॥६॥

हे अध्वर्यु लोगों! जिसने इस पृथ्वी पर सैंकड़ों, सहस्त्रों असुरों को मार कर चारों ओर बिछा दिया, जिसने कुत्स, आयु और अतिथिग्व के वीरों को चारों ओर बिछा कर पतित किया, ऐसे इन्द्र के लिए सोम एकत्रित करो ॥७॥

२/१५-वह इन्द्र सत्यरूप है, जिसके समस्त कर्म महान् हैं, जिनको मैं कहता हूँ। इस इन्द्र ने तीन पात्रों में सोम का पान किया और उसके उत्साह में अहि का संहार किया ॥१॥

गृत्समद कहते हैं हे इन्द्र! तूने दुष्ट चुमुरि ओर धुनि नाम के राक्षसों को निद्रा-मग्न करके मार दिया और दभीति की रक्षा की, और रम्भी (द्वारपाल) ने धन प्राप्त किया। इन्द्र ने ये सभी कार्य सोम से प्राप्त उत्साह के कारण किये ॥९॥

ऋग्वेद के सूक्त संख्या २/१९ में ऋषि गृत्समद कहते हैं-"जैसे पिता अपने पुत्र को गुप्त धन का अंश प्रदान करता है वैसे ही इन्द्र को एतश अपना गुप्त धन देता है, तब प्रशंसित और तेजस्वी इन्द्र ने यज्ञकर्ताओं के लिए सूर्य को प्रकाशित किया ॥५॥

उस तेजस्वी इन्द्र ने अपने सारथि कुत्स के लिए शुष्ण, अशुष, कुयव नाम के असुरों को मारा, इसी इन्द्र ने दिवोदास के लिए शम्बर असुर को मार कर उसके निन्यानवें नगरों का ध्वंस किया ॥६ ॥

द्वितीय मण्डल के बीसवें सूक्त में गृत्समद कहते हैं-"वह इन्द्र अंगिरसों की प्रार्थना सुनता है और उन्हें अच्छे मार्ग पर प्रेरित करता है, ज्ञान में वृद्धि करता है। इन्द्र प्रातःकाल सूर्योदय के समय उषाओं को नष्ट कर देता है और अश्नासुर के पुराने नगरों को नष्ट कर देता है (रात्रि का सूर्योदय करके समाप्त करता है) ॥५ ॥

तेजस्वी, विचारशील, प्रसिद्ध, यशस्वी इन्द्र विचारशील मनुष्यों की रक्षा के लिए सदैव तत्पर रहता है। जो दास नाम के असुर दूसरों को कष्ट देते हैं, उनको शत्रुसंहर्ता बलवान् इन्द्र ने मस्तक का छेदन करके मार डाला ॥६ ॥

वृत्र को मारने वाले, शत्रुओं के नगरों का ध्वंस करने वाले इन्द्र ने कृष्णासुर की स्त्रियों का संहार किया। मनुष्यों के लिए भूमि और जल उत्पन्न किया, वह इन्द्र यजमान के प्रशंसनीय कर्म को बढावे ॥७ ॥

देवों ने उस इन्द्र को संग्राम के समय एकत्रित होकर शक्ति प्रदान की, इन्द्र ने अपनी भुजाओं में वज्र धारण करके दस्युओं का संहार करके, उनकी लोहनिर्मित नगरियों को ध्वंस कर दिया ॥८ ॥

# वामदेवः

## वामदेवो दस्युवधमनुकीर्तयन्निन्द्रमभिनन्दयामास।

**ऋ.४/१६ "आदस्युघ्ना मनसा याह्यस्तं भुवत्ते कुत्सः सख्ये निकामः।**
**स्वे योनौ निषदतं सरूपावि वां चिकित्सदृतचिद्ध नारी ॥१० ॥**
**यासि कुत्सेन सरथमवस्युस्तोदो वातस्य हर्योरीशानः।**
**ऋज्रा वाजं न गध्यं युयूषन्कविर्यदहन्पार्याय भूषात् ॥११ ॥**
**कुत्साय शुष्णमशुषं निबर्हीः प्रपित्वे अह्नः कुयवं सहस्रा।**
**सद्यो दस्यून्प्रमृण कुत्स्येन प्रसुरश्चक्र वृहतादभीके ॥१२ ॥**
**त्वं पिप्रुं मृगयं शूशुवांसमृजिश्वने वैदथिनाय रन्धीः।**
**पञ्चाशत्कृष्णा नि वपः सहस्रात्कं न पुरो जरिमा विदर्दः" ॥१३ ॥**
**ऋ.४/१७ "त्वं महाँ इन्द्र तुभ्यं ह क्षा अनु क्षत्रं मंहना मन्यत द्यौः।**
**त्वं वृत्रं शवसा जघन्वान्त्सृजः सिन्धूँरहिना जग्रसानान् ॥१ ॥**
**त्वमध प्रथमं जायमानोऽमे विश्वा अधिया इन्द्र कृष्टीः।**

त्वं प्रति प्रवत आशयानमहिं वज्रेण मघवन्वि वृश्चः ॥७॥
अयं चक्रमिषणत् सूर्यस्य न्येतशं रीरमत्ससृमाणम्।
आ कृष्ण ईं जुहुराणो जिघर्ति त्वचो बुध्ने रजसो अस्य योनौ" ॥१४॥
ऋ.४/१८ "ममच्चन ते मघवन्व्यंसो निविविध्वाँ अप हनू जघान।
अधा निविद्ध उत्तरो बभूवाञ्छिरो दासस्य संपिणग्वधेन" ॥९॥
ऋ.४/१९ "अतृप्णुवन्तं वियतमबुध्यमबुध्यमानं सुषुपाणमिन्द्र।
सप्त प्रति प्रवत आशयानमहिं वज्रेण विरिणा अप्रवन् ॥३॥
अक्षोदयच्छवसा क्षाम बुध्नं वार्ण वातस्तविषीभिरिन्द्रः।
दृळान्यौभ्नादुशमान ओजोऽवाभिनत्ककुभः पर्वतानाम् ॥४॥
अभि प्र दद्रुर्जनयो न गर्भं रथा इव प्रययुः साकमद्रयः।
अतर्पयो विसृत उब्ज ऊर्मीन्त्वं वृताँ अरिणा इन्द्र सिन्धून् ॥५॥
त्वं महीमवनिं विश्वधेनां तुर्वीतये वय्याय क्षरन्तीम्।
अरमयो नमसैजदर्णः सुतरणाँ अकृणोरिन्द्र सिन्धून्' ॥६॥
इन्द्रस्य वामदेवः प्रियतम आसीदयं हि देवस्य।
इन्द्रस्य वामदेवः प्रियतम आसीदयं हि देवस्य।
इन्द्रस्य मूर्तिपूजां प्रचारयामास लोकेऽस्मिन् ॥१॥
ऋक्संहितातुरीयकमण्डलसूक्ते चतुर्विंशे।
दशमच्चैन्द्रप्रतिमां व्यक्रीणाद् धेनुभिर्दशभिः ॥२॥
सर्वप्रथमं मन्ये देवयुगे वामदेव एवायम्।
देवप्रतिमापूजां प्रचारयामास मानुषे लोके ॥३॥
यद्यपि ततोऽपि पूर्व सारस्वतसूर्य्यसदनेऽभूत्।
अपि सूर्य्यचक्रमूर्त्तेरुपासनारम्भ इत्याहुः ॥४॥
विज्ञानार्था सेयं किन्त्वासीत् सूर्य्यचक्रस्य।
दृष्टिपरीक्षोपासा देवप्रतिमार्चना नैवम् ॥५॥
योगस्त्रिधा क्रियाया भक्तेर्ज्ञानस्य भेदेन।
भक्तेस्ते चत्वारो हठलयसन्मन्त्रराजयोगाख्याः ॥६॥
देवप्रतिमोपासा प्रकल्पिता मन्त्रयोगविधा।
मन्त्राराधितदेवः प्रत्यासन्नोऽवति प्रायः ॥७॥
"देवानामिदवो महत् तदावृणीमहे वयम्।
वृष्णामस्मभ्यमूतये" ॥ (ऋ.८/८३/१)
उत्कृष्टं बहुमूल्यं विक्रीणन् द्रव्यमल्पमूल्येन।

**पूजाफलोपलब्धौ समयं प्रत्यर्पणाय चक्रे सः ॥८॥**
**अत एवेन्द्रस्तमृषिं महयितुमिव वामदेवस्य।**
**प्रमहोत्सवेऽभिगरमनु वक्तुं प्रतिगरमिहान्तरोत्तस्थौ ॥९॥**

# वामदेव

## दस्युओं का वध करने पर प्रशंसा करते हुए वामदेव द्वारा इन्द्र का अभिनन्दन

चतुर्थ मण्डल में वामदेव स्तुति-मन्त्रों से अभिनन्दन करते हैं-(४/१६)-हे इन्द्र ! तू दस्युओं को मारने की इच्छा रखते हुए हमारे निवास पर आ, तेरी इच्छा करने वाला कुत्स तुझसे मित्रता करे, समान स्वभाव वाले तुम दोनों (इन्द्र और कुत्स) एक साथ रहो, तब सत्य और ज्ञान से युक्त गृहिणी तुम्हारा सत्कार करे ॥१०॥

जब ज्ञानी कुत्स योग्य बल को प्राप्त करके, सरलता से चलने वाले घोड़ो को जोत कर रथ के द्वारा संकट से पार होने में तत्पर होता है, तब वायुवेग के समान घोड़ों का स्वामी, बुद्धिमान्, शत्रुओं को मारने वाला, कुत्स की रक्षा करने वाले हे इन्द्र ! तू कुत्स के साथ बैठ कर एक साथ चलता है ॥११॥

हे इन्द्र ! तूने कुत्स की रक्षा के लिए महाबलशाली शुष्ण दैत्य का संहार किया, तथा पूर्वाह्न में हे इन्द्र ! तूने हजारों सैनिकों के साथ कुयव को मारा तथा अनेक दस्युओं को शीघ्र ही अपने वज्र से मार दिया। उस युद्ध में तूने सूर्यचक्र (सूर्य के समान तेजस्वी शस्त्रास्त्रों) को नष्ट कर दिया ॥१२॥

हे इन्द्र ! तूने विदथि के पुत्र ऋजिश्वी के लिए पिप्रु नाम के असुर का संहार किया, तथा बलवान् मृगया नामक राक्षस को मारा। इन्द्र ने पचास हजार कृष्णवर्ण असुरा-का संहार किया। हे इन्द्र ! तूने शत्रु के नगरों को उसी तरह तोड़ दिया जैसे लोग जीर्ण कपड़ों को फाड़ डालते हैं ॥१३॥

४/१७ में वामदेव कहते हैं- हे इन्द्र ! तू महान् है, यह पृथ्वी तेरी ही महानता से चलायमान है। यह महिमामय द्यौः भी तेरी महत्ता स्वीकार करता है। तूने अपने बल से वृत्र का संहार किया तथा अहि के द्वारा रोका हुआ जल मुक्त करके नदियाँ बहायी ॥१॥

हे इन्द्र ! उत्पन्न होते ही तूने सबसे पहले युद्ध में समस्त प्रजाओं को धारण किया, तूने प्रवाहित जल को रोक कर शयन करने वाले अहि नामके दैत्य का वज्र से संहार किया ॥७॥

इस इन्द्र ने सूर्य-चक्र को प्रेरणा दे कर युद्ध के लिए आते हुए एतश दैत्य को लौटा दिया (चारों ओर छाये अन्धकार को नष्ट किया) कुटिल गति वाले काले मेघ में,

जो तेजस्वी जल का मूलभूत स्थान है, उस अन्तरिक्ष में इन्द्र को समाहित रखता है (दो काले मेघों में घर्षण से विद्युत् उत्पन्न होती है वही इन्द्र है) ॥१४॥

"हे ऐश्वर्यवान् इन्द्र! व्यंस नामक असुर ने एक बार तुझ पर आक्रमण करते हुए तेरी ठोड़ी पर प्रहार किया, जिसके फलस्वरूप तू और भी अधिक बलशाली हुआ तब तूने उस दास के मस्तक को काट डाला॥"(४/१८/९)

४/१९ में वामदेव गौतम स्तुति करते हैं- हे इन्द्र! अतृप्त अबुध्य, स्वयं कुछ न जानने वाले, सोने की इच्छा रखने वाले (असुर) सात नदियों को घेर कर बैठने वाले तथा अन्तरिक्ष में रहने वाले अहि नाम के असुर को हे इन्द्र! तूने अपने वज्र से छिन्न-भिन्न कर दिया॥३॥

इन्द्र ने द्युलोक और पृथ्वीलोक को उसी तरह हिला दिया जैसे वायु से जल में हलचल हो जाती है। बलशाली इन्द्र ने अत्यन्त शक्तिशाली शत्रुओं का भी संहार कर दिया तथा पर्वतों के पंखो को काट दिया॥४॥

हे इन्द्र! जैसे मातायें अपने गर्भ की रक्षा करती हैं, वैसे ही ये शस्त्र तेरी रक्षा करते हैं। रथों के समान युद्ध में साथ चलने वाले शस्त्र तेरी रक्षा करते हैं। हे इन्द्र! तूने मेघों को फोड़ कर, जलों को प्रेरित करके नदियों को बहाया है॥५॥

हे इन्द्र! तूने तुर्वीति और वय्य के लिए, सबको तृप्त करने वाली, धान्य देने वाली विशाल पृथ्वी को प्रवाहयुक्त जल और अन्न से तृप्त किया है। हे इन्द्र! तूने नदियों को सरलता से पार करने योग्य बनाया है॥६॥

वामदेव इन्द्र देव के परमप्रिय थे, इन वामदेव ने इस लोक में इन्द्र की मूर्ति की पूजा का प्रचार किया॥१॥

ऋग्वेद के चतुर्थ मण्डल के चौबीसवें सूक्त की दसवीं ऋचा में इस इन्द्र की मूर्ति को दस गायों के बदले बेचा ऐसा वर्णन है॥२॥

मैं मानता हूँ कि देवयुग में सर्वप्रथम इन्हीं वामदेव ऋषि ने ही मनुष्यलोक में देव-प्रतिमा (मूर्ति) पूजा का प्रचार किया॥३॥

यद्यपि ऐसा कहा जाता है कि इससे भी पहले सरस्वती नगर में सूर्यसदन में सूर्य-मण्डल की मूर्ति की उपासना प्रारम्भ की गई थी॥४॥

परन्तु सूर्यचक्र की यह उपासना दृष्टिपरीक्षा द्वारा सूर्यमण्डल के सम्बन्ध में विश्लेषणात्मक विज्ञान के लिए की गई थी न कि यह सूर्य देव की मूर्ति की पूजा के लिए॥५॥

क्रिया, भक्ति और ज्ञान के भेद से योग तीन प्रकार का है, तथा भक्ति के चार भेद हैं-हठ (विशेष भावचिन्तन की रीति), लय (गहन एकाग्रता अथवा अनन्य भक्ति), सन्मन्त्र एवं राजयोग (हठयोगादि कठोर भक्ति मार्ग से भिन्न, राजाओं द्वारा भक्ति का एक सरल साधन)॥६॥

देवप्रतिभा की उपासना मन्त्रयोग-विधि से निश्चित की गई। मन्त्र द्वारा अराधना करने पर प्रायः देवता हृदय के निकट आ जाते हैं, प्रसन्न हो जाते हैं ॥७ ॥

वेद में भी लिखा है-"यह अग्नि देवताओं में निश्चय ही महान् है। इसलिए समस्त देवों में से हम उसी का चयन करते हैं। सबल व्यक्ति के समान यह अग्नि हमारी रक्षा के लिए उद्यत रहता है ॥"

श्रेष्ठ और बहुमूल्य मूर्ति को अल्पमूल्य में बेचते हुए वह पूजा द्वारा फल की प्राप्ति होने पर मूर्ति को वापस लौटाने की प्रतिज्ञा करता था ॥८ ॥

अत एव इन्द्र ऋषि वामदेव का महत्त्व-वर्धन करने के लिए उस प्रमहोत्सव में प्रार्थना के पश्चात् धन्यवादस्वरूप प्रत्युत्तर के लिए खड़े हुए ॥९ ॥

## वामदेवं प्रतीन्द्रः स्वं चरितमनुवर्णयति।

**ऋ.४/२६ "अहं मनुरभवं सूर्यश्चाहं कक्षीवाँ ऋषिरस्मि विप्रः।**
**अहं कुत्समार्जुनेयं न्यृञ्जेऽहं कविरुशना पश्यता मा ॥१ ॥**
**अहं भूमिमददामार्यायाऽहं वृष्टिं दाशुषे मर्त्याय।**
**अहमपो अनयं वावशाना मम देवासो अनु केतमायन् ॥२ ॥**
**अहं पुरो मन्दसानो व्यैरं नवसाकं नवतीः शम्बरस्य।**
**शततमं वेश्यं सर्वताता दिवोदासमतिथिग्वं यदावम्" ॥३ ॥**
**अथवा देवेन्द्रस्य व्याहृतिमयमेव वामदेव ऋषिः।**
**प्रतिनिधितयेन्द्रभावं स्वस्मिन्नारोप्य वक्ति स्म ॥१ ॥**

## वामदेव के प्रति इन्द्र द्वारा अपना चरित्र-वर्णन

४/२६ इन्द्र कहते हैं-"मैं इन्द्र अर्थात् आत्मा ही मनु हूँ, मैं ही सूर्य हूँ, मैं ही बुद्धिमान् कक्षीवान् ऋषि हूँ। मैंने ही अर्जुन के पुत्र कुत्स को समर्थ किया है, मैं ही दूरदर्शी उशना कवि हूँ, मुझे देखो ॥१ ॥

मैंने श्रेष्ठ पुरुषों के लिए भूमि प्रदान की है, मैंने दानशील पुरुषों के लिए जल की वृष्टि की है, मैं ही शब्द करते हुए जलों को आगे जाने के लिए प्रेरित करता हूँ और सभी देव मेरे ही संकल्पानुसार चलें ॥२ ॥

मैंने सरलतापूर्वक शम्बर नाम के असुर का संहार किया है और उसके निन्यानवें नगरों को एक साथ नष्ट कर दिया था तथा जब अतिथियों को गायों का दान करने वाले दिवोदास की रक्षा की, तब उसके लिए सौवें रहने योग्य नगर का निर्माण किया ॥३ ॥"

अथवा स्वयं वामदेव ऋषि ने ही देवराज इन्द्र के प्रतिनिधि रूप से स्वयं में इन्द्र भाव का आरोपण करके इन्द्र के इन वचनों को कहा है ॥१ ॥

# पुनर्वामदेवोऽनुकीर्तयन्निन्द्रं महयति

ऋ.४/२८ "त्वा युजा तव तत्सोम सख्य इन्द्रो अपो मनवे सस्रुतस्कः।
अहन्नहिमरिणात्सप्त सिन्धूनपावृणोदपिहितेव खानि ॥१ ॥
त्वा युजा नि खिदत्सूर्यस्येन्द्रश्चक्रं सहसा सद्य इन्दो।
अधि ष्णुना बृहता वर्तमानं महो द्रुहो अप विश्वायु धायि ॥२ ॥
अहन्निन्द्रो अदहदग्निरिन्दो पुरा दस्यून्मध्यन्दिनादभीके।
दुर्गे दुरोणे क्रत्वा न यातां पुरू सहस्रा शर्वा नि बर्हीत् ॥३ ॥
विश्वस्मात्सीमधमाँ इन्द्र दस्यून्विशो दासीरकृणोरप्रशस्ताः।
अबाधेथाममृणतं नि शत्रूनविन्देथामपचितिं वधत्रैः" ॥४ ॥
ऋ. ४/३० "नकिरिन्द्र त्वदुत्तरो न ज्यायाँ अस्ति वृत्रहन्।
नकिरेवा यथा त्वम् ॥१ ॥
सत्रा ते अनु कृष्टयो विश्वा चक्रेव वावृतुः।
सत्रा महाँ असि श्रुतः ॥२ ॥
विश्वे चनेदना त्वा देवास इन्द्र युयुधुः।
यदहा नक्तमातिरः ॥३ ॥
यत्रोत बाधितेभ्यश्चक्रं कुत्साय युध्यते।
मुषाय इन्द्र सूर्यम् ॥४ ॥
यत्र देवाँ ऋघायतो विश्वाँ अयुध्य एक इत्।
त्वमिन्द्र वनूँहन् ॥५ ॥
यत्रोत मर्त्याय कमरिणा इन्द्र सूर्यम्।
प्रावः शचीभिरेतशम् ॥६ ॥
किमादुतासि वृत्रहन् मघवन् मन्युमत्तमः।
अत्राह दानुमातिरः ॥७ ॥
एतद्घेदुत वीर्यमिन्द्र चकर्थ पौंस्यम्।
स्त्रियं यद्दुर्हणायुवं वधीर्दुहितरं दिवः ॥८ ॥
दिवश्चिद्घा दुहितरं महान्महीयमानाम्।
उषासमिन्द्र सम्पिणक् ॥९ ॥
अपोषा अनसः सरत्सम्पिष्टादह बिभ्युषी।
नि यत् सीं शिश्नथद्वृषा ॥१० ॥

एतदस्या अनः शये सुसम्पिष्टं विपाश्या।
ससार सीं परावतः ॥११॥
उत सिन्धुं विबाल्यं वितस्थानामधि क्षमि।
परि ष्ठा इन्द्र मायया ॥१२॥
उत शुष्णस्य धृष्णुया प्र मृक्षो अभि वेदनम्।
पुरो यदस्य सम्पिणक् ॥१३॥
उत दासं कौलितरं बृहतः पर्वतादधि।
अवाहन्निन्द्र शम्बरम् ॥१४॥
उत दासस्य वर्चिनः सहस्राणि शताऽवधीः।
अधि पञ्च प्रधीँरिव ॥१५॥
उत त्या सद्य आर्य्या सरयोरिन्द्र पारतः।
अर्णाचित्ररथावधीः ॥१८॥
शतमश्मन्मयीनां पुरामिन्द्रो व्यास्यत्
दिवोदासाय दाशुषे ॥२०॥
अस्वापयद्दभीतये सहस्रा त्रिंशतं हथैः।
दासानामिन्द्रो मायया" ॥२१॥

ऋ.४/३२ "प्र ते वोचाम वीर्या३ या मन्दसान आरुजः।
पुरो दासीरभीत्य ॥१०॥
ता ते गृणन्ति वेधसो यानि चकर्थ पौंस्या।
सुतेष्विन्द्र गिर्वणः ॥११॥
सहस्रं व्यतीनां युक्तानामिन्द्रमीमहे।
शतं सोमस्य खार्यः ॥१७॥
सहस्रा ते शता सयं गवामा च्यावयामसि।
अस्मत्रा राध एतु ते ॥१८॥
दश ते कलशानां हिरण्यानामधीमहि।
भूरिदा असि वृत्रहन् ॥१९॥
भूरिदा भूरि देहि नो मा दभ्रं भूर्या भर।
भूरि घेदिन्द्र दित्ससि" ॥२०॥

# पुनः वामदेव द्वारा इन्द्र की महिमा का गान

ऋग्वेद के ४/२८ सूक्त में वामदेव कहते हैं- "हे सोम! तेरी मित्रता होने पर इन्द्र ने तेरी सहायता से मनु के लिए (मनुष्यो के लिए) प्रवाहयुक्त जलों को उत्पन्न किया और बन्द द्वारों को खोल दिया॥१॥

हे सोम! इन्द्र ने तेरी सहायता से द्युलोक में चलने वाले सूर्यक्रम को शीघ्र ही बल के द्वारा अपने अधिकार में कर लिया। महान् द्रोही सूर्य के सर्वत्र विचरण करने वाले चक्र को अपने अधिकार में किया॥२॥

हे सोम! मध्याह्न से पहले ही युद्ध में इन्द्र ने शत्रुओं का संहार कर दिया और उन्हें अग्नि में जला दिया। कठिनाई से प्रवेश करने योग्य किले में छिपे रहने पर भी इन्द्र ने राक्षसों के हजारों नगरों को पराक्रम और बल से नष्ट कर दिया॥३॥

हे इन्द्र! तूने इन समस्त दस्युओं को दासभाव से युक्त किया, नीचा करके उनको निन्दनीय बनाया। हे इन्द्र और सोम! तुम दोनों ने शत्रुओं को रोककर उन्हें शस्त्रों से मारा। इसीलिए तुमने सम्मान प्राप्त किया"॥४॥

ऋग्वेद के ४/३० में वामदेव इन्द्र की स्तुति करते हुए कहते हैं-"हे इन्द्र! वृत्र-संहर्ता! तुझसे श्रेष्ठ कोई दूसरा नहीं है। तुझसे बड़ा भी कोई नहीं है। जैसा तू है वैसा कोई अन्य नहीं है॥१॥

हे इन्द्र! सभी प्रजाजन तेरे अनुकूल और तेरे साथ-साथ रहतें है। रथचक्र के समान सभी तेरे साथ चलते हैं। इसीलिए तू सचमुच महान् और प्रसिद्ध है॥२॥

हे इन्द्र! सभी देवता तुझ बलवान् को साथ लेकर युद्ध करने लगे। तब तूने दिन रात में शत्रुओं का संहार कर दिया॥३॥

हे इन्द्र! तूने शत्रु के साथ युद्ध करने वाले कुत्स की रक्षा के लिए युद्ध मे सूर्य-चक्र उठाया और अपने भक्त की सहायता की॥४॥

हे इन्द्र! देवों का नाश करने वाले राक्षसों का युद्ध में तू अकेला ही नाश करता रहा और हिंसा करने वाले दैत्यों को मारता रहा॥५॥

हे इन्द्र! तुमने जहाँ प्राणियों को सुख देने के लिए सूर्य को बनाया तथा अपनी रीति से एतश को रक्षा प्रदान की॥६॥

हे वृत्रहन्, धनवान् इन्द्र! तू शत्रुओं पर क्रोध करने वाला, अत्यन्त उत्साही है, तूने ही समस्त दानवों का संहार किया है॥७॥

हे इन्द्र! तुम्हारे जितने भी पुरुषार्थयुक्त कर्म हैं, (वे प्रशंसनीय हैं) मर्यादा से बाहर जाती हुई द्युलोक की पुत्री उषा को नष्ट किया है (सूर्योदय करके प्रातःकालीन लालिमा को समाप्त किया है)॥८॥

हे इन्द्र ! तू महान् है। तूने द्युलोक की महिमामयी पुत्री उषा के रथ को छिन्न-भिन्न कर दिया है ॥९ ॥

इन्द्र ने उषा का रथ तोड़ा तो वह टूटे रथ वाली उषा डरती हुए दूर हट गई ॥१० ॥

इस उषा का टूटा हुआ रथ विपाशा नदी के किनारे पड़ा और यह उषा वहाँ से भी दूर भाग गई ॥११ ॥

हे इन्द्र ! तूने इस वेगवती, जल से परिपूर्ण सिन्धु नदी को पृथ्वी पर अपने बल से स्थिर किया ॥१२ ॥

हे इन्द्र ! जब तूने शुष्ण के नगरों को नष्ट किया तो हे शत्रुसंहारक इन्द्र ! तूने उसके समस्त धन का भी हरण कर लिया ॥१३ ॥

हे इन्द्र ! तूने बहुत ऊँचे पर्वत से दास कुलितर के पुत्र शम्बर को नीचे गिरा कर मार दिया ॥१४ ॥

हे इन्द्र ! तूने विनाश करने वाले शत्रु के पांच लाख सैनिकों को, जो चक्र के अरे के समान परस्पर सम्बद्ध थे, सरलता से मार दिया ॥१५ ॥

हे इन्द्र ! उन आर्यों ने अर्ण और चित्ररथ को, जो सरयू पार रहते थे, शीघ्र ही मार दिया ॥१८ ॥

इन्द्र ने दारनवीर दिवोदास को शत्रु के सौ किलों वाले नगर प्रदान कर दिये ॥२० ॥

दुष्ट, विनाश करने वाले तीस हजार वीरों को दभीति की रक्षा के लिये इन्द्र ने सुला (मार) दिया ॥२१ ॥

ऋग्वेद के चतुर्थ मण्डल के ही बत्तीसवें सूक्त में वामदेव गौतम कहते हैं - "हे इन्द्र ! तूने प्रसन्नचित्त होते हुए आक्रमणकारी दास के नगरों को तोड़ दिया, तेरे उन पराक्रमों का हम वर्णन करते हैं ॥१० ॥

हे स्तुत्य इन्द्र ! ज्ञानी लोग तेरे द्वारा किये गये पराक्रमों की प्रशंसा करते हैं ॥११ ॥

हे इन्द्र ! हम याचना करते हैं कि तू हमें हजारों शत्रुसंहारक, योग्य एवं शिक्षित घोड़े प्रदान कर ॥७ ॥

हे इन्द्र ! हम तुझसे सैंकड़ों और हजारों गायें मांगते हैं, हमें तेरा समस्त ऐश्वर्य प्राप्त हो ॥१८ ॥

हे इन्द्र ! हम तेरे दस सुवर्णयुक्त कलशों को प्राप्त करते हैं, हे वृत्रहन् ! तू हमें दान देने वाला है ॥१९ ॥

हे दानवीर इन्द्र ! तू हमें अल्प नहीं अपितु बहुत मात्रा में धन प्रदान कर ! क्योंकि तू हमें बहुत अधिक धन देना चाहता है इसलिए वह हमें दे ॥२० ॥

## जेता माधुच्छन्दसः स्तौति।

"पुरां भिन्दुर्युवा कविरमितौजा अजायत।
इन्द्रो विश्वस्य कर्म्मणो धर्ता वज्री पुरुष्टुतः" ॥१॥ (१/११/४)
"मायाभिरिन्द्र मायिनं त्वं शुष्णमवातिरः।
विदुष्टे तस्य मेधिरास्तेषां श्रवाँस्युत्तिर" ॥२॥(१/११/७)

## विजयी माधुच्छन्दस द्वारा स्तुति

युवा, मेधावी, प्रभूत बलशाली, सब कर्मों के परिपोषक, वज्रधारी और सर्व-स्तुत इन्द्र ने असुरों के नगर-विदारक रूप से जन्म ग्रहण किया था।(१/११/४)

इन्द्र! तुमने मायावी शुष्ण का माया द्वारा वध किया था। तुम्हारी महिमा मेधावी लोग जानते हैं। उन्हें शक्ति प्रदान करो।(१/११७)

## सुमित्रो दुर्मित्रो वा कौत्सः स्तौति।

१०/१०५ "शतं वा यदसुर्य प्रति त्वा सुमित्र इत्थास्तौद्दुर्मित्र इत्थास्तौत्।
आवो यद्दस्युहत्ये कुत्सपुत्रं प्रावो यद्दस्युहत्ये कुत्सवत्सम्" ॥११॥

## कुत्स के पुत्र सुमित्र अथवा दुर्मित्र द्वारा इन्द्र की स्तुति

ऋग्वेद के दसवें मण्डल के १०५वें सूक्त में कुत्स के पुत्र स्तुति करते हैं-"हे वीर्यवान् इन्द्र! जब तुमसे बहुत धन की इच्छा की, दस्युहत्या के समय कुत्सपुत्र सुमित्र और दुर्मित्र की रक्षा की, तब दुर्मित्र और सुमित्र ने तुम्हारी स्तुति की" ॥११॥

## वभ्रुरात्रेयोऽभिनन्दयति।

ऋ.५/३० "परो यत्त्वं परम आजनिष्ठाः परावति श्रुत्यं नाम बिभ्रत्।
अतश्चिदिन्द्रादभयन्त देवा विश्वा अपो अजयद्दासपत्नीः ॥५॥
तुभ्येदेते मरुतः सुशेवा अर्चन्त्यर्कं सुन्वन्त्यन्धः।
अहिमोहानमप आशयानं प्र मायाभिर्मायिनं सक्षदिन्द्रः ॥६॥
वि षू मृधो जनुषा दानमिन्वन्नहन्गवा मघवन्त्सञ्चकानः।
अत्रा दासस्य नमुचेः शिरो यदवर्तयो मनवे गातुमिच्छन् ॥७॥
युजं हि मामकृथा आदिदिन्द्र शिरो दासस्य नमुचेर्मथायन्।
अश्मानं चित्स्वर्यं वर्तमानं प्र चक्रियेव रोदसी मरुद्भ्यः ॥८॥
स्त्रियो हि दास आयुधानि चक्रे किं मा करन्नबला अस्य सेनाः।
अन्तर्ह्यख्यदुभे अस्य धेने अथोप प्रैद्युधये दस्युमिन्द्रः" ॥९॥

## अत्रिपुत्र वभ्रु द्वारा अभिनन्दन

हे श्रेष्ठ इन्द्र ! दूर देश में उत्पन्न होने पर भी सभी दस्युओं में तेरा यश व्याप्त है, तू यश धारण करके ही उत्पन्न हुआ है, तभी से समस्त देवताओं में भी तेरा भय व्याप्त है तथा तूने दास के द्वारा रोके गये जलों को जीत लिया है ॥५ ॥

उत्तम सेवा करने योग्य ये मरुत् तेरे लिए सोम का सेवन करते हैं। इन्द्र ने अपनी कुशलता से मायावी देवों को कष्ट पहुंचाने वाले, जलों को रोक कर शयन करे वाले अहि असुर को मार दिया ॥६ ॥

हे मघवन् ! तूने जन्म लेते ही अपने वज्र से दानासुर का संहार किया। तू स्तुत्य है ! तुने मनु के मार्ग बनाने के लिए दास और नमुचि के सिर को अपने वज्र से काट डाला ॥७ ॥

हे इन्द्र ! तूने गर्जना करने वाले, मेघ के समान खड़े दास और नमुचि के सिर को काट दिया। तत्पश्चात् मरुतों को मित्र बनाकर उनके लिए घावापृथ्वी को दो भागों में विभक्त किया ॥८ ॥

तदन्तर दासों ने इन्द्र के भय से स्त्रियों की सेना बनाई। तब इन्द्र ने सोचा-यह अबला-सेना मेरा क्या बिगाड़ सकती है? यह विचार करके इन्द्र ने दास की अबला सेना में से दो सुन्दर स्त्रियों को बन्दी बना लिया (जिससे डरकर समस्त सेना भाग गई) और दस्यु पर आक्रमण कर दिया ॥९ ॥(५/३०)

## अवस्युरात्रेयोऽभिनन्दयति

**ऋ.५/३१ "इन्द्रो रथाय प्रवतं कृणोति यमध्यस्थानमघवा वाजयन्तम्।**
**यूथेव पश्वो व्युनोति गोपा अरिष्टो याति प्रथमः सिषासन् ॥१ ॥**
**अनवस्ते रथमश्वाय तक्षन् त्वष्टा वज्रं पुरुहूत द्युमन्तम्।**
**ब्रह्माण इन्द्रं महयन्तो अर्कैरवर्द्धयन्नहये हन्तवा उ ॥४ ॥**
**वृष्णे यत्ते वृषणो अर्कमर्चानिन्द्र ग्रावाणो अदितिः सजोषाः।**
**अनश्वासो ये पवयोऽरथा इन्द्रेषिता अभ्यवर्तन्त दस्यून् ॥५ ॥**
**प्र ते पूर्वाणि करणानि वोचं प्र नूतना मघवन्या चकर्थ।**
**शक्तीवो यद्विभरा रोदसी उभे जयन्नपो मनवे दानुचित्राः ॥६ ॥**
**तदिन्नु ते करणं दस्म विप्राहिं यद् ध्नन्नोजो अत्रामिमीथाः ॥**
**शुष्णस्य चित्परि माया अगृभ्णाः प्रपित्वं यन्नप दस्यूँरसेधः ॥७ ॥**
**त्वमपो यदवे तुर्वशायारमयः सुदुघाः पार इन्द्र।**

**उग्रमयातमवहो ह कुत्सं सं ह यद्वामुशनाऽरन्त देवाः ॥८ ॥**
**इन्द्राकुत्सा वहमाना रथेना वामत्या अपि कर्णे वहन्तु।**
**निःषीमद्भ्यो धमथो निः षेधस्थान्मघोनो हृदो वरथस्तमांसि" ॥९ ॥**

## २. अत्रि-पुत्र अवस्यु द्वारा इन्द्र का अभिनन्दन

ऋग्वेद के ५/३१ में कहते हैं-

यह ऐश्वर्यवान् जिस रथ पर भी बैठ जाता है, उसी रथ को द्रुतगतिमान् बना देता है। जिस प्रकार एक ग्वाला अपने पशुओं के झुण्ड को प्रेरित करता है, उसी प्रकार यह इन्द्र अपनी सेना को प्रेरणा देता हुआ, धन प्रदान करता हुआ, अपराजेय होता हुआ जाता है ॥१ ॥

हे पुरूहूत! शिल्पियों ने इन रथों को घोड़ों के लगाने के लिए बनाया, ऋषि त्वष्टा ने तेरे लिए वज्रायुध बनाया, तेरी स्तुति करने वालों ने अहि का वध करने के लिए तुझे इन्द्रस्तुति से उत्साहित किया ॥४ ॥

हे इन्द्र! बिना घोड़ों के रथों के साथ भी इन्द्र की प्रेरणा से जिन मरुतों ने दस्युओं का वध किया, तब उन बलवान् मरुतों ने तुझ वीर्यवान् की स्तुति की और कठोर पत्थरों से कूट कर सोम का सवन करने लगे ॥५ ॥

हे शक्तिशाली, ऐश्वर्यवान् इन्द्र! जब तूने द्यावा पृथिवी को जीत कर मनुष्य के लिए स्नेहपूर्ण जल को धारण किया, तब तेरे उन समस्त नवीन और प्राचीन कर्मों का मैं वर्णन करता हूँ ॥६ ॥

हे शोभनीय, बुद्धिमान् इन्द्र! तूने अहि नामक असुर को मारकर जो पराक्रम दिखाया है, शुष्ण की माया को प्रकाशित किया, युद्ध में उसका वध किया, तेरे वे सभी कर्म प्रशंसा के योग्य हैं ॥७ ॥

हे इन्द्र! तूने यदु और तुर्वश के लिए वनस्पतियों को उत्पन्न करने हेतु जलों को बहाया। तू दुःखनाशक है! तूने आक्रामक घोर शत्रु से कुत्स की रक्षा की, तब उशना, और देवों ने तुम्हारी स्तुति की ॥८ ॥

हे कुत्स और इन्द्र! तुम दोनों द्रुतगति से चलने वाले घोड़ों को युद्ध में ले जाओ। तुमने जल में छिपकर रहने वाले असुर का संहार किया, और उसे पदच्युत करके तुम दानी और धनवान् मनुष्य के हृदय में से भय और पाप का निराकरण करो ॥९ ॥

## गातुरात्रेयोऽभिनन्दयति

**ऋ. ५।३२ "अदर्दरुत्समसृजो वि खानि त्वमर्णवान्बद्बधानाँ अरम्णाः।**
**महान्तमिन्द्रपर्वतं वियद्वः सृ वि धारा अव दानवं हन् ॥१ ॥**

त्वमुत्साँ ऋतुभिर्बद्बधानाँ अरंह ऊधः पर्वतस्य वज्रिन्।
अहिं चिदुग्र प्रयुतं शयानं जघन्वाँ इन्द्र तविषीमधत्थाः ॥२॥
त्वं चिदेषां स्वधया मदन्तं मिहो नपातं सुवृधं तमोगाम्॥
वृषप्रभर्मा दानवस्य भामं वज्रेण वज्री निजघान शुष्णम्॥४॥
त्वं चिदस्य क्रतुभिर्निषत्तममर्मणो विददिदस्य मर्म।
यदीं सुक्षत्र प्रभृता मदस्य युयुत्सन्तं तमसि हर्म्ये धाः॥५॥
त्वं चिदित्था कत्पयं शयानमसूर्ये तमसि वावृधानम्।
तं चिन्मन्दानो वृषभः सुतस्योच्चैरिन्द्रो अपगूर्या जघान॥६॥
त्वं चिदर्णं मधुपं शयानमसिन्वं वव्रं मह्याददुग्रः।
अपादमत्रं महता वधेन नि दुर्योण आवृणङ्मृध्रवाचम्" ॥८॥

## अत्रिपुत्र गातु द्वारा इन्द्राभिनन्दन

५/३२ हे इन्द्र! तूने दानवों का संहार करके मेघों को विदीर्ण करके जल की वृष्टि की। तूने अन्दर से क्षुब्ध होते हुए जलों को मुक्ति प्रदान की। तूने बड़े-बड़े पर्वतों को तोड़ कर जल की धाराओं को प्रवाहित किया॥१॥

हे इन्द्र! तुमने वर्षाकालीन अन्दर ही अन्दर क्षुब्ध हो रहे मेघों को तोड़ा। हे वज्रिन्! तुमने मेघ असुर के बल का मर्दन करके सोये हुए बलवान् अहि असुर का वध किया। हे वीर! तूने बल को धारण किया है॥२॥

वर्षा करने वाले मेघ को गिराने वाले और वज्र धारणकर्ता इन्द्र ने प्राणियों के जल को बांध कर रखने वाले, प्राणियों के द्वारा ही दिये गये अन्न से पुष्ट होने वाले शुष्ण दानव के तेज को नष्ट करके उसका वध किया॥४॥

हे इन्द्र! जिस वृत्रासुर के रहस्य को कोई भी नहीं समझ सका उस वृत्रासुर को मर्म तुमने जाना है। हे वीर्यवान् इन्द्र! सोम के आनन्द से मस्त होते हुए तूने वृत्रासुर को अन्धकारपूर्ण स्थान पर बन्दी बना लिया॥५॥

बलवान् इन्द्र ने सोम से तृप्त होकर वज्र को उठाकर (प्रहार करते हुए) वृत्र को मारा, जो अन्धकारपूर्ण स्थान पर, सुखदायक जलों को रोक कर सो रहा था।।६॥

वीर इन्द्र ने उस वृत्रासुर का वध किया, जो असत्य भाषण करता था, सोमपान करके शयन करता था, पैरों के न होने पर भी वह आक्रमण करता था, शत्रुओं को परास्त करता था, और सबको आवृत कर देता था, ऐसे असुर को इन्द्र ने पकड़ कर वज्र से मार दिया॥८॥

## संवरणः प्राजापत्योऽभिनन्दयति।

ऋ.५।३३ "पुरू यत्तं इन्द्र सन्त्युक्था गवे चकर्थोर्वरासु युध्यन्।
ततक्षे सूर्याय चिदोकसि स्वे वृषा समत्सु दासस्य नाम चित्" ॥४॥

**ऋ.५ ।३४ "न पञ्चभिर्दशभिर्वष्ट्यारभं नासुन्वता सचते पुष्यता चन।**
**जिनाति वेदमुया हन्ति वा धुनिरा देवयुं भजति गोमति व्रजे ।।५ ।।**
**वित्वक्षणः समृतौ चक्रमासजोऽसुन्वतो विषुणः सुन्वतो वृधः।**
**इन्द्रो विश्वस्य दमिता विभीषणो यथावशं नयति दासमार्यः" ।।६ ।।**

## प्रजापति के पुत्र संवरण द्वारा इन्द्र का अभिनन्दन

"हे इन्द्र ! तेरे स्तुति-सूक्तों में तेरा वर्णन करते हुए कहा गया है कि तूने भूमि को उपजाऊ बनाने के लिए जल को मुक्त मूकिया, सूर्य को द्यौः में स्थापित किया तथा युद्ध में दास असुर का नामो निशान भी मिटा दिया ।।४ ।।. (५ ।३३ ।४)

"यह इन्द्र बलशाली है। यह पांच अथवा दस शत्रुओं के साथ भी युद्ध करते हुए सहायता की इच्छा नहीं करता है। यह धनवान् होते हुए भी सोमयाग न करने वाले से मित्रता नहीं करता है। शत्रुओं को कंपाने वाला यह इन्द्र यज्ञ न करने वाले को जीतता है, उसे मारता है और देवभक्त को उत्तम गायों से युक्त करता है ।। (५ ।३४ ।५)

युद्ध में अत्यन्त पराक्रमी और रथ पर ठीक से चक्र संयोजन करने वाला, सोमयाग न करने वाले का तिरस्कार करने वाला, सोम यजन करने वाले की उन्नति करने वाला, सम्पूर्ण विश्व का दमन करने वाला, शत्रुओं के लिए भयंकर तथा श्रेष्ठ इन्द्र समस्त शत्रुओं को अपने वश में करता है ।।५ ।३४ ।६ ।।

## विमद ऐन्द्रः प्राजापत्यो वा वसुकृद् वासुक्रो वाऽभिनन्दयति।

**ऋ.१०/२२ "आ न इन्द्र पृक्षसेऽस्माकं ब्रह्मोद्यतम्।**
**तत्त्वा याचामहेऽवः शुष्णं यद्धन्नामानुषम् ।।७ ।।**
**अकर्मा दस्युरभि नो अमन्तुरन्यव्रतो अमानुषः।**
**त्वं तस्या मित्रहन्वधर्दासस्य दम्भय ।।८ ।।**
**मक्षू ता त इन्द्र दानाप्नस आक्षाणे शूर वज्रिवः।**
**यद्ध शुष्णस्य दम्भयो जातं विश्वं सयावभिः ।।११ ।**
**अहस्ता यदपदी वर्धत क्षाः शचीभिर्वेद्यानाम्।**
**शुष्णं परि प्रदक्षिणिद्विश्वायवे नि शिश्नथः" ।।१४ ।।**

## ऐन्द्र अथवा प्राजापत्य विमद अथवा वसुकृद् अथवा वासुक्र द्वारा इन्द्र का अभिनन्दन

ऋग्वेद के १०/२२ में इन्द्र का अभिनन्दन करते हुए कहते हैं- "हे देव इन्द्र ! सब तरह से हमारी रक्षा करो। हम अपनी स्तुतियाँ और यज्ञ की हवि-सामग्री तुम्हारे लिए ही देते हैं। हम तुझसे अलौकिक बल की तथा संरक्षण की याचना करते हैं, जिस बल से तूने शुष्ण असुर का वध किया है ।।७ ।।

हे. अरिनाशक इन्द्र ! जो असुर कर्म न करने वाले, सबका अपमान करने वाले, यज्ञ कर्म से रहित, आसुरी वृत्ति से परिपूर्ण हैं वे हमारे चारों ओर छाये हुऐ हैं, तू उनको दण्ड देते हुए नष्ट कर ॥८॥

हे बलवान् इन्द्र ! तूने जिस विश्वास के साथ मरुतों के संग रह कर शुष्ण असुर के सारे वंश का नाश किया है तथा युद्ध क्षेत्र में भी कृपा एवं दान से युक्त तेरे वे समस्त कर्म शीघ्रता से सक्रिय हुए हैं ॥११॥

यह पृथ्वी बिना हाथ-पैर की होते हुए भी विद्वानों की यज्ञ क्रियायों द्वारा वृद्धि को प्राप्त होती है तथा सम्पूर्ण विश्व का कल्याण करने के लिए चारों ओर से प्रशिक्षण करती है, इसी कल्याण की कामना से तुम दुष्ट शुष्ण का वध करते हो।" ॥१४॥

## वसुक्रोऽभिनन्दयति।

**ऋ.१०।२९ "प्र ते अस्या उषसः प्रापरस्या नृतौ स्याम नृतमस्य नृणाम्।**
**अनु त्रिशोकः शतमावहन्नृन्कुत्सेन रतो यो असत्ससवान्" ॥२॥**

## वसुक्र द्वारा अभिनन्दन

"हे इन्द्र ! तू मनुष्यों में श्रेष्ठ है, हम प्रतिदिन उषाकाल में तेरी स्तुति करके उत्तम बनें। हे इन्द्र ! तुम्हारी स्तुति करके त्रिशोक ऋषि ने तुमसे सौ मनुष्यो की सहायता प्राप्त की। तेरी कृपा से ही कुत्स ऋषि ने रथ प्राप्त किया था॥" (१०/२९/२)

## अष्टादंष्ट्रो वैरूपो महयति।

**ऋ.१०।१११ "इन्द्रो दिवः प्रतिमानं पृथिव्या विश्वा वेद सवना हन्ति शुष्णम्।**
**महीं चिद्यामातनोत्सूर्य्येण चास्कम्भ चित्कम्भनेन स्कभीयान् ॥५॥**
**वज्रेण हि वृत्रहा वृत्रमस्तरदेवस्य शूशुवानस्य मायाः।**
**वि धृष्णो अत्र धृषता जघन्थाथाभवो मघवन्बाह्वोजाः ॥६॥**
**सचन्त यदुषसः सूर्येण चित्रामस्य केतवो रामविन्दन्।**
**आ यन्नक्षत्रं ददृशे दिवो न पुनर्यतो न किरद्धानु वेद ॥७॥**
**दूरं किल प्रथमा जग्मुरासामिन्द्रस्य याः प्रसवे सस्रुरापः।**
**क्व स्विदग्रं क्वं बुध्न आसामापो मध्यं क्व वो नूनमन्तः ॥८॥**
**सृजः सिन्धूँरहिना जग्रसानाँ आदिदेताः प्रविविज्रे जवेन।**
**मुमुक्षमाणा उत या मुमुच्रेऽधेदेता न रमन्ते नितिक्ताः ॥९॥**
**सध्रीचीः सिन्धुमुशतीरिवायन्त्सनाज्जार आरितः पूर्भिदासाम्।**
**अस्तमा ते पार्थिवा वसून्यस्मे जग्मूः सुनृता इन्द्र पूर्वीः" ॥१०॥**

# वैरूप अष्टादंष्ट्र द्वारा इन्द्र की महिमा का गान

ऋग्वेद के १०/१११ में ऋषि कहते हैं - "इन्द्र समस्त यज्ञों को जानता है, क्योंकि वह द्यावा-पृथ्वी का प्रतिनिधि है। इन्द्र शुष्ण ताप का वध करता है, वह विस्तारयुक्त पृथ्वी और आकाश को सूर्य से प्रकाशित करता है। इन्द्र पृथ्वी को अन्नादि और वृष्टि से सम्पन्न करता है। विश्व के संस्थापकों में से श्रेष्ठ संस्थापक इन्द्र के विश्व को ऊपर धारण कर रखा है ॥५ ॥

हे इन्द्र ! तुम वृत्रघ्न हो, तुमने वज्र से वृत्र का वध किया है। हे घर्षणशील इन्द्र ! उस वृत्र की अप्रकाशित, अज्ञानी और कुटिल माया को तुमने नष्ट कर दिया। हे इन्द्र ! तदनन्तर तुम्हारी भुजाओं का बल और अधिक पराक्रम से युक्त हुआ ॥६ ॥

सूर्य की किरणें और प्रातःकालीन उषा का परस्पर संयोग हुआ तो सूर्य की किरणों में अद्‌भुत वर्णों की शोभा छा गई। यह सत्य है कि दिन में जब सूर्य आकाश में ऊपर आ जाता है और नक्षत्र दिखाई नहीं देते हैं तो सूर्य की किरणों का कोई महत्व नहीं रहता ॥७ ॥

हे जल ! प्रारम्भ में जो जल इन्द्र की आज्ञा से बहाया गया था वही प्रारम्भिक अवस्था का जल बहुत दूर तक गया था, परन्तु शेष जल का आरम्भ, मध्य, मूल और अन्त भाग कहाँ है, इसका कोई पता नहीं है। (अर्थात् इन्द्र के आधार पर ही सब अपनी स्थिति धारण करते हैं अन्यथा नही) ॥८ ॥

हे इन्द्र ! जब वृत्रासुर द्वारा रोके गये जल को तुमने मुक्त करके प्रवाहित किया, तब वे बड़े वेग के साथ बहने लगे। जो जलधारा इन्द्र की इच्छा से मुक्त कर दी जाती है वह अत्यन्त तीव्र वेग के कारण एक स्थान पर ठहरती नहीं है तथा उनका जल भी शुद्ध हो जाता है ॥१९ ॥

एक साथ बहने वाली वेगवती जलधाराएँ समुद्र को उसी प्रकार प्राप्त करती हैं जैसे कामातुर स्त्री पति को प्राप्त करती हैं। शत्रु-संहारक, शत्रुओं के निवास-स्थान को नष्ट करने वाला इन्द्र सदैव ही जल का स्वामी रहा है। हे इन्द्र ! हमें इस पृथ्वी से विभिन्न प्रकार के ऐश्वर्य , सम्पत्ति, स्तोत्र और निवास प्रदान कर" ॥१० ॥

## शतप्रभेदनो वैरूपो महयति।

**ऋ.१० ।११३ "वृत्रेण यदहिना विभ्रदायुधा समस्थिथा युधये शंसमाविदे।**
**विश्वे ते अत्र मरुतः सह त्मनावर्धन्नुग्र महिमानमिन्द्रियम् ॥३ ॥**
**भूरि पक्षेभिर्वचनेभिऋक्वभिः सख्येभिः सख्यानि प्रवोचत।**
**इन्द्रो धुनिं च चुमुरिं च दम्भयञ्छ्रद्धामनस्या श्रृणुते दभीतये" ॥९ ॥**

## शतप्रभेदन वैरूप द्वारा इन्द्र की महिमा का गान

(१०/११३) - जब इन्द्र सामने से आते हुए वृत्र का युद्ध में अपने शस्त्रों को धारण किये हुए संग्राम करता है, तब उसकी यशोवृद्धि के लिए मैं स्तुति करता हूँ। हे घोर इन्द्र ! समस्त मरुद्गण तेरी सामर्थ्य को एक साथ बढ़ाते हैं ॥३ ॥

हे स्तुति करने वालो ! उत्कृष्ट ऋक् मन्त्रों से युक्त, मित्र के आनन्ददायी वचनों से, स्नेहमयी वाणी और मन से इन्द्र की स्तुति करो। इसी इन्द्र ने दभीति राजा की रक्षा के लिए धुनि और चुमुरि नामके असुरों का वध किया। ऐसा वह इन्द्र स्तोताओं की वाणी का श्रद्धापूर्वक श्रवण करता है ॥९ ॥

## बृहदुक्थो वामदेव्यः श्लाघते।

**ऋ.१० ।५४ "तां सु ते कीर्तिं मघवन्महित्वा यत्वा भीते रोदसी अह्वयेताम्।**
**प्रावो देवाँ आतिरो दासमोजः प्रजायै त्वस्यै यदशिक्ष इन्द्र ॥१ ॥**
**यदचरस्तन्वा वावृधानो बलानीन्द्र प्रबुवाणो जनेषु।**
**मायेत्सा ते यानि युद्धान्याहुर्नाद्य शत्रुं ननु पुरा विवित्से ॥२ ॥**
**क उ नु ते महिमनः समस्यास्मत्पूर्व ऋषयोऽन्तमापुः।**
**यन्मातरं च पितरं च साकमजनयथास्तन्वः स्वायाः" ॥३ ॥**

## बृहदुक्थ वामदेव्य द्वारा श्लाघा

ऋग्वेद के १०/५४ सूक्त में ऋषि कहते हैं "हे मघवन् ! तेरी उस महान् कीर्ति का हम सुन्दर ढंग से गान करते हैं, जिसमें तूने यशोवृद्धि के कार्य किये हैं। यह द्यावा-पृथ्वी भी राक्षसों से भयभीत होकर तुझे बुलाती है, तुमने देवों की रक्षा की, देवों का विनाश करने वाले असुरों का संहार किया और प्रजाओं का भय दूर किया, मैं तेरी उसी कीर्ति का गान करता हूँ ॥१ ॥

हे इन्द्र ! तू लोगों द्वारा स्तुति किये जाने पर अपने बल में वृद्धि करता है और अपने उस बलयुक्त पराक्रम का तू लोगों में वर्णन करते हुए विचरण करता है। यह कार्य तेरा मायापूर्ण है, असत्य है। प्राचीन ऋषि लोग तेरे द्वारा किये गये विभिन्न युद्धों का वर्णन करते हैं वे भी असत्य और मायापूर्ण है, क्योंकि वास्तव में न तेरा कोई शत्रु है और न ही पहले कोई शत्रु था ॥२ ॥

हे इन्द्र ! वास्तव में तेरी महिमा का गान करने में पूर्ण पारंगत कोई नहीं हुआ, क्योंकि तु इस द्यावापृथिवी को अपने शरीर से एक साथ उत्पन्न करता है ॥३ ॥

## वत्सः काण्वोऽभिनन्दयति।

ऋ.८।६ "विचिद्वत्रस्य दोधतो वज्रेण शतपर्वणा॥
शिरो बिभेदावृष्णिना॥६॥
नि शुष्ण इन्द्र धर्णसिं वज्रं जघन्थ दस्यवि।
वृषा ह्युग्र श्रृण्विषे"॥१४॥

## कण्व के पुत्र वत्स द्वारा इन्द्राभिनन्दन

८/६ सूक्त में वत्स कहते हैं - "इन्द्र ने अपने सैकड़ों धाराओं वाले श्रेष्ठ वज्र से कम्पन करने वाले वृत्रासुर का सिर काट दिया॥६॥

हे इन्द्र! तुमने धाराओं वाले वज्र से शुष्ण नाम के असुर का वध किया, जिससे हे वीर इन्द्र! तुम विश्व में प्रसिद्ध हुए॥४॥"

## श्रुष्टिगुः काण्वोऽभिनन्दयति।

ऋ.८।५१ "प्र यो ननक्षे अभ्योजसा क्रिविं वधैः शुष्णं निघोषयन्।
यदेदस्तम्भीत्प्रथयन्नमूं दिवमादिज्जनिष्ट पार्थिवः॥८॥
यस्यायं विश्व आर्यो दासः शेवधिपा अरिः।
तिरश्चिदर्ये रुशमे पवीरवि तुभ्येत्सो अज्यते रयिः"॥९॥

## कण्व-पुत्र श्रुष्टिगु द्वारा इन्द्राभिनन्दन

जब वृद्धि को प्राप्त होते हुए असुरों ने इस द्युलोक को रोक दिया, तब इन्द्र ने अपने घोर अस्त्रों से तथा अपने बल से चिल्लाते हुए शुष्ण नामक राक्षस को मारा और इस पृथिवी को मुक्त करके समस्त पदार्थों को उत्पन्न किया॥८॥

जिस इन्द्र के कोष की समस्त आर्य और दास रक्षा करते हैं, वह इन्द्र सबका स्वामी है। हे इन्द्र! तेरे कारण ही रूशम और पवीरू ऋषियों का गुप्त धन प्रकट हुआ॥९॥

## मेध्यः काण्वोऽभिष्टौति

ऋ.५।५३ "य आयुं कुत्समतिथिग्वमर्दयो वावृधानो दिवेदिवे।
तं त्वां वयं हर्य्यश्वं शतक्रतुं वाजयन्तो हवामहे"॥२॥

## कण्व पुत्र मेध्य द्वारा इन्द्राभिनन्दन

हे इन्द्र! तूने आयु, कुत्स, अतिथिग्व को प्रतिदिन बढ़ाते हुए ऊँचा उठाया है। हे इन्द्र। तू हरि नामके घोड़ों को रखता है, सैंकड़ों शुभ कर्म करता है, ऐसे तुझे शक्ति प्राप्त करने की इच्छा से हम बुलाते हैं॥२॥ (८/५३)

## गोषूक्त्यश्वसूक्तिनौ काण्वायनावभिनन्दयतः।

ऋ.८।१४ "अपां फेनेन नमुचेः शिर इन्द्रोदवर्तयः।
विश्वा यदजयः स्पृधः ॥१३॥
मायाभिरुत्सिसृप्सत इन्द्र द्यामारुरुक्षतः।
अवदस्यूँरधूनुथाः" ॥१४॥

## गोषूक्ति और अश्वसूक्ति नामक कण्व के पौत्रों द्वारा इन्द्राभिनन्दन

ऋग्वेद के ८/१४ में ऋषि स्तुति करते हैं - हे इन्द्र! तुमने सम्पूर्ण सेना को जीत कर पानी के झाग से नमुचि असुर का सिर काट दिया॥१३।

हे इन्द्र! तूने उन सभी राक्षसो को कम्पित कर दिया जो भी कुशलतापूर्वक द्युलोक चढ़ने की इच्छा रखते थे, जो सर्वत्र व्याप्त होने की इच्छा रखते थे॥१४॥"

## नोधा गौतमोऽभिनन्दयति

ऋ.१।६१ "अस्मा इदु त्यदनु दाय्येषामेको यद्वव्ने भूरेरीशानः।
प्रैतशं सूर्ये पस्पृधानं सौवश्व्ये सुष्विमावदिन्द्रः" ॥१५॥
ऋ.१।६३ "त्वं सत्य इन्द्र धृष्णुरेतान्त्वमृभुक्षा नर्यस्त्वं षाट्।
त्वं शुष्णं वृजने पृक्ष आणौ यूने कुत्साय द्युमते सचाहन्" ॥३॥

## नोधा गौतम द्वारा इन्द्र का अभिनन्दन

"यह इन्द्र अकेला ही बहु धन का स्वामी है। यह इन्द्र जिस स्तोत्र को सुनने की इच्छा करता है, स्तोता उसी स्तोत्र का गान करते हैं। इन्द्र ने स्वश्व के पुत्र सूर्य के साथ युद्ध करते हुए सोमयाजी एतश की रक्षा की॥१५॥"

"हे इन्द्र! तुम सत्य के पालक हो, शत्रु संहारक हो, ऋभुओं के स्वामी हो, नेता हो, तुम सहनशील हो, तुमने शत्रुसंहारक घोर युद्ध में तेजस्वी, युवक कुत्स की रक्षा करते हुए शुष्ण का वध किया॥" (१/६३/३)

## अङ्ग औरवोऽभिनन्दयति १-६।

ऋ.१०।१३८ "तव त्य इन्द्र सख्येषु वह्नय ऋतं मन्वाना व्यदर्दिरुर्वलम्।
यत्रा दशस्यन्नुषसो रिणन्नपः कुत्साय मन्मन्नह्यश्च दंसयः ॥१॥
अवासृजः प्रश्वः श्वञ्चयो गिरीनुदाज उस्रा अपिबो मधु प्रियम्।
अवर्धयो वनिनो अस्य दंससा शुशोच सूर्य्य ऋतजातया गिरा ॥२॥

वि सूर्यो मध्ये अमुचद्रथं दिवो विदद्दासाय प्रतिमानमार्यः।
दृळहानि पिप्रोरसुरस्य मायिन इन्द्रो व्यास्यच्चकृवाँ ऋजिश्वना ॥३॥
अनाधृष्टानि धृषितो व्यास्यन्निधीँरदेवाँ अमृणदयास्यः।
मासेव सूर्यो वसु पुर्यमाददे गृणानः शत्रूँरश्रृणाद्विरुक्मता ॥४॥
अयुद्धसेनो विभ्वा विभिन्दता दाशद्वृत्रहा तुज्यानि तेजते।
इन्द्रस्य वज्रादिबिभेदभिश्नथः प्राक्रामच्छुन्ध्यूरजहादुषा अनः ॥५॥
एता त्या ते श्रुत्यानि केवला यदेक एकमकृणोरयज्ञम्।
मासां विधानमदधा अधि द्यवि त्वया विभिन्नं भरति प्रधिं
पिता" ॥६॥

## उरुपुत्र अङ्ग द्वारा ऋग्वेद के १०/१३८ में इन्द्राभिनन्दन

तेरी मित्रता में रहते हुए, हवि प्रदान करते हुए तेरे भक्तों ने बल नामक राक्षस का वध किया। हे इन्द्र! तेरी कृपा से तेरे रुचिकर स्तोत्रों का गान करते हुए कुत्स को उषाकाल का दर्शन कराया और जल को मुक्त किया, तब वृत्र द्वारा किये गये समस्त कर्म स्वयमेव नष्ट हो गये ॥१॥

हे इन्द्र! तूने मेघ से जल का निर्माण किया है। पर्वतों को प्रेरित किया। बलासुर द्वारा गुहा में छिपाई हुई गायों को मुक्त किया। तत्पश्चात् सोम का पान किया। वनों के वृक्ष वृष्टि से संवर्धित किये। स्तुति करने योग्य वेदवाणी से यज्ञ के समय जब इन्द्र की स्तुति की गई तब इन्द्र के कर्मों से सूर्य तेजस्वी हुआ ॥२॥

इन्द्र ने दासों का तिरस्कार किया, तब सूर्य ने द्युलोक में अपने रथ को चला दिया। इन्द्र ने राजर्षि ऋजिश्वा के साथ मित्रता करते हुए मायावी पिप्रु नाम के असुर की विशाल दुर्गम नगरियों को नष्ट कर दिया ॥३॥

अजेय इन्द्र ने शत्रुओं की सेना को नष्ट किया। अयास्य ऋषि के द्वारा स्तुति किये जाने पर इन्द्र ने बलशाली, ऐश्वर्यवान् असुरों का संहार किया। जैसे सूर्य निश्चित मास में भूमि का जल ले जाता है, उसी तरह इन्द्र शत्रु के नगरों का धन प्राप्त कर लेता है। तू शत्रुओं का प्रदीप्त और देदीप्यमान वज्र से संहार करता है ॥४॥

यह इन्द्र बिना सेना को लड़ाए ही शत्रुओं को वज्र से मारता है, वृत्रासुर का वध करता है, प्रियजनों को धन देता है। इस इन्द्र के वज्र से असुर भयभीत होते हैं। इन्द्र सूर्य को प्रकाशित करता है, तब उषा अपना रथ चलाती है ॥५॥

हे इन्द्र! तूने यज्ञों में बाधा पहुंचाने वालों का वध किया है, तेरे वीरतापूर्ण कर्म सुनने योग्य है। महिनों को बनाने वाला सूर्य तुम्हारे द्वारा द्युलोक में स्थापित किया गया और यह द्युलोक तेरे द्वारा ही बलयुक्त होकर चक्र को धारण करता है" ॥६॥

## कृतज्ञतास्तुतिसूक्तपाठानन्तरमिन्द्रेण कुत्साय वेशभूषापरिच्छदैः स्वसारूप्यं सोमसग्धिश्चेति द्विविधं प्रीतिप्रसाददानम्।

इत्थं तत्र सभायां सभासदै राजभिर्मनुष्यैश्च।
ऋषिभिर्देवैरसुरैः सभाजितोऽभून्महोत्सवे स्वाराट्॥१॥
आराध्याः संभ्रान्ताः संभावितसज्जनाश्च समवेत्य।
सप्रश्रयं सविनयं न्यवेदयन् श्रद्धया कृतज्ञत्वम्॥२॥
तेषां कृतज्ञतां तामभिनन्द्य हृदा स्वभक्तिभाववम्।
प्रतिपद्य च सौहार्द्यं दर्शयितुं समयमनुमेने॥३॥
महसि च मघवानिन्द्रो महसा परितोषितः प्रददौ।
कुत्साय तत्र तस्मै सोमे सग्धि स्वसारूप्यम्॥४॥
तत इन्द्राकुत्साभ्यां सहभावं सह च सोमसवम्।
भूषावेषपरिच्छदपरिचरसाम्यं च तत्राभूत्॥५॥
इत्थं महःसमाप्तौ विश्वामित्रः सभां विसर्जयितुम्।
मन्त्रं विसर्जनीयं प्रत्युत्थायेन्द्रमन्वाख्यत्॥६॥
इन्द्रेण कृतो यावानुपकारस्तं पुनः प्रथयन्।
स्वीयां कृतज्ञतां च प्रदर्शयन्निन्द्रमस्तौत्सः॥७॥

## कृतज्ञतासूचक स्तुति-सूक्तों के पाठ के अनन्तर इन्द्र द्वारा कुत्स को वेशभूषा और अलंकारों सहित अपने समान रूप तथा सोमपान का भागी बना कर प्रीति प्रसाद का द्विविध दान

इस प्रकार उस महोत्सव में सभी में बैठे हुए राजाओं, देवों, मनुष्यों, ऋषियों और असुरों द्वारा उस स्वाराट् इन्द्र का सम्मान किया गया॥१॥

पूजनीय, सम्भ्रान्त, सम्माननीय और सज्जन लोगों ने एकत्रित होकर शिष्टतापूर्वक, विनीत होकर तथा श्रद्धायुक्त होकर इन्द्र के प्रति कृतज्ञता प्रदर्शित की॥२॥

इन सबकी उस कृतज्ञता का हृदय से अभिनन्दन करके तथा अपने भक्ति-भाव को प्रकट करके उनके प्रति सौहार्द प्रदर्शित करने की प्रतिज्ञा की॥३॥

उस उत्सव में ऐश्वर्यवान् इन्द्र ने इस महोत्सव से सन्तुष्ट होकर उस ऋषि कुत्स को सोम-पान में सहभागिता तथा अपने समान स्वरूप प्रदान किया॥४॥

इस प्रकार इन्द्र और कुत्स की एक समान रूप, सोम-पान में सहभागिता, वेशभूषा-अलंकरण-सेवकगण इत्यादि सहित सभी प्रकार से समानरूपता हो गई॥५॥

इस प्रकार उत्सव के समाप्त होने पर विश्वामित्र ऋषि ने इन्द्र के पश्चात् उठ कर विसर्जनीय मन्त्र का उच्चारण किया ॥६ ॥

उन विश्वामित्र ऋषि ने इन्द्र के द्वारा किये गये जो उपकार थे, उनका पुनः वर्णन करते हुए, अपनी कृतज्ञता प्रकट करते हुए इन्द्र की स्तुति की ॥७ ॥

# देवेन्द्रस्य पुनः स्वर्गे गमनम्।

## सभाविसर्जनावसरे जिगमिषुं देवेन्द्रं प्रति विश्वामित्रस्य प्रणयवचनम्।

ऋ.३/५३ "इन्द्रापर्वता बृहता रथेन वामीरिष आ वहतं सुवीराः।
वीतं हव्यान्यध्वरेषु देवा वर्धेथां गीर्भिरिळया मदन्ता ॥१ ॥
तिष्ठा सु कं मघवन्मा परागाः सोमस्य नु त्वा सुषुतस्य यक्षि।
पितुर्न पुत्रः सिचमा रभे त इन्द्र स्वादिष्ठया गिरा शचीवः ॥२ ॥
शंसावाध्वर्यो प्रति मे गृणीहीन्द्राय वाहः कृणवाव जुष्टम्।
एदं बर्हिर्यजमानस्य सीदाऽथा च भूदुक्थमिन्द्राय शस्तम् ॥३ ॥
जायेदस्तं मघवन्त्सेदु योनिस्तदित्त्वा युक्ता हरयो वहन्तु।
यदा कदा च सुनवाम सोममग्निष्ट्वा दूतो धन्वात्यच्छ ॥४ ॥
परा याहि मघवन्ना च याहीन्द्र भ्रातरुभयत्रा ते अर्थम्।
यत्रा रथस्य बृहतो निधानं विमोचनं वाजिनो रासभस्य ॥५ ॥
अपाः सोममस्तमिन्द्र प्रयाहि कल्याणीर्जाया सुरणं गृहे ते।
यत्रा रथस्य बृहतो निधानं विमोचनं वाजिनो दक्षिणावत् ॥६ ॥
इमे भोजा अङ्गिरसो विरूपा दिवस्पुत्रासो असुरस्य वीराः।
विश्वामित्राय ददतो मघानि सहस्रसावे प्रतिरन्त आयुः ॥७ ॥
रूपं रूपं मघवा बोभवीति मायाः कृण्वानस्तन्वं परि स्वाम्।
त्रिर्यद्दिवः परि मुहूर्तमागात्स्वैर्मन्त्रैरनृतुपा ऋतावा ॥८ ॥
महाँ ऋषिर्देवजा देवजूतोऽस्तभ्नात् सिन्धुमर्णवं नृचक्षाः।
विश्वामित्रो यदवहत्सुदासमप्रियायत कुशिकेभिरिन्द्रः ॥९ ॥
हंसा इव कृणुथ श्लोकमद्रिभिर्मदन्तो गीर्भिरध्वरे सुते सचा।
देवेभिर्विप्रा ऋषयो नृचक्षसो वि पिबध्वं कुशिकाः सोम्य मधु ॥१० ॥
उप प्रेत कुशिकाश्चेतयध्वमश्वं राये प्रमुञ्चता सुदासः।

राजा वृत्रं जङ्घनत्प्रागपागुदगथा यजाते वर आ पृथिव्याः ॥११॥
य इमे रोदसी उभे अहमिन्द्रमतुष्टवम्।
विश्वामित्रस्य रक्षति ब्रह्मेदं भारतं जनम् ॥१२॥
विश्वामित्रा अरासत ब्रह्मेन्द्राय वज्रिणे।
करदिन्नः सुराधसः ॥१३॥
किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मम्"।
आ नो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन्नन्धया नः" ॥१४॥

## देवराज इन्द्र का पुनः स्वर्ग-गमन

### सभाविसर्जन के अवसर पर जाने के इच्छुक देवराज को कहे गये विश्वामित्र के प्रार्थना-वचन

ऋग्वेद के तृतीय काण्ड के ५३वें सूक्त में देवराज इन्द्र को विश्वामित्र द्वारा प्रार्थना की गई है। विश्वामित्र कहते हैं-"हे इन्द्र और पर्वत! तुम अपने विशाल रथ के द्वारा आ कर उत्तम सन्तान तथा बहुत मात्रा में इच्छित धन प्रदान करो। हे देवों! तुम हमारी स्तुतियों से वृद्धि को प्राप्त होओ और हमारी आहुतियों को स्वीकार करो। हम तुम्हें जो अन्न प्रदान करते हैं तुम उससे आनन्द प्रात करो ॥१॥

हे मघवन् इन्द्र! तुम हमारे पास आकर बैठो, हमसें दूर मत जाओ! मैं तुम्हारे लिए अच्छी तरह से सेवन किये गये सोम का यज्ञ करता हूँ। वे बलवान् इन्द्र! मैं आनन्ददायी प्रार्थना करके तेरा उसी तरह आश्रय लेता हूँ जिस तरह एक पुत्र अपने पिता का सहारा लेता है ॥२॥

हे अध्वर्यो! तू मुझे (ऋत्विग् को) उत्साहित कर, तत्पश्चात् हम दोनों (ऋत्विग् और अध्वर्यु इन्द्र की स्तुति करेंगे। तू यजमान के इस आसन पर बैठ, जिससे हम दोनों इन्द्र के लिए प्रीतियुक्त और प्रशंसनीय स्तोत्रों का गान करें ॥३॥

हे धनवान् इन्द्र! पत्नी ही घर है, जो प्रमुख आश्रयस्थान है।अतः हे इन्द्र! तू अपने रथ में जुड़े हुए घोड़ों से उसी आश्रय स्थान पर जा। हमारे द्वारा तैयार किया गया सोम रस दूत के समान अग्नि तेरे पास पहुँचा देगा ॥४॥

हे मघवन्! हे भ्राता! तू हमारे पास रह अथवा हमसे दूर अपने निवासस्थान पर जा। दोनों जगह ही तेरी महत्ता है। अतः तू जहाँ भी जाये वहीं अपने रथ के हिनहिनाते हुए घोड़ों को खोल कर पूर्ण विश्राम कर ॥५॥

हे इन्द्र! तू सोम पान करके अपने निवास पर जा क्योंकि घर में प्रिय चाहने वाली और कल्याण करने वाली तेरी पत्नी तेरी प्रतीक्षा करती है। अतः वहाँ तुझे सुख की

प्राप्ति होगी। हे इन्द्र! तू जहाँ भी अपने रथ को रोकता है, वहीं अपने घोड़ों को खोल कर दक्षिणावत् होकर (दयालुता से) विश्राम कर॥६॥

तेजस्वी तथा वीर इन्द्र के पुत्रों ने तथा भोज, अंगिरस और विरूपों ने मुझ विश्वामित्र को अनेक प्रकार से धन प्रदान करके यज्ञ करने के लिए आयु में वृद्धि की॥७॥

यह ऐश्वर्यवान् इन्द्र अपनी मायामयी शक्ति से एक ही क्षण में द्युलोक से आ कर तीनों लोकों में व्याप्त हो जाता है। यह इन्द्र सोमपान करने वाला, ऋतु के अनुसार कर्मों का नियमन करने वाला अपना चमत्कारपूर्ण कर्म करता हुआ अनेक रूपों को धारण कर लेता है॥८॥

विश्व का हितचिन्तक, महान् देवों से उत्पन्न, देव-गुणों से युक्त और महान् है। उस विश्वामित्र ने जलपूर्ण नदी को रोका तथा सुदास के यज्ञ में जाकर कुशिकों के द्वारा इन्द्र के लिए स्नेह का स्थान निर्धारित कराया॥९॥

हे बुद्धिमान्, दूरदर्शी तथा मनुष्यों के शुभचिन्तक कुशिकों! यज्ञ में पत्थर से कूटकर सोम रस निकाल कर हंस के समान सुरीले तथा एक स्वर में एक ही स्तोत्र का उच्चारण करो और मधुर सोम रस का पान करो॥१०॥

हे कुशिकों! उत्साहित होकर पास आओ और ऐश्वर्यप्राप्ति हेतु सुदास के घोड़ों को खोल दो। तेजोमय इन्द्र ने आगे, पीछे और ऊपर चारों ओर से शत्रु का संहार किया है तथा वह शत्रु को मार कर पृथिवी के उत्तम स्थान पर बैठ कर यज्ञ करता है।।११॥

मैंने द्यावापृथिवी तथा इन्द्र की स्तुति की। मुझ विश्वामित्र द्वारा की गई यह स्तुति भरतवंशियों की उन्नति और रक्षा करती है॥१२॥

विश्व के मित्रों ने अर्थात् स्नेह करने वालों ने वज्रधारी इन्द्र के लिए स्तुतिपाठ की रचना की। अतः वह इन्द्र हमें उत्तम धन की प्राप्ति कराता है॥१३॥

हे मघवन्! कीकट (अनार्य) देशों में रहने वाली गायों से न तो इन्द्र को दुग्ध-लाभ होता है, न ही यज्ञ की अग्नि के लिए प्रदीप्त करने का ईधन प्राप्त होता है अतः उनसे कोई लाभ नहीं है। हे इन्द्र! तू सूदखोरों के धन को हमारे लिए लेकर आ, अनार्यों को हमारे लिए तू वश में कर"॥१४॥

## इन्द्राकुत्सयोर्वेषादिसाम्यकृतसारूप्ययोः स्वर्गाय सह प्रस्थानम्।

**कुत्सः सहानुगन्तुं मनो दधे शक्रसत्कृत्यै।**
**इन्द्रोपि तत्र कुत्सं सत्कर्तुं पथि पुरश्चक्रे॥१॥**
**इन्द्रसमानैर्मानैः कुत्सस्याभूत् पुरो यानम्।**
**तत्पश्चात् पथि शक्रः स्वपरिकरैर्यानमारेभे॥२॥**
**अस्ति सहस्त्रास्वीने पथि लोकः स्वर्ग इत्येवम्।**
**व्याचष्ट ऐतरेयः सहस्त्रमेतत्त्वनेकार्थम्॥३॥**
**इन्द्राकुत्सौ त्वश्वैस्त्रिभिर्दिनैर्जग्मतुः स्वर्गम्।**

सह च सहस्रं हरयः किञ्चित् पश्चात्तु मारुती सेना ॥४ ॥
अमरावत्यां देवाः श्रुत्वा वैकुण्ठमागमिष्यन्तम् ।
पुरतः कृत्वेन्द्राणीमुपह्वरे स्वागतायागुः ॥५ ॥
अभ्यायान्तौ दूराद् दृष्ट्वेन्द्रौ द्वौ शचीन्द्राणी ।
चकितातिविस्मिता सा प्रोषितपत्यर्चने च संमुमुहे ॥६ ॥
मरुदुद्बोधितवृत्ता स्वामिनमवधार्य्य पूजयामास ।
सारूप्यदानविषये संवादं केन्द्रतश्चक्रे ॥७ ॥

## वेशभूषादि से समान स्वरूप वाले इन्द्र और कुत्स का स्वर्ग के लिए सहगमन

कुत्स ने इन्द्र का सत्कार करने के लिए इन्द्र के साथ जाने का निश्चय किया। इन्द्र ने भी कुत्स का सत्कार करने के लिए मार्ग में कुत्स को आगे कर लिया (स्वयं ने कुत्स का अनुगमन किया) ॥१ ॥

इन्द्र के समान सम्मान प्राप्त करने से कुत्स की सवारी आगे-आगे चली तथा उसके पीछे अपने परिकरों सहित इन्द्र ने चलना प्रारम्भ किया ॥२ ॥

ऐतरेय ब्राह्मण में कहा गया है कि सहस्रास्वीन मार्ग पर स्वर्ग लोक है। यह सहस्र शब्द अनेक अर्थों का वाचक है ॥३ ॥

इन्द्र और कुत्स तीन दिन में अश्वों के द्वारा स्वर्ग में पहुँचे, जिनके साथ में हजार घोड़े थे और कुछ पीछे दैवी सेना थी ॥४ ॥

अमरावती में देवों ने वैकुण्ठ-इन्द्र को आते हुए सुनकर, इन्द्राणी को आगे करके निजी स्थान (एकान्त-स्थान) में स्वागत के लिए गए ॥५ ॥

दूर से आते हुए दो इन्द्रों को देखकर इन्द्राणी शची अत्यन्त आश्चर्यचकित एवं विस्मित होती हुई प्रवासी पति के सम्मान में मोहित हो गई ॥६ ॥

देवों के द्वारा स्वामी का वृतान्त जानकर स्वामी का निश्चय करके इन्द्राणी ने पूजा की और सारूप्य दान के विषय में इन्द्र से वार्तालाप किया ॥७ ॥

## स्वर्गे विजयाभिनन्दनीयः प्रमहः ।

**अमरावत्यामिन्द्रः स्वीयं सदनं समासाद्य ।**
**सत्कारदानमानैः कुत्सं संभावयामास ॥१ ॥**
**मानुषलोके कुत्सप्रस्थानं दस्युसंहारम् ।**
**इन्द्रविजयमुपलक्ष्य च महोत्सवः कल्पितो देवैः ॥२ ॥**
**तत्र बृहस्पतिनुन्नः सप्तगुरिन्द्रं महोत्सवे प्रमुखः ।**

विजयितमभितुष्टाव प्रोच्य विजयसिद्धमेतदुत्कर्षम् ।।३ ।।
आर्य्यं वर्णं दस्युभिरुपद्रुतं यो द्रुतं समाश्वास्य।
उदजापयत् तमिन्द्रं सप्तगुमुखतः सुरास्तदाऽभ्यगृणन् ।।४ ।।

## स्वर्ग में विजयाभिनन्दन का उत्सव

अमरावती में इन्द्र ने अपने भवन में पहुंच कर सत्कार, दान और मान से कुत्स का सम्मान किया ।।१ ।।

मनुष्यलोक में कुत्स के प्रस्थान, दस्युओं के संहार और इन्द्र की विजय को लक्ष्य करके देवों के द्वारा इस महोत्सव का आयोजन किया गया ।।२ ।।

वहाँ बृहस्पति की प्रेरणा से महोत्सव में प्रधानतः सप्तगु ने विजय-प्राप्त इन्द्र की विजय से सिद्ध इस उत्कर्ष की प्रशंसा की ।।३ ।।

दस्युओं के द्वारा उपद्रवग्रस्त होने पर आर्य वर्ण को जिस इन्द्र ने शीघ्र ही आश्वासन देकर उनका उद्धार किया। इस प्रकार उस इन्द्र को देवताओं ने सप्तगु के माध्यम से सम्मानित किया ।।४ ।।

## तत्रेन्द्रस्तुतिविधानाय नृमेधपुरुमेधौ देवेन्द्रसातेयं मरुद्गणममभिलक्ष्य मन्त्रयतः।

ऋ.८/८६ "बृहदिन्द्राय गायत मरुतो वृत्रहन्तमम्।
येन ज्योतिरजनयन्नृतावृधो देवं देवाय जागृवि ।।१ ।।
अपाधमदभिशस्तीरशस्तिहाथेन्द्रो द्युम्न्याभवत्।
देवास्त इन्द्र सख्याय येमिरे बृहद्भानो मरुद्गण ।।२ ।।
प्र व इन्द्राय बृहते मरुतो ब्रह्मार्चत।
वृत्रं हनति वृत्रहा शतक्रतुर्वज्रेण शतपर्वणा ।।३ ।।
अभि प्र भर धृषता धृषन्मनः श्रवश्चित्ते असद् बृहत्।
अर्षन्त्वापो जवसा वि मातरो हनो वृत्रं जया स्वः" ।।४ ।।

## वहाँ इन्द्र की स्तुति करने के लिए नृमेध और पुरुषमेध ने देवेन्द्र के साथ देवों को अभिलक्षित करके मन्त्रोच्चार किया।

ऋग्वेद के मण्डल ८, सूक्त ८९ में नृमेध और पुरुषमेध मरुद्गणको लक्ष्य करके देवेन्द्र के लिए कहते हैं—

"हे यज्ञ के वृद्धिकर्ता मरुद्गण ! जिस नियम से तुमने दिव्य तेज पूर्ण ज्योति को उत्पन्न किया है, उस बृहत् नामक छन्द को वृत्रहन्ता इन्द्र के लिए उच्चारित करो ॥१ ॥

हे अत्यन्त ज्योतिःसम्पन्न मरुद्गण ! इन्द्र ने उन समस्त हिंसक शत्रुओं को मारा है, जो भी बुरा कार्य करता है, इन्द्र उन सब को मारता है। उसी कार्य को करके इन्द्र तेजस्वी हुआ है। इन्द्र की मित्रता के लिए सब इन्द्र के पास जाते हैं ॥२ ॥

हे मरुद्गण ! वह इन्द्र तीक्ष्ण धार वाले वज्र से वृत्र को मारने वाला है, सैकड़ों शुभ कर्म करने वाला है तथा शत्रुओं को मारने वाला है। तुम उस इन्द्र के लिए स्तोत्रगान करो ॥३ ॥

हे सुदृढ़ मन वाले इन्द्र ! अपने दृढ़ तथा शक्तिशाली मन से हमें वह उत्तम अन्न प्रदान कर, भरपूर मात्रा में प्रदान कर जो तेरा ही है। हे इन्द्र ! तू वत्र को मार कर जलों को जीत और मातास्वरूप वेगवती नदियों को वेग से बहने के लिए प्रेरित कर ॥४ ॥

## अथैतौ नृमेधपुरुमेधौ देवेन्द्रमेवाभिलक्ष्य महयतः स्म।

**"यज्जायथा अपूर्व्य मघन्वृत्रहत्याय।**
**तत्पृथिवीमप्रथयस्तदस्तभ्ना उत द्याम् ॥५ ॥**
**तत्ते यज्ञो अजायत तदर्क उत हस्कृतिः।**
**तद्विश्वमभिभूरसि यज्जातं यच्च जन्त्वम् ॥६ ॥**
**आमासु पक्वमैरय आ सूर्यं रोहयो देवि।**
**धर्मं न सामन्तपता सुवृक्तिभिर्जुष्टं गिर्वणसे बृहत्" ॥७ ॥**

## तदनन्तर देवराज इन्द्र को लक्ष्य करके नृमेध और पुरुमेध ने इन्द्र की महिमा का गान किया

हे ऐश्वर्यशाली, अपूर्व कार्य करने वाले इन्द्र ! तूने जिस शक्ति से वृत्र का वध किया उसी शक्ति से तूने पृथिवी का विस्तार किया और उसी शक्ति से द्यौः को स्थिर किया ॥५ ॥

हे इन्द्र ! सर्वत्र सर्वस्व तेरा ही है। जो यज्ञ हुए, मन्त्रोचारण किये गये, वषट्कार (स्वाहा) भी तेरे लिए ही हुए हैं। संसार में जो कुछ उत्पन्न हुआ है, वह सब भी तेरा ही है ॥६ ॥

हे इन्द्र ! गायों में परिपक्व दुग्ध इन्द्र की महिमा से ही स्थापित हुआ है, सूर्य को द्युलोक में स्थापित किया। हे मनुष्यों ! तुम इन्द्र को उत्तम स्तोत्रों से उसी प्रकार बढ़ाओ, जिस प्रकार सामों से प्रवर्ग्य यज्ञ को बढ़ाते हैं। पूज्य इन्द्र के लिए प्रिय बृहत् साम का गान करो" ॥७ ॥

## पुनरेतौ नृमेधपुरुमेधौ देवेन्द्रमभिवर्णयतः ।

ऋ.८/९० "आ नो विश्वासु हव्य इन्द्रः समत्सु भूषतु ।
उप ब्रह्माणि सवनानि वृत्रहा परमज्या ऋचीषमः ॥१ ॥
त्वं दाता प्रथमो राधसामस्यसि सत्य ईशानकृत् ।
तुविद्युम्नस्य युज्या वृणीमहे पुत्रस्य शवसो महः ॥२ ॥
ब्रह्मा त इन्द्र गिर्वणः क्रियन्ते अनतिद्भुता ।
इमा जुषस्व हर्यश्व योजनेन्द्र या ते अमन्महि ॥३ ॥
त्वं हि सत्यो मघन्ननानतो वृत्रा भूरि न्यृञ्जसे ।
स त्वं शविष्ठ वज्रहस्त दाशुषेऽर्वाञ्चं रयिमा कृधि ॥४ ॥
त्वमिन्द्र यशा अस्यृजीषी शवसस्पते ।
त्वं वृत्राणि हंस्यप्रतीन्येक इदनुत्ता चर्षणीधृता ॥५ ॥
तमु त्वा नूनमसुर प्रचेतसं राधो भागमिवेमहे ।
महीव कृत्तिः शरणा त इन्द्र प्र ते सुम्ना नो अश्नवन्" ॥६ ॥

## नृमेध और पुरुमेध द्वारा पुनः देवेन्द्र की महिमा का गान

"यह इन्द्र वृत्र को मारने वाला है, सोम पीने वालों में श्रेष्ठ, धनुष की उत्तम प्रत्यंचा रखता है, युद्धो में लोग जिसे सहायता के लिए बुलाते हैं, ऐसा वह इन्द्र हमारे मन्त्रों और यज्ञो को अलंकृत करे ॥१ ॥

हे इन्द्र ! तू श्रेष्ठ दान दाता है, तू सत्य पर सब प्रकार से शासन करता है। हम बल-पुत्र, अत्यन्त तेजस्वी इन्द्र के देने योग्य धन की कामना करते हैं ॥२ ॥

हे श्रेष्ठ घोड़ों वाले इन्द्र ! हम ध्यान से तेरे वास्तविक स्वरूप का चित्रण करने वाले जिन स्तोत्रों को बोलते हैं तथा जिन स्तोत्रों को बोलने के लिए दूसरों को प्रेरित करते हैं, उन स्तोत्रों को तू स्वीकार कर ॥३ ॥

हे मघवन् ! तू अनेक वृत्रों (मेघों) को मारता है, तू सत्यवक्ता है, तू दूसरे के सामने झुकता नहीं है हे वृत्रध्न ! बलवान् इन्द्र ! तू दाना-दाता के लिए अधिक धन प्रदान कर ॥४ ॥

हे बलों के स्वामी ! तू यशस्वी है, सोमपायी है, तू अपने घोर वज्र से अकेला ही मनुष्यों की उन वृत्रों से रक्षा करता है, जिनको मनुष्य जीत नहीं सकते, जो अजेय हैं ॥५ ॥

हे बुद्धिमान् इन्द्र ! हम तेरा सुख भोगना चाहते हैं। जिस प्रकार एक पुत्र अपने पिता से धन मांगता है उसी प्रकार हम इन्द्र से धन मांगते है। हे इन्द्र ! तू प्राण रक्षक है, तेरा आश्रय हमारे लिए एक कवच के समान है हम तुझसे धन मांगते हैं" ॥६ ॥(८/९०/१-६)

## तिरश्चीर्द्युतानो वा मारुतोऽभिनन्दयति।

ऋ.८/९६ "अव द्रप्सो अंशुमतीमतिष्ठदियानः कृष्णो दशभिः सहस्रैः।
आवत्तमिन्द्रः शच्या धमन्तमप स्नेहितीर्नृमणा अधत्त॥१३॥
द्रप्समपश्यं विषुणे चरन्तमुपह्वरे नद्यो अंशुमत्याः।
नभो न कृष्णमवतस्थिवांसमिष्यामि वो वृषणो युध्यताजौ॥१४॥
अध द्रप्सो अंशुमत्या उपस्थेऽधारयत्तन्वं तित्विषाणः।
विशो अदेवीरभ्या३ चरन्तीर्बृहस्पतिना युजेन्द्रः ससाहे॥१५॥
त्वं ह त्यत्सप्तभ्यो जायमानोऽशत्रुभ्यो अभवः शत्रुरिन्द्र।
गूळहे द्यावापृथिवी अन्वविदो विभुमद्भ्यो भुवनेभ्यो रणं धाः॥१६॥
त्वं ह त्यदप्रतिमानमोजो वज्रेण वज्रिन्धृषितो जघन्थ।
त्वं शुष्णस्यावातिरो वधत्रस्त्वं गा इन्द्रशच्येदविन्दः॥१७॥
त्वं ह त्यद् वृषभ चर्षणीनाङ् घनो वृत्राणां तविषो वभूथ।
त्वं सिन्धूँरसृजस्तस्तभानान् त्वमपो अंजयो दासपत्नीः"॥१८॥

## तिरश्ची अथवा मरुत्पुत्र द्युतान द्वारा इन्द्राभिनन्दन

शीघ्रता से चलते हुए कृष्णासुर ने अपनी दस हजार सेनाओं के साथ अंशुमती नदी पर पहुँच कर डेरा डाला और अपनी पूर्ण शक्ति से गर्वित होते हुए कृष्णासुर का इन्द्र ने मुकाबला किया, जिसमें श्रेष्ठ इन्द्र ने शत्रु की समस्त सेना को नष्ट कर दिया॥१३॥

सूर्य के समान मैंने सामने खड़े हुए कृष्णासुर को और अंशुमती नदी के किनारे गुफा में विचरण करते हुए द्रप्स को देखा है। हे वृषण! मैं तुम्हारी सहायता चाहता हूँ, तुम उनसे युद्ध करो॥१४॥

तत्पश्चात् द्रप्स ने अंशुमती नदी के किनारे तेजस्वी होते हुए शरीर को धारण किया। बृहस्पति के साथ इन्द्र ने चारों ओर से युद्ध करती हुई शत्रुसेना को परास्त कर दिया॥१५॥

हे इन्द्र! जन्म से ही तेरा कोई शत्रु नहीं है, ऐसा तू उन सात असुरों का शत्रु बन गया और असुरों द्वारा छिपाये हुए द्युलोक और पृथिवी लोक को प्रकाशित किया, जिससे सभी लोक आनन्दित हो गये॥१६॥

हे वज्रिन् इन्द्र! अप्रतिम बलशाली उस वृत्र को तूने अपने वज्र से मारा। तूने अपने शस्त्रों से शुष्ण असुर का संहार करके गायों को अपनी सामर्थ्य से मुक्त करा दिया॥१७॥

हे मनुष्यों में श्रेष्ठ बलशाली इन्द्र! तू ही वृत्रों का वध करके शक्तिसंपन्न बना, तू ही रुकी हुई नदियों को बहाने वाला है, तूने ही दास द्वारा रोकी हुई नदियों के जलप्रवाह पर विजय प्राप्त की"॥१८॥(८/९६/१३-१८)

## वभ्रो वैखानसः स्तौति।

**ऋ.१०/९९ "स द्रुह्वणे मनुष ऊर्ध्वसान आ साविषदर्शसानाय शरुम्।**
**स नृतमो नहुषोऽस्मत्सुजातः पुरोभिनदर्हन् दस्युहत्ये ॥७॥**
**सो अभ्रियो न यवस उदन्यन्क्षयाय गातुं विदन्नो अस्मे॥**
**उप यत्सीददिन्दुं शरीरैः श्येनोऽयोपाष्टिर्हन्ति दस्यून् ॥८॥**
**स व्राधतः शवसानेभिरस्य कुत्साय शुष्णं कृपणे परादात्॥**
**अयं कविमनयच्छस्यमानमत्कं यो अस्य सनितोत नृणाम् ॥९॥**
**अस्य स्तोमेभिरौशिज ऋजिश्वा व्रजं दरद्वृषभेण पिप्रोः।**
**सुत्वा यद्यजतो दीदयद्गीः पुर इयानो अभि वर्षसा भूत्" ॥११॥**

## वैखानस वभ्र द्वारा स्तुति

वह श्रेष्ठ इन्द्र, दुष्ट और हिंसक मनुष्य का संहार करने के लिए वज्र को धारण करता है। वह नरश्रेष्ठ, उच्च कुल में उत्पन्न है, लेकिन दुष्ट पुरुषों को दण्ड देने के लिए घोर संग्राम में हमारे शत्रुओं का संहार करे और उनके दुर्धर्ष दुर्गों को तोड़े ॥७॥

वह बादलों के समान सर्वप्रथम अन्न की उत्पत्ति के लिए जल की वर्षा करने वाला है और हमें हमारे निवासस्थान दिखाने वाला है। वह इन्द्र श्येन पक्षी के तीक्ष्ण और कठोर पंजो से पकड़ने के समान शत्रुओं को पकड़ता है। जब वह सम्पूर्ण स्वरूप से सोम के पास जाता है तब वह शत्रु का संहार करता है ॥८॥

वह इन्द्र अपने बलशाली शस्त्रों से महाबली शत्रुओं को भी पराजित कर देता है, इस इन्द्र ने स्तुति करने वाले अपने भक्त कुत्स के लिए शुष्ण नामक असुर का संहार किया, उसने स्तोता, कवि उशना के विरोधियों को अपने वश में किया। यह उशना कवि वृष्टिकर्ता इन्द्र के व्यापक रूप, ज्ञान और अनुचर मरुतों को जानता था ॥९॥

इन्द्र के स्तोत्रों से बल प्राप्त उशिज के पुत्र ऋजिश्वा ने पिप्रु नामक असुर के मर्मस्थल को विदीर्ण किया जब उपासना करते हुए औशिज ने सोम प्रस्तुत करते हुए यज्ञ में स्तुतिपाठ किया, उसी समय शत्रुओं के नगरों को नष्ट करते हुए उन्हें भी नष्ट कर दिया ॥११॥
(१०/९९/७-११)

## अथ प्रमहप्रमुखः सप्तगुः स्वर्णरः प्राधान्येनेन्द्रं महयति।

**ऋ.१०/४७ "जगृभ्मा ते दक्षिणमिन्द्र हस्तं वसूयवो वसुपते वसूनाम्।**
**विद्मा हि त्वा गोपतिं शूर गोनामस्मभ्यं चित्रं वृषणं रयिं दाः ॥१॥**
**स्वायुधं स्ववसं सुनीथं चतुःसमुद्रं धरुणं रयीणाम्।**

चर्कृत्यं शंस्यं भूरिवारमस्मभ्यं चित्रं वृषणं रयिं दाः ॥२ ॥
सुब्रह्माणं देववन्तं बृहन्तमुरुं गभीरं पृथुबुध्नमिन्द्र।
श्रुतऋषिमुग्रमभिमातिषाहमस्मभ्यं चित्रं वृषणं रयिं दाः ॥३ ॥
सनद्वाजं विप्रवीरं तरुत्रं धनस्पृतं शूशुवांसं सुदक्षम्।
दस्युहनं पूर्भिदमिन्द्र सत्यमस्मभ्यं चित्रं वृषणं रयिं दाः ॥४ ॥
अश्वावन्तं रथिनं वीरवन्तं सहस्रिणं शतिनं वाजमिन्द्र।
भद्रव्रातं विप्रवीरं स्वर्षामस्मभ्यं चित्रं वृषणं रयिं दाः ॥५ ॥
प्र सप्तगुमृतधीतिं सुमेधां बृहस्पतिं मतिरच्छा जिगाति।
य आङ्गिरसो नमसोपसद्योऽस्मभ्यं चित्रं वृषणं रयिं दा ॥६ ॥
वनीवानो मम दूतास इन्द्रं स्तोमाश्चरन्ति सुमतीरियानाः।
हृदिस्पृशो मनसा वच्यमाना अस्मभ्यं चित्रं वृषणं रयिं दाः ॥७ ॥
यत्त्वा यामि दद्धि तन्न इन्द्र बृहन्तं क्षयमसमं जनानाम्।
अभि तद् द्यावापृथिवी गृणीतामस्मभ्यं चित्रं वृषणं रयिं दाः" ॥८ ॥

## तदन्तर प्रमहप्रमुख स्वर्ग-मानव सप्तगु द्वारा प्रमुख रूप से इन्द्र की महिमा का गान

ऋग्वेद के १०/४७ में इन्द्र की स्तुति करते हुए कहते हैं- "हे धनों के स्वामी इन्द्र ! हम धन की इच्छा करने वाले तेरे दाहिने हाथ को ग्रहण करते हैं (दान देने वाला हाथ दाहिना हाथ है)। हे इन्द्र ! हम तुम्हें गायों का स्वामी जानते हैं। तू हमें विचित्र और इच्छित धन प्रदान कर ॥१ ॥

सुन्दर वज्रादि अस्त्रों से युक्त सबको अपने वश में करने वाला, सुनयन, चारों समुद्रों को यशसम्पन्न करने वाला, धरुण, पुनः पुनः धन का सम्पादन करने वाला, दुःखनिवारक, स्तुतियोग्य हे इन्द्र ! तू हमें अद्‌भुत धन प्रदान कर, हम तूझे जानते हैं ॥२ ॥

हे इन्द्र ! हम तुझे जानते हैं। तू देवभक्त है, महान् है, स्तुत्य है, व्यापक है, गंभीर विस्तृत और गहन ज्ञानसम्पन्न है, तेजस्वी और शत्रु-दमन-कर्ता है। इसलिए हे इन्द्र ! तू हमें पूज्य और श्रेष्ठ शक्तिसम्पन्न पुत्र प्रदान कर ॥३ ॥

अन्नयुक्त, श्रेष्ठ, शक्तिसम्पन्न धनपूरक, उन्नतिशील, उत्तम बलशाली, शत्रुसंहर्ता, शत्रु दुर्गों का संहारक, सत्य कर्म के कर्ता हे इन्द्र ! हम तुझे जानते हैं, तू हमें शक्तिसम्पन्न, इच्छित पुत्र प्रदान कर ॥४ ॥

हे इन्द्र ! अश्व, रथ, वीरयोद्धाओं से सम्पन्न, सैंकड़ों, हजारों सेवकों से युक्त, बलवान् और कल्याणकारी परिकरों से सम्पन्न, अत्यन्त श्रेष्ठवीर, सुखदाता तू हमें शक्तिसम्पन्न इच्छित और बलवान् पुत्र-रूपी धन प्रदान कर ॥५ ॥

मुझ सप्तगु को उत्तम और ज्ञानसम्पन्न बुद्धि प्राप्त हो। मैं सत्य कर्म करने वाला, श्रेष्ठ बुद्धिसम्पन्न बृहस्पति हूँ। मैं आंगिरस के वंश में उत्पन्न हुआ हूँ, मैं नमस्कार करके देवों के पास गया, इसलिए मुझे अतिविशिष्ट और बलवान् पुत्र रूपी धन प्रदान कर ॥६ ॥

स्नेहसम्पन्न प्रार्थना से युक्त दूत के समान स्तुतियाँ सुमति की इच्छा से इन्द्र को प्राप्त हों। ये स्तुतियाँ हृदय का स्पर्श करने वाली और मन से उच्चारण की गई हैं। अतः मुझे अतिविशिष्ट और धनवान् पुत्र रूपी धन की प्राप्ति हो ॥७ ॥

हे इन्द्र ! मैं जो कुछ तुझसे कामना करता हूँ वह तू मुझे प्रदान कर। सर्वश्रेष्ठ निवास स्थान और अतिविशिष्ट गृह प्रदान कर, जिसकी द्यावा पृथिवी में भी विशिष्टता गायी जाये। हे इन्द्र ! हमें अत्यन्त आश्चर्ययुक्त, समृद्ध धन प्रदान कर ॥८ ॥

## अभिगरप्रतिगरनियमः

**सदसि पुरातनसमये संवादेऽभ्यर्थनासु वा महताम्।**
**प्रथमं यद्वक्तव्यं सोऽभिगरः प्रतिगरस्तु तत्र परः ॥१ ॥**
**यं प्रत्यभिगर उक्तः सोऽभ्युपयन् प्रतिगरं कुरुते।**
**सोऽपगरोऽभिगरं चेदाक्षिपति त्रुटिमुदाहरँस्तस्य ॥२ ॥**
**स्वर्गे विजयमहोत्सव-संसदि सप्तगुकृतेऽर्थनाऽभिगरे।**
**प्रतिगरतया महेन्द्रोऽभ्युपयन्नूचे पुराकृतं त्राणम् ॥३ ॥**

## अभिगर-प्रतिगर का नियम

प्राचीन समय में सभा में, संवाद में अथवा महान् लोगों की स्तुतियों में प्रस्तुत किए जाने वाले प्रथम वक्तव्य को अभिगर कहते थे तथा उसके पश्चात् दिया जाने वाला वक्तव्य (प्रत्युत्तर) प्रतिगर होता था ॥१ ॥

जिसके प्रति अभिगर कहा गया है, वह अपगर यदि त्रुटि बताते हुए आक्षेप करता है तो वक्ता प्रतिगर करता है (प्रत्युत्तर देता है) ॥२ ॥

स्वर्ग में विजय महोत्सव की संसद् में ऋषि सप्तगु द्वारा किए गए प्रार्थना अभिगर के उच्चारण के बाद प्रतिगर के रूप में इन्द्र ने अपने पहले किए हुए त्राण (रक्षा) का उल्लेख करते हुए कहा ॥३ ॥

## सप्तगुमुखेन देवानामभिगरे देवेन्द्रस्य प्रतिगरः।

**१०/४८ "अहं भुवं वसुनः पूर्व्यस्पतिरहं धनानि सं जयामि शश्वतः।**
**मां हवन्ते पितरं न जन्तवोऽहं दाशुषे विभजामि भोजनम् ॥१ ॥**
**अहमिन्द्रो रोधो वक्षो अथर्वणस्त्रिताय गा अजनयमहेरधि।**
**अहं दस्युभ्यः परि नृम्णमा ददे गोत्रा शिक्षन् दधीचे मातरिश्वने ॥२ ॥**

महां त्वष्टा वज्रमतक्षदायसं मयि देवासोऽवृजन्नपि क्रतुम्।
ममानीकं सूर्यस्येव दुष्टरं मामार्यन्ति कृतेन कर्त्वेन च॥३॥
अहमेतं गव्ययमश्व्यं पशुं पुरीषिणं सायकेना हिरण्ययम्।
पुरू सहस्रा निशिशामि दाशुषे यन्मा सोमास उक्थिनो अमन्दिषुः॥४॥
अहमिन्द्रो न परा जिग्य इद्धनं न मृत्यवेऽक्तस्थे कदाचन।
सोममिन्मा सुन्वन्तो याचता वसु न मे पूरवः सख्ये रिषाथन॥५॥
अहमेताञ्छाश्वसतो द्वाद्वेन्द्रं ये वज्रं युधयेऽकृण्वत।
आह्वयमानाँ अव हन्मनाहनं दृळहा वदन्ननमस्युर्नमस्विनः॥६॥
अभीदमेकमेको अस्मि निष्षाळभी द्वा किमु त्रयः करन्ति।
खले न पर्षान् प्रति हन्मि भूरि किं मा निन्दन्ति शत्रवोऽनिन्द्राः॥७॥
अहं गुङ्गुभ्यो अतिथिग्वमिष्करमिषं न वृत्रतुरं विक्षु धारयम्।
यत्पर्णयघ्न उत वा करञ्जहे प्राहं महे वृत्रहत्ये अशुश्रवि॥८॥
प्र मे नमी साप्य इषे भुजे भूद्गवामेषे सख्या कृणुत द्विता।
दिद्युं यदस्य समिथेषु मंहयमादिदेनं शंस्यमुक्थ्यं करम्॥९॥
प्र नेमस्मिन्ददृशे सोमो अन्तर्गोपा नेममाविरस्था कृणोति।
स तिग्मश्रृङ्गं वृषभं युयुत्सन् द्रुहस्तस्थौ बहुले बद्धो अन्तः॥१०॥
आदित्यानां वसूनां रुद्रियाणां देवो देवानां न मिनामि धाम।
ते मा भद्राय शवसे ततक्षुरपराजितमस्तृतमषाळहम्"॥११॥

## देवों के अभिगर के पश्चात् देवेन्द्र का प्रतिगर

१०/४८ में इन्द्र कहते हैं - "मैं सम्पत्तियों का अग्रणी स्वामी हूँ, मैं सदा ही शत्रुओं को उनके धन के साथ जीतता हूँ, जैसे पुत्र अपने पिता को आदरपूर्वक बुलाता है, वैसे ही समस्त प्राणिमात्र मुझे बुलाते हैं, मैं दानदाता हूँ, प्रजाओं को अन्नादि ऐश्वर्य प्रदान करता हूँ॥१॥

मैंने अथर्वणपुत्र दधीचि का मस्तक काट दिया, त्रित के उद्धार के लिए मैंने मेघ से जल को उत्पन्न किया था, मैंने दस्युओं से धन प्राप्त किया था, मैंने मातरिश्वा के पुत्र दधीचि के लिए मेघों को बरसाया ॥२॥

त्वष्टा ने मेरे लिए लोहे के समान कठोर वज्र का निर्माण किया, मेरे लिए देवता यज्ञ कर्म करते हैं, मेरी सेना सूर्य के समान दुर्जेय है, अपने किये हुए कर्मों के फलस्वरूप ही सभी लोग मुझे प्राप्त होते हैं॥३॥

जब स्तुतिकर्ता मुझे स्तुतियों और सोम से आनन्दित करते हैं तब मैं दानशील स्तुतिकर्ताओं के लिए सहस्रों आयुधों की धार तीक्ष्ण कर लेता हूँ, तब मैं शत्रुओं की गायें, अश्व, स्वर्ण, दुग्ध और जलयुक्त समस्त सम्पत्ति अपने आयुधों से जीत लेता हूँ ॥४ ॥

मैं इन्द्र अपने धन को कभी हार नहीं सकता हूँ, मैं मृत्यु से भी कभी स्वयं को जीता गया नहीं पाता हूँ, इसलिए सोम का सवन करने वाले हे यजमानों ! मुझसे ही धन की याचना करो । हे मनुष्यों ! मेरे साथ तुम्हारी मित्रता कभी समाप्त नहीं होनी चाहिये ॥५ ॥

मैं इन्द्र उन जीवनधारी शत्रुओं को दो-दो को एक साथ नष्ट कर देता हूँ, जो शत्रु-संहारक, वज्रधारी मुझ इन्द्र का युद्ध के लिए आह्वान करते हैं। उन आह्वानकर्ता शत्रुओं को बलहीन करके, स्वयं न झुकते हुए गर्जना करने वालों को उपायपूर्वक मार देता हूँ ॥६ ॥

मैं अकेला ही एक शत्रु को जीत सकता हूँ, शत्रुहीन मैं दो शत्रुओं को जीत सकता हूँ, तीन भी यदि हों तब भी मेरा क्या कर सकते हैं? मैं उन शत्रुओं को उसी तरह मर्दित कर देता हूँ जैसे किसान धान लिए गेहूँ की बाल को मर्दित करता है ॥ वे इन्द्र-विरोधी शत्रु मेरी क्या निन्दा करेंगे? ॥७ ॥

अन्न उत्पादक और शत्रुसंहर्ता, अतिथिग्व के पुत्र दिवोदास को गुंगुओं के देश की रक्षा के लिए प्रजाओं के बीच उसी तरह प्रतिष्ठित किया जैसे अन्न को प्रतिष्ठित किया जाता है। इसलिए मैं करंज और पर्णय नाम के शत्रुओं का वध करने के कारण महायुद्ध में प्रसिद्ध हुआ ॥८ ॥

मेरी स्तुति करने वाला सबके द्वारा आश्रय पाने योग्य, अन्नवान् और भोग्य पदार्थों का दाता होता है, उसे लोग गायों का दान लेने के लिए और मित्रता के लिए दो प्रकार से स्वीकार करते हैं ॥९ ॥

इन्द्र अपने दो स्तोताओं में से एक के पास अवश्य ही सोम को देखता है, यह पालनकर्ता इन्द्र अपने स्तोता के लिए स्वयं को वज्रसा ' प्रकट करता है। वह इन्द्र युद्ध के इच्छुक शत्रु के सामने तीक्ष्ण सींग वाले वृषभ क समान होकर घोर अन्धकार में खड़ा हो गया है ॥१० ॥

वह इन्द्र आदित्य, वसु, रुद्र और देवों के घरों को नष्ट नहीं करता है। ये समस्त देव मुझे कल्याण और बल प्रदान करने की कृपा करें। मैं अपराजित, उत्साहवान् और शक्तिशाली हूँ ॥११ ॥ (१०/४८/१-११)

## स्वर्गप्रमहेण दस्युविजयनीयेन्द्रचरितपूर्णताख्यानम्।

**इत्थं स्वाराड् दस्युनाशं व्यधात् प्राग् वैकुण्ठेन्द्रो नैषधेऽद्रौ स्थितः सन्।**
**कुत्सं राज्ये स्थापयित्वा स दस्यूनार्यो राष्ट्रे तान्निगृह्य स्वरागात् ॥१ ॥**

कुत्सो राजाऽन्ये च राजान एते सिन्धोः प्रत्यग् नीवृति प्राग् यथाऽऽसन्।
सर्वे सभ्या आर्य्यराजास्त एते स्वं स्वं राज्यं प्राग्वदत्राध्यतिष्ठन्॥२॥

## स्वर्गोत्सव द्वारा दस्युविजय से सम्बद्ध इन्द्रचरित की पूर्णता का आख्यान

इस प्रकार वैकुण्ठपति स्वाराट् इन्द्र ने निषध पर्वत पर स्थित रहकर पहले दस्युओं का नाश किया, फिर कुत्स को राज्य पर स्थापित करके दस्युओं के संहर्ता उस इन्द्र ने राष्ट्र में उन दस्युओं को निगृहीत करके स्वर्ग को गमन किया॥१॥

कुत्स तथा अन्य राजागण सिन्धु के पश्चिम देश के राजा थे। ये सभी सभ्य और आर्य राजा थे, ये जैसे थे वैसे ही अपने अपने स्थान पर पूर्ववत् पुनः अधिष्ठित हो गए॥२॥

# अथोदयनीयं परिशिष्टाख्यानम्।

## अथ दस्युभिः सारस्वतसूर्य्यापहरणम्।

इत्थं देवस्वाराट् प्रतापतः सर्वरूपायाम्।
विहितायामपि शान्तौ नातिष्ठत् सा चिरं शान्तिः॥१॥
धृष्टा उद्धतहृदयाः कुर्वाणाः पुनरुपद्रवं भूयः।
आक्रममाणाः सूर्य्यस्थाने पुनरप्यशांतिमातेनुः॥२॥
वैकुण्ठद्विषि हन्तुं देवकुलं प्रस्थितेऽसुराधीशे।
प्रह्लादे त्वार्य्याणां क्षोभाद् दस्युभिरयं हतः सूर्य्यः॥३॥
गान्धारस्थं सूर्य्यं विद्वेषाद् ध्वंसयन्तोऽन्ये।
असुरा यवनप्रान्ते पुनरैच्छन् तं निधापयितुम्॥४॥

# तदनन्तर उत्तर काल का परिशिष्टाख्यान

## इसके पश्चात् दस्युओं द्वारा सारस्वत सूर्य का अपहरण

इस प्रकार देव-स्वाराट् इन्द्र ने अपने प्रताप से समस्त प्रकार की शान्ति स्थापित कर दी तथापि वह शान्ति दीर्घकाल तक स्थित नहीं रही॥१॥

धृष्ट और उद्धत स्वभाव वालों ने उपद्रव करते हुए सूर्यस्थान पर आक्रमण करते हुए फिर से अशान्ति फैला दी॥२॥

वैकुण्ठ इन्द्र से द्वेष करने वाले असुरपति प्रह्लाद के देवकुल का संहार करने के लिए प्रस्थान करने पर आर्यों के क्षोभ (दुर्बलता) से इस सूर्य का अपहरण कर लिया गया ॥३ ॥

अन्य असुरों ने ईर्ष्यावश गान्धार देश में स्थित सूर्य को नष्ट करते हुए यवन प्रान्त में पुनः स्थापित करना चाहा ॥४ ॥

## सीरियादेशे बालवकभवननिर्माणम्।

**शामो रोमकतनयस्तद्दायः शामदेशो यः।**
**स च पश्चादवरुद्धः सुरैस्ततः सीरिया नाम ॥५ ॥**
**तस्मिन् देशे हेलिः पौलस्त्यो निर्म्ममे सौरम्।**
**भवनं बालवकाख्यं तस्मिन्शालाऽद्भुतस्कम्भा ॥६ ॥**
**अद्याप्येकः स्कम्भः श्वेताश्ममयोऽत्र दृश्यते भुग्नः।**
**चत्वारिंशत् सप्त च हस्ता ऊर्ध्वे परिस्तृतौ तु नव ॥७ ॥**
**तैरिदमद्भुतमासीत् सुदृढविशालैः शिलास्तम्भैः।**
**भवनं तत्र च शाला विहितासीत् पूर्वसाम्येन ॥८ ॥**
**नासीत्तत्र तु चक्रं शालैवासीद्विशालैषा।**
**चक्राभावात् तस्मिन् प्रतिबिम्बार्थं च न द्युरन्ध्राणि ॥९ ॥**
*** अचरन् देवाश्चक्रं शालं त्वसुराः समाश्रिता आसन्।**
**इत्थं शतपथ उक्तं काण्डे षष्ठेऽष्टमाध्याये ॥१० ॥**
**सैषाऽस्ति हि परिभाषा सर्वत्रैवोपनीयते तस्मात्।**
**चक्रमनस्तच्छालं कुम्भीत्येवं हविर्ग्रहणे ॥११ ॥**
**चक्रं त्वश्मा पृश्निः शालं यन्त्रं तु सूर्य्यविज्ञाने।**
**चक्रं परित्यजन्तः शालामेवाऽसुरा व्यदधुः ॥१२ ॥**

## सीरिया देश में बालवकभवन का निर्माण

रोमक का पुत्र शाम था, जिसके हिस्से का प्रदेश यह शाम देश (सामदेश) था, जो परवर्ती काल में देवों के द्वारा रोक दिया गया, इसलिए उसका नाम सीरिया पड़ा ॥५ ॥

उस सीरिया देश में पुलस्त्य के पुत्र "हेलि" ने "बालवक" नाम के सूर्य-भवन का निर्माण किया, जिसमें बड़े विचित्र स्तम्भों वाली शाला थी ॥६ ॥

---

* देवाश्चक्रमचरन् शालमसुरा आसन्। ते देवाश्चक्रेण चरन्त एतत्कर्म्मापश्यन्- (वनीवाहनम्)। तस्मादनस एव पौराडाशेषु यजूंषि-अनसोऽग्नौ। (शत. ६।८।१।१)

आज भी भग्नावस्था में एक स्तम्भ, जो श्वेत पत्थर से निर्मित है, यहाँ देखा जाता है। यह स्तम्भ सैंतालीस हाथ ऊँचा और नौ हाथ के घेरे का है ॥७॥

उन विशाल और सुदृढ़ शिलास्तम्भों से वह भवन अत्यन्त अद्भुत था और पूर्व के सूर्यभवन, की समानता से यहाँ अनेक शालाओं का निर्माण किया गया था ॥८॥

यह शाला ही विशाल थी, परन्तु इसमें चक्र नहीं था और चक्र के अभाव के कारण उस शाला में प्रतिबिम्ब के लिए आकाशीय छिद्र भी नहीं थे ॥९॥

देवों ने चक्र का आश्रय लिया और असुरगण उस शाला के ही आश्रित रह गए* ऐसा शतपथ ब्राह्मण के छठे काण्ड के अष्टम अध्याय में कहा गया है ॥१०॥

इसलिए यह वह परिभाषा है, जो सर्वत्र ग्रहण की जाती है। चक्र से तात्पर्य है शकट (गाड़ी) और शाल हवि का आहरण करने वाली कुम्भी (मिट्टी का पात्र) का नाम है ॥११॥

सूर्य-विज्ञान में चक्र से तात्पर्य अश्मा (विशिष्ट पत्थर) से है और शालयन्त्र से तात्पर्य पृश्नि (ज्योतिर्मण्डल अथवा गौ) है। असुरों ने चक्र का परित्याग करते हुए मात्र शाला का ही निर्माण किया ॥१२॥

## सरस्वत्याख्यब्राह्मीसूर्य्यप्रातिनिधेनाब्राह्मीसूर्य्यप्रतिष्ठापना।

**सिन्धुसरस्वत्योः प्राक्कूलात् प्राच्यां पुरा स्थितः सूर्य्यः।**
**सिन्धोरब्राह्म्या अपि नद्याः प्राच्यां प्रतिष्ठितः पश्चात् ॥१३॥**
**भूमध्यसागरस्य प्राक्कूले वहति या नाम्ना।**
**इवरिम नदीयमेवाब्राह्मी तां क्वचिदडोनिसं चाहुः ॥१४॥**
**संवत्सरे कदाचिज्जलमब्राह्म्या भवत्यस्याः।**
**नद्या लोहितमचिरात् तत्र न जानन्ति कारणं केचित् ॥१५॥**
**अब्राह्मी तु नदी या बालवकं नाम यद् भवनम्।**
**क्रोशा विंशतिरनयोरन्तरमस्तीह पश्चिमेऽस्ति नदी ॥१६॥**
**उज्जयनमध्यरेखापश्चिमदेशान्तरे स्थितं तदिदम्।**
**चत्वारिंशप्राये धाम चतुस्त्रिंशकेऽक्षांशे ॥१७॥**
**ऊनचत्वारिंशकेंऽशे सप्तविंशतिसाधिके।**
**(३९।२७।भारतीयपश्चिमदेशान्तरे)**
**उज्जायिन्याः पश्चिमतः स्थानं बालवकं स्थितम् ॥१८॥**
**तद् ग्रीनवीचस्तु प्राच्यां षट्त्रिंशके सपादेंऽशे।**
**(३६।१५ ग्रीनविचपूर्वदेशान्तरे)**

---

* देवों ने चक्र की रचना की और असुरों ने शाला का आश्रय लिया। उन देवगणों ने चक्र का उपयोग करते हुए इस कर्म को देखा (वनीवाहन कर्म)। "अनस ही अग्नि है"। ऐसा यजुर्वेद का मन्त्र बोलते हुए (निर्धारित किया) कि पुरोडाश के लिए शकट (गाड़ी) से ही धान ग्रहण करना चाहिए।

**बालवकाख्यं सौरं सद्माद्भुतमसुरनिर्म्मितं रेजे ॥१९ ॥**
**तत्र च बालवकाख्ये भवने यं स्थापयामासुः ।**
**सूर्य्यमदेवाः सोऽपि च तत्रागारे तमोमये विबभौ ॥२० ॥**

## सरस्वती नामक ब्रह्म से सम्बद्ध सूर्य के प्रतिनिधिस्वरूप अब्राह्मी (असुरों से सम्बद्ध) सूर्य की स्थापना

पुराकाल में सिन्धु और सरस्वती के पूर्वी किनारे के पूर्व भाग में यह सूर्य (सूर्य-संस्था) स्थित था और उत्तरकाल में अब्राह्मी नदी की भी पूर्व दिशा में यह सूर्य प्रतिष्ठित किया गया ॥१३ ॥

भूमध्य सागर के पूर्वी किनारे पर जो इवरिम नाम की नदी बहती है, जिसे कहीं "अड़ोनिस" नाम से कहा गया है, वह अब्राह्मी नदी है ॥१४ ॥

वर्ष के किसी भाग में इस अब्राह्मी नदी का जल कुछ समय से लाल हो जाता है, परन्तु इसका कारण कोई नहीं जानते हैं ॥१५ ॥

जो अब्राह्मी नदी है और जो बालवक नाम का भवन है, इन दोनों में बीस कोस का अन्तर है और इनमें नदी पश्चिम में है ॥१६ ॥

उज्जयिनी की मध्यरेखा के पश्चिम देशान्तर में लगभग ३४ अक्षांश तथा ४० अंश पर यह धाम स्थित है ॥१७ ॥

भारतीय पश्चिमी देशान्तर पर ३९ अक्षांश और २७ कला (३९/२७) पर उज्जयिनी से पश्चिमी भाग पर यह बालवक स्थान स्थित है ॥१८ ॥

और ग्रीनवीच से पूर्व की ओर ३६ अक्षांश और १५ कला (३६/१५ ग्रीनवीच पूर्व देशान्तर) पर असुरों के द्वारा निर्मित यह सौर बालवक नामक अद्भुत भवन शोभित होता था ॥१९ ॥

वहाँ उस बालवक नाम के भवन में असुरों ने जिस सूर्य को स्थापित किया, वह भी उस तमोमय आगार में सुशोभित था ॥२० ॥

## पूर्वभारतस्य पश्चिमसीम्नि सूर्य्येऽस्तमिते पश्चिमभारतस्य पश्चिमसीम्नि किञ्चित्कालं सूर्यदर्शनम् ।

**सूर्य्योऽस्ति यत्र दिशि तत्र भवन्ति देवास्तत्पृष्ठदिश्युपनमन्त्यसुराः पृथिव्याम् ।**
**सूर्य्येऽसुराक्रमणतोऽस्तमितेऽथ पश्चात् तामासुरीं दिशमनूदयते स सूर्य्यः ॥१ ॥**

**इयं वैज्ञानिकी संस्था नित्यं दृष्टाऽधिदैवतम् ।**
**साम्यं तथाधिभूतं च प्रकृतेहानुवर्तते ॥२ ॥**

असुरैः प्रत्याक्रमणात् सूर्य्यः सारस्वतो जगामास्तम्।
भूमध्यसागरस्य प्राचीकूले पुनः स उदियाय ॥३ ॥
स्वभावतः सूर्य्य उदेति पूर्वतः प्रातः प्रतीचीं स इतोऽस्तमेति च।
पुनः पुरस्तात् स उदेति चक्रवत् क्रमात् पुनर्भारतमेवैएष्यति ॥४ ॥

## पूर्वी भारत की पश्चिमी सीमा पर सूर्य के अस्त हो जाने पर पश्चिमी भारत की पश्चिमी सीमा पर कुछ समय के लिए सूर्यदर्शन

पृथिवी पर सूर्य जिस दिशा में है, वहाँ देव निवास करते हैं और उसकी पृष्ठ (विपरीत) दिशा में असुर निवास करते हैं। सूर्य पर असुरों का आक्रमण होने से सूर्य के अस्त हो जाने पर आसुरी दिशा में वह सूर्य उदय होता है ॥१ ॥

यह वैज्ञानिकी संस्था (विज्ञानभवन) नित्य प्रति अधिदैवत में देखी जाती है तथा उसके साम्य से वैसी ही वैज्ञानिकी संस्था का इस प्रकृत अधिभूत में अनुकरण किया गया है ॥२ ॥

असुरों के प्रत्याक्रमण से सारस्वत सूर्य अस्त हो गया तब वह भूमध्य सागर के पूर्वी किनारे पर पुनः उदित हुआ ॥३ ॥

स्वभाव से सूर्य प्रातःकाल पूर्व में उदय होता है फिर वहाँ से वह पश्चिम दिशा में अस्त होता है। फिर वह पूर्व दिशा में उदय होता है और चक्र के समान क्रम से भारत में ही आ जाएगा ॥४ ॥

## भारतवर्षीयवैदिकधर्म्मस्योत्थानपतनयोर्दैवो हेतुः।

नाकस्थविष्णोः परितस्तु वेददृग्व्यासार्द्धजे संचरति ध्रुवं ध्रुवः।
वृत्ते ततः क्वापि पुरा युगे स हि प्राग्
मेरुखस्वस्तिकगोऽभिजित्यभूत् ॥१ ॥
प्राग्मेरुस्थे हंसपृष्ठेऽभिजिद्भागे ब्रह्मण्यासीत् सा ध्रुवो यत्र काले।
ब्रह्मादिष्टो वेदधर्म्मस्तदासीत् सर्वप्रीतो हृद्गतः प्रोन्नतश्च ॥२ ॥
तर्ह्येवासीद् भारते सोऽपि सूर्य्यो विज्ञानेनोच्छ्राययन् भारतीयान् ॥
अस्तं यातो भारतस्यैष सूर्य्यः क्लिश्यन्त्यार्य्यास्तेन बुद्ध्यन्धकारात् ॥३ ॥
प्राग्मेरुखस्वस्तिकमेष हित्वोत्तरस्य खस्वस्तिकमर्णवस्य ॥
गतो ध्रुवः कर्षति वेदधर्म्मविपर्य्ययेणाद्य विपर्य्ययस्थः ॥४ ॥
* तारावशादपि फलं ध्रुव एष दत्ते तेनाभिजित्परिगतः स हि वैदिकानाम् ॥

* "वर्षा धर्मो हिमं रात्रिः सन्ध्ये चैव दिनं तथा ॥ शुभाशुभफलानीह ध्रुवात् सर्वं प्रवर्त्तते ॥१ ॥"
(इति मत्स्यपुराणे १२५ अ. २८ श्लोकः)

**प्रागुन्नतिं बहु चकार स चाधुनैषां वेदद्विषां सततमुन्नतिमातनोति ।।५ ।।**
**कालेन केन च परिक्रममाण एष प्राचीमुपेत्य पुनरेष्यति दक्षिणाशाम् ।।**
**तेन ध्रुवं ध्रुवं इहाभिजिति प्रपन्नो भूयः करिष्यति स**
**भारतधर्म्मवृद्धिम् ।।६ ।।**

# भारतवर्षीय वैदिक धर्म के उत्थान-पतन का दैवी कारण

"नाक" (वह कदम्बबिन्दु, जो ध्रुव के परिभ्रमणवृत्त के ठीक मध्य का बिन्दु अथवा केन्द्रस्थल है, जिसको आधार बना कर यह ध्रुव संचरण करता है) बिन्दु पर स्थित विष्णु (यही कदम्बवृत्त विष्णु का स्थान "तद् विष्णो परमं पदम्" बताया गया है) के चारों ओर २४ अंश के व्यासार्द्ध पर यह ध्रुव संचरण करता है। इसलिए प्राचीन युग में वह ध्रुव पामीर के ख-स्वस्तिक (उस कदम्बवृत्त को केन्द्र मानकर चारों दिशाओं में २४-२४ अंश का जो स्वस्तिक बनता है, वही उल्टा करने पर आकाशमण्डल पर एक २४-२४ अंश का स्वस्तिक बनाता है और यही ख स्वस्तिक है) पर अभिजित् नक्षत्र था ।।१ ।।

जिस समय पामीर स्थित ब्रह्मा के निवास (लौकिक ब्रह्मा के निवास) हंसपृष्ठ पर स्थित अभिजित् नक्षत्र में ध्रुव था, उस समय ब्रह्मा द्वारा आदिष्ट वैदिक धर्म सर्वमान्य और अत्यन्त उन्नत था ।।२ ।।

उसी समय भारतवर्ष में यह सूर्य भी विज्ञान के द्वारा भारतीयों का अभ्युदय करता था। (भारतीय जनता उन्नति को प्राप्त करती थी)। अब भारत का यह सूर्य अस्त हो गया, जिससे बौद्धिक अन्धकार से आर्य लोग कष्ट में पड़ गये हैं ।।३ ।।

प्राग्मेरु-स्थित ख स्वस्तिक को छोड़कर यह ध्रुव अब उत्तर समुद्र के ख स्वस्तिक पर चला गया है। तब से विरुद्ध दिशा में स्थित यह ध्रुव आज विरुद्ध रूप से वैदिक धर्म का कर्षण कर रहा है। (वैदिक धर्म ह्रास को प्राप्त हो रहा है) ।।४ ।।

*ताराओं के वश से भी यह ध्रुव शुभाशुभ फल देता है, इसलिए जब अभिजित् नक्षत्र पर यह ध्रुव स्थित था तब प्राचीन समय में इसने वैदिकों की बहुत उन्नति की। अब इस समय यह वेदविद्रोहियों की निरन्तर उन्नति कर रहा है ।।५ ।।

कुछ समय पश्चात् जब यह ध्रुव परिक्रमा करता हुआ पूर्व दिशा में पहुँच कर फिर से दक्षिण दिशा में पहुंचेगा, तब निश्च ही यह ध्रुव यहाँ अभिजित् नक्षत्र पर पहुंच कर भारतधर्म की उन्नति करेगा ।।६ ।।

---

* "वर्षा, सर्दी, गर्मी, रात, दिन, और दोनों काल की संध्याएँ और शुभाशुभ फल सभी यहाँ ध्रुव से प्रवृत्त होते हैं ।।" (मत्स्यपुराण १२५ अ. २८ श्लोक)

## पश्चिमदेशीयसूर्य्योदयानन्तरं पुनः पूर्वदिशार्य्यसूर्य्योदयः ।

अथ गान्धारे देशे क्षोभणतः क्षोभणादित्यम् ॥
आर्य्याः क्षोभस्मृत्यै मार्त्तण्डं स्थापयामासुः ॥१ ॥
स्कान्दे प्रभासखण्डे कथितोऽयं शीलाध्याये ॥(१३९)
* चित्रादित्यस्तवने गान्धारे क्षोभणादित्यः ॥२ ॥
गान्धारे चित्रपथा चित्रा वा ब्रह्मकुण्डसंनिहिता ॥
नद्यस्ति सुप्रसिद्धा प्रावृट्काले वहत्येषा ॥३ ॥
चित्रादित्य इहासीच्चित्रेण स्थापितः सोऽयम् ॥
चत्वारिंशशतेऽस्मिन्नध्याये (१४०) वर्णितः स्कान्दे ॥४ ॥
कश्मीरे श्रीनगरादग्निदिशि काप्यदूरवद्देशे ॥
मट्टनसाहिबनाम्ना कुण्डः कोऽप्यस्ति तीर्थमार्य्याणाम् ॥५ ॥
तत्रैव पूर्वमासीदन्यन्मार्त्तण्डमन्दिरं तस्य ॥
भग्नावशेषमद्य तु कौरवपाण्डवमिति प्राहुः ॥६ ॥
अर्च्चामन्दिरमेतन्न तु तद्विज्ञानमन्दिरं सौरम् ॥
अनृषिभिरेव च जुष्टं तदपि यशःशेषतां यातम् ॥७ ॥
अन्तर्हितोऽत्र सूर्य्योऽप्यभवत् काले स दस्युनिकृतत्वात् ॥
स यथा राहुग्रस्तो दिवि सूर्य्योऽन्तर्हितो भवति ॥८ ॥
विज्ञानकूप आसीत् तमिदानीं चाह वाविलेत्याख्यम् ॥
म्लेच्छा विदुरिह निगडबद्धौ हारूतमारूतौ ॥९ ॥
विज्ञानकुण्डमपि तं मटनेत्याख्यं वदन्ति ते म्लेच्छाः ॥
वैज्ञानिकी व्यवस्था सर्वा विध्वंसिताऽनार्य्यैः ॥१० ॥
नीचप्रकृतिर्दस्युः परकीर्तिध्वंसकृद् भवति ॥
प्रतिपन्थी जगतामयमकारणं द्वेषमाचरति ॥११ ॥

---

* चित्रादित्यं ततो गच्छेद् ब्रह्मकुण्डसमीपतः॥ तत्र गच्छेत्ततः पूर्वं नदी चित्रपथाभिधाम् ॥१ ॥
ब्रह्मकुण्डसमीपस्था चित्रादित्यस्य मध्यतः॥ प्रतिष्ठा सागरे चित्रा नदी चित्रपथोच्यते ॥२ ॥
तस्मिन्कलियुगे सेयमन्तर्द्धानगता नदी॥ प्रावट्काले तु दृश्येत दुर्लभं तत्र दर्शनम् ॥३ ॥
यदैव दृश्यते तत्र चित्रा चित्रपथा नदी॥ प्रमाणदर्शनं तस्या न कालस्तत्र कारणम् ॥४ ॥
भुक्तो वाऽप्यथवाऽभुक्तो रात्रौ वा यदि वा दिवा ॥पूर्वकालेऽथवाऽकाले पवित्रो वाऽथवाशुचिः ॥५ ॥
तस्यां स्नात्वा नरो यस्तु चित्रादित्यं प्रपश्यति॥ स याति परमं स्थानं यत्र देवो दिवाकरः॥६ ॥
(स्कान्दे प्रभास ३९ अ.)

# पश्चिम-देशीय सूर्योदय के पश्चात् पुनः पूर्व दिशा में आर्य-सूर्योदय

गान्धार देश में क्षोभण नाम के स्थान से (जहाँ देव-दस्यु-युद्ध हुआ) क्षोभ की स्मृति (युद्ध एवं युद्ध पराजय इत्यादि कष्ट की स्मृति) में आर्यों ने क्षोभणादित्य नाम के सूर्य की स्थापना की ॥१ ॥

स्कन्द पुराण के प्रभास खण्ड में १३९वें अध्याय में चित्रादित्य की स्तुति में गान्धार देश में इस क्षोभणादित्य नाम के सूर्य का उल्लेख है ॥२ ॥*

गान्धार देश में चित्रपथा अथवा चित्रा नाम की नदी है, जो ब्रह्मकुण्ड के समीप स्थित है। यह नदी वर्षाकाल में बहती है ॥३ ॥

यहाँ यह चित्रादित्य चित्र के द्वारा स्थापित किया गया था, इसका वर्णन स्कन्द पुराण के १४०वें अध्याय में किया गया है ॥४ ॥

काश्मीर के श्रीनगर में कुछ ही दूरी पर (समीप ही) अग्निकोण में मट्टन साहिब का नाम का एक को कुण्ड है, जो आर्यों का तीर्थस्थान है ॥५ ॥

उस मट्टन साहिब देश में ही प्राचीन काल में कोई अन्य ही सूर्यमन्दिर था, उसके भग्नावशेष (टूटे हुए हिस्से) आजकल कौरव-पाण्डव नाम से प्रसिद्ध है ॥६ ॥

यह सूर्यमन्दिर पूजार्चन करने का मन्दिर था, न कि विज्ञानमन्दिर (विज्ञानभवन) था। यह ऋषिभिन्न जनों के द्वारा सेवित था और आज तो वह (पूजार्चन का सूर्य मन्दिर) भी कीर्तिमात्र (नाम मात्र) ही शेष रह गया है ॥७ ॥

समय व्यतीत होने पर वह सूर्य भी दस्युओं के आक्रमण से उसी प्रकार अन्तर्हित (लुप्त) हो गया है, जिस प्रकार द्युलोक में राहु द्वारा ग्रसित होकर सूर्य अन्तर्हित हो जाता है ॥८ ॥

---

* तदनन्तर ब्रह्मकुण्ड के समीप चित्रादित्य स्थान पर जाना चाहिये तथा उससे पहले चित्रपथा नाम की नदी पर जाना चाहिये ॥१ ॥ ब्रह्मकुण्ड के समीप और चित्रादित्य के मध्य सागर में यह चित्रा नाम की नदी प्रतिष्ठित है, जिसे चित्रपथा भी कहा जाता है ॥२ ॥ कलियुग में यह नदी उस स्थान पर अन्तर्ध्यान (भूमिगत) हो गई है, जो वर्षा-काल में ही दिखाई दे सकती है, अन्यथा इसका दर्शन दुर्लभ है ॥३ ॥जब कभी यह चित्रा अथवा चित्रपथा नदी दिखाई देती है, तब इसका प्रमाण(कहाँ से कहाँ विस्तार की है) दिखाई नहीं देता है, इसमें कालचक्र ही एकमात्र कारण है ॥४ ॥ इस नदी में मनुष्य भोजन करके अथवा भोजन किए बिना, रात्रि में अथवा दिन में, समय से पूर्व अथवा समय व्यतीत होने के पश्चात्, पवित्रावस्था में अथवा अपवित्रावस्था में स्नान करके चित्रादित्य का दर्शन करता है, वह उस श्रेष्ठ सूर्यलोक को प्राप्त करता है ॥५-६ ॥

यहाँ कोई विज्ञानकूप भी था, जिसे आज "वाविल" नाम से कहा जाता है। म्लेच्छ लोग जानते हैं कि यहाँ "हारूत" और "मारूत" नाम के दो व्यक्ति बेड़ियों में बांध दिए गए थे ॥९ ॥

वे म्लेच्छ लोग इस विज्ञानकुण्ड को भी "मट्टन" नाम से कहते हैं और अनार्यों के द्वारा समस्त वैज्ञानिकी व्यवस्था नष्ट कर दी गई ॥१० ॥

दुष्ट प्रकृति का दस्यु दूसरे के यश का नाशक होता है, यह संसार का प्रतिगामी (विरुद्ध आचरण करने वाला) होता है और अकारण ही द्वेष रखता है ॥११ ॥

## देशिकदस्युभिः परिपीडितानां भारतीयानां स्वदेशीयानामन्ततो विजयः।

**त्रेधा लोकः कल्पितोऽयं यदासीदिन्द्रः स्वर्गे पूर्वकाले तदासीत् ॥**
**आसन्नस्मिन् भारते तर्हि विद्याः शौर्य्यं लक्ष्म्यः सिद्धयश्चानवद्याः ॥१ ॥**
**ब्रह्मवीर्य्यपरिवृद्धिहेतवः सूर्य्यसोमरसयज्ञधेनवः ॥**
**क्लेशसिन्धुतरणाय सेतवः संहता अथ विधिर्दधे नवम् ॥२ ॥**
**क्षत्रियाय इह सूर्य्यसोमजा ब्राह्मणाय इह यज्ञसूत्रिणः ॥**
**विड्व्रजा य इह धेनुपालकास्तेषु सन्ति विजया धियः श्रियः ॥३ ॥**

## विदेशी दस्युओं द्वारा पीड़ित स्वदेशी भारतीयों की अन्त में विजय

जब यह लोक तीन भागों में बंटा हुआ था, उस समय पूर्व काल में इन्द्र स्वर्ग में था। उस समय भारतवर्ष में विद्या, पराक्रम, समृद्धियाँ और दोषरहित समस्त प्रकार की सिद्धियाँ विद्यमान थीं ॥१ ॥

ब्रह्मवीर्य की पूर्ण वृद्धि के मुख्य कारण हैं - सूर्य, सोमरस, यज्ञ और गायें। क्लेश (कष्ट) रूपी सागर को पार करने के लिए ये सेतु के समान थे, जिनका संहार होने पर विधाता ने नये सेतु का निर्माण किया ॥२ ॥

सूर्य और सोम से उत्पन्न शक्तियाँ क्षत्रियों के लिए हैं और यज्ञ से उत्पन्न शक्तियाँ ब्राह्मणों के लिए हैं। वैश्यसमूह गोपालक था। ये-ये शक्तियाँ जिनमें हैं, उनके पास विजय, बुद्धि और शोभा विद्यमान है ॥३ ॥

# ग्रन्थसंपूर्तिः ।

इतिवृत्तं सदसद्वा रजस्तथाऽऽकाशमपरं च ॥
आवरणं च तथाम्भोऽथामृतमृत्यू अहोरात्रौ ॥१ ॥
दैवः संशयवादः सिद्धान्तश्च श्रुतावुदिताः ॥
द्वादशवादा विहिताः शास्त्रेऽस्मिन् ब्रह्मविज्ञाने ॥२ ॥
तेष्वाद्ये विज्ञानेतिवृत्तवादे प्रकरणानि ॥(५)
ब्राह्मं दैवं भारतमार्षं विज्ञानसूत्रं च ॥३ ॥
तत्र च भारतवृत्ते पञ्च निरुक्ता. परिच्छेदाः ॥
भारतपरिचय आद्यस्तथार्य्यदासीय इत्यन्यः ॥४ ॥
विज्ञानभवनसंज्ञो दस्युवधो विजयकीर्तनप्रमहः ॥
पञ्चप्रसङ्गमित्थं भारतवृत्तं शुभायास्तु ॥५ ॥

इति मधुसूदनविद्यावाचस्पतिप्रणीतस्य ब्रह्मविज्ञानशास्त्रसंबन्धिनो विज्ञानेतिवृत्तवादस्य द्वितीयपर्वणि भारतवर्षीयार्य्योपाख्याने इन्द्रविजयाभिनन्दनं नाम पञ्चमः प्रसङ्गः सम्पूर्णः ।

# मधुसूदनकृतमार्य्यविजयकाव्यं सम्पूर्णम् ॥

# ग्रन्थपूर्ति

इस ब्रह्मविज्ञानशास्त्र में इतिवृत्तवाद, सदसद्वाद, रजोवाद, व्योमवाद, अपरवाद, आवरणवाद, अम्भोवाद, अमृतवाद, मृत्युवाद, अहोरात्रवाद, देववाद और संशयवाद तथा सिद्धान्त जो श्रुतियों में कहे गए हैं, ऐसे द्वादश वादों का प्रतिपादन किया गया है ॥१-२ ॥

इस विज्ञनेतिवृत्तवाद में पांच प्रकरण हैं, जिनके नाम हैं - ब्राह्म, दैव, भारत, आर्ष और विज्ञानसूत्र ॥३ ॥

इनमें भारतवृत्त (भारत नाम के प्रकरण) में पांच परिच्छेद कहे गए हैं। इन पांच परिच्छेदों में "भारतपरिचय" प्रथम प्रकरण है तथा आर्यदासीय प्रकरण द्वितीय प्रकरण है ॥४ ॥

विज्ञान भवन नाम का तृतीय प्रकरण है, दस्युवध (दस्युनिग्रह) चौथा तथा पांचवा विजय-कीर्तनप्रमह (इन्द्रविजयाभिनन्दन, नामक महोत्सव)। इस प्रकार पांच प्रसंगों से युक्त यह भारतवृत्त (भारतवर्षीयार्योपाख्यान) नाम का प्रसंग कल्याणकारी होवे ॥५॥

**इस प्रकार विद्यावाचस्पति पं. मधुसूदन ओझा द्वारा प्रणीत ब्रह्मविज्ञानशास्त्र से सम्बद्ध विज्ञानेतिवृत्तवाद के द्वितीय पर्व में भारतवर्षीयार्योपाख्यान प्रकरण में इन्द्रविजयाभिनन्दन नाम के पंचम प्रसंग का अनुवाद समाप्त हुआ।**

**स्व. पं. श्री मधुसूदन ओझा द्वारा विरचित आर्यविजयकाव्य सम्पूर्ण।**

